| विषयाः | | सूत्रम् | पृष्ठम् |
|---|---|---|---|

## चतुर्दशः प्रश्नः

| | | | |
|---|---|---|---|
| सप्तत्रिंशत्सिरावृतपादजानुपद्मादीनां तत्तन्नक्षत्रात्मकत्वं तत्तद्वर्णबोधकत्वं च | .... | 1–29 | 293 |
| संक्षेपतः कालनिरूपम् | .... | 30–35 | 296 |
| तत्तन्नक्षत्रेषु तत्तद्रोगाविर्भावकथनन् | .... | 36–62 | 296 |
| अश्विन्याद्यार्द्रान्तनक्षत्रविगतियोगग्रहयुक्तकालसंयोगवशाज्जाततत्तद्रोगप्रातिपादनं, तन्निवर्तकद्रव्यकथनं, तत्तन्नक्षत्रदेवता प्रार्थनादिरूपभेषजनिरूपणं च | .... | 63–87 | 297 |

## पञ्चदशः प्रश्नः

| | | | |
|---|---|---|---|
| पुनर्वस्वादिनक्षत्रविगतियोगग्रहयुक्तकालसंयोगवशाज्जाततत्तद्रोगप्रतिपादनं, तन्निवर्तकद्रव्यकथनं तत्तद्देवताप्रार्थनादिकं च | .... | 1–62 | 299 |
| रक्तपित्तविकारकारकाः | | 63 | 303 |
| तन्निवर्तकाः | | 64 | 303 |
| रक्तपित्तामयप्रकोपहारकद्रव्यनिरूपणम् | | 65 | 304 |
| श्वासकासरक्तप्रकोपहारकद्रव्याणि | .... | 68 | 304 |
| हिध्मारोगनिवर्तकद्रव्याणि | .... | 71 | 304 |
| धातुकार्श्यकारकामयघातकद्रव्याणि | .... | 73 | 305 |
| चूर्णीकृतपटोलादिद्रव्याणां रक्तपित्तामयादिविनाशकत्वम् | .... | 74–79 | 306 |

## षोडशः प्रश्नः

| | | | |
|---|---|---|---|
| तत्तद्रोगविघातकलेह्यादिरूपतत्तद्द्रव्यगुणप्रतिपादनम् | .... | 1–46 | 306 |


—o—

श्रीः

# आयुर्वेदसूत्रम्

## सभाष्यम्



वप्रक्रीडोद्धद्दन्तघातनिर्यन्महांशुभिः ।
मेरोरात्माऽऽवृतो भाति तं वन्दे सिन्धुराननम् ॥

परमकारणीभूतपरब्रह्म सकलजीवनोपकारकमायुर्वेदं प्रजापतिब्रह्मणेऽनुजग्राह ।

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इत्युक्तरीत्या अथशब्देन परममङ्गलमाचरन् प्रथमसूत्रमनुगृह्णाति—अथेति ।

**अथातो धातुस्थदोषगत्यविकारहेतुभूतार्थ[1] वार्धकद्रव्याण्यद्यात् ॥१॥**

अस्यार्थः—धातुषु तिष्ठन्तीति धातुस्थाः दोषाणां गतिःविकाराभावकार्यहेतुपूर्विका गतिः तासां हेतुभूतार्थानि अप्रकोपकारकाणि वार्धकद्रव्याणि भोज्ययोग्यानि अद्यात् इति सूत्रार्थः । धातुषु—

'रसासृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः'[2] ।

इत्युक्तेषु संचारार्थं तिष्ठन्तीति धातुस्थाः । ते च ते दोषाश्चेति समानाधिकरणसमासः ।

---

[1] वार्धिक. [2] अष्टाङ्गसूत्रं I—13.

वायुः पित्तं कफश्चेति त्रयो दोषास्समासतः [1] ।

आतुवृद्धिकारकद्रव्याणां तावद्वृद्धिमात्रफलमुद्दिश्य प्रवृत्तिश्चेत् अल्प-फलमिति आयुर्वेदप्रवृत्तेः बहुपुरुषार्थप्रदायकत्वादित्याशयं मनसि निधायाह— चिरेति ।

**चिरायुरिच्छा[2]प्रवृत्तिरायुर्वेदार्थपुरुषार्थोपपादिका ॥**

चिरशब्देन कार्यसिद्धिद्रव्यादने जाते आयुष्कामयमानस्य प्रवृत्तिः इच्छतः पुरुषस्य चिरायुर्मे भूयादिति कामनाविषयकप्रवृत्तिः शास्त्रसम्प्रदाय-कथितविषयकानुभवहस्तकौशल्यादिपाण्डित्यं यस्यास्ति तस्य ईदृशप्रवृत्तिः पुरुषार्थोऽयमिति चिरायुरिच्छाप्रवृत्तिविषयः । आयुर्वेदार्थपुरुषार्थोपपादिकेति प्रयोजनम् । अत्र सूत्रस्थानवचनम्—

आयुष्कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥

नन्वस्मिन् शास्त्रे प्रयोजनं आयुर्वेदार्थपुरुषार्थोपपादिकेति प्रयोजन-मित्युक्तं तथा सति रोगाभावकार्यहेतुतायाः कारणत्वं न स्यादित्यस्वरसादाह— तद्धेत्विति ॥

**तद्धेतुभूतार्थं रक्षेत् ॥ ३ ॥**

तद्धेतुभूतार्थो नाम अरोगकार्यहेतुभूतार्थः । तदेव प्रयोजनम् । तद्रक्षणमेव फलीभूतार्थं तद्धेतुकरणीयमित्यर्थः । अत्र सूत्रवचनं—

विचारयित्वा सर्वाणि नित्यं देहं निरीक्षयन् ।
अविकारं निरीक्ष्यैनं पथ्येनैव च तं हरेत् ।
जीर्णाजीर्णविवेकत्वं जिह्वायां विद्यते नृणाम् । [3]

---

[1] अष्टाङ्गसूत्रं. I—6. [2] रिच्छेप्रवृत्ति. [3] अष्टाङ्गसूत्रं I—2.

एवं कारेण विकारं ज्ञात्वा तन्निवर्तनं पथ्यादनमेव भाव्यम् । तद्धेतुभूतार्थं विदमेव संरक्षणीयम् । हीनातिमात्रान्नादनं विकारहेतुकम् । तन्निवर्तकहेतुभूतार्थं रक्षणीयमिति तात्पर्यम् ।

इन्द्रियातिलालनातिपीडनयोः विकारहेतुकत्वं न स्यादित्यस्वरसादाह—नेति ।

## नेन्द्रियातिलालनातिपीडनौ ॥ ४ ॥

इन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि । तेषां शब्दस्पर्शरूपरसगन्धा विषयाः । वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि । हितमितप्रवृत्तिविषयकं कुर्यादित्यर्थः । ननु हीनभोजनातिभोजनयोः रोगहेतुकत्वं प्रतिपादितम् । तत्र वचनं—

भोजनं हीनमात्रं तु न बलोपचयौजसे ।[1]
अतिमात्रं पुनस्सर्वानाशु दोषान्प्रकोपयेत् ॥

एतद्वचनानुसारेण अनयोरेव हेतुत्वं प्रतिपादितं, नेन्द्रियातिलालनातिपीडनयोः । तस्मादेतत्सूत्रं व्यर्थं स्यादित्यस्वरसादाह—दोषेति ।

## दोषवृद्धिक्षयोपपादकौ ॥ ५ ॥

दोषाणां वृद्धिरपि दोषरोगहेतुर्भवति । दोषाणां क्षयोऽपि दोषप्रकोपहेतुर्भवति । दोषहेतुकत्वं नाम दोषप्रकोपहेतुकत्वम् । दोषविकारस्य वृद्धिक्षययोश्च कार्यकारणभाव उद्दिष्टः नेन्द्रियातिलालनातिपीडनयोरिति । अत्र वचनं—

न पीडयेदिन्द्रियाणि न च तान्यतिलालयेत् ।[2]

---

[1] अष्टाङ्गसूत्र VIII—3-4. [2] अष्टाङ्गसूत्र I—29.

इति । दोषाणां वृद्धिक्षययोरुपपादकत्वमनयोरेव वृद्धिप्रतिपादकत्वात्—

वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः ।

एतयोरेव कार्यकारणभावः । परम्परया कारणत्वं वक्तुं शक्यत इत्यर्थः ॥

ननु दोषवृद्धिक्षयौ स्वत एव प्राप्तौ, नेन्द्रियातिलालनातिपीडनयोः । तयोः कार्यकारणभावस्तु कालवशादेव प्राप्तः । तत्र सूत्रस्थानवचनं—

चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।
वर्षादिषु तु पित्तस्य श्लेष्मणश्शिशिरादिषु ॥ [1]

एतद्वचनानुसारेण अनयोः कार्यकारणभावः कथं वक्तुं शक्यत इत्यस्वरसादाह—लक्षणेति ।

लक्षणान्यपि तथा ॥ ६ ॥

अप्राप्तकाले प्राप्तलक्षणानि यत्र भासन्ते प्राप्तकाले तल्लक्षणाभावो यत्र भासते तत्र नियमः । लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः । तत्र सूत्रवचनं—

कालार्थकर्मणां योगा हीनमिथ्यातिमात्रकाः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ।
रोगस्तु दोषवैषम्य दोषसाम्यमरोगता ॥ [2]

असाधारणधर्मवचनहेतुज्ञानजन्यामयनिवर्तकयोग्यकार्यं व्यपदिशति— योग्यैरिति ।

---

[1] अष्टाङ्गसूत्रं XII—24. [2] अष्टाङ्गसूत्रं I—19-20.

[1]योग्यैस्तच्च निवर्तयेत् ॥ ७ ॥

अभिघातामयजन्यरुङ्निवर्तकरेचकोपयोगिद्रव्यरसैः भाव्यं यत् तद्योग्यमित्यर्थः । यावदभिघातामयस्तच्छब्दार्थः । तं निवर्तकद्रव्येण रेचयेदिति । अत्र सूत्रवचनं—

आमदोषं महाघोरं वर्जयेद्विषसंज्ञितम् ।
विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः [2] ॥

ननु इन्द्रियाणां रोगहेतुकत्वं प्रतिपादयितुं इन्द्रियातिलालनातिपीडनाद्भवतीति यदुक्तं तन्न रोचते । अतिमात्रभोजनमामहेतुकं भवति । आमसंग्रह एव सर्वरोगकारणम् । आमनिवर्तकत्वं युक्तमित्यस्वरसादाह— अनामेति ।

अनामपालनं कुर्यात् ॥ ८ ॥

यस्मादामसंग्रहाभावस्यैव रोगाभावहेतुकसामग्रीत्वं तस्मादनामपालनं प्रत्यहं विधिरिति । आमं पालयतीत्यामपालनं, आमपालनं न भवतीत्यनामपालनं कार्यमित्यर्थः । अत्र अनामपालनकर्मकरणस्य हेतुवचनं सूत्रे प्रतिभातम् ।

मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।
मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि [3] ॥

ननु ज्वरादीनामप्रवर्तकसामग्री जठराग्निप्रवर्तकसामग्री । तस्मादनामपालनमप्रयोजकं स्यादित्यत आह— आममिति ।

आमं हि सर्वरोगाणाम् ॥ ९ ॥

आममेव कारणमिति, हिशब्दः प्रसिद्धिवाचकः । अत्र सूत्रवचनम्—

---

[1] योगै. [2] अष्टाङ्गसूत्रम् VIII—14. [3] अष्टाङ्गसूत्रम् VIII—1.

आमाशयस्थो हत्वाग्निं [1] सामो मार्गान्विधाय च ।
विदधाति ज्वरं दोषः तस्मात्कुर्वीत लङ्घनम् ।

जठराग्निप्रवर्तकसामग्री यस्यास्ति तस्य सर्वभोक्तृत्वं वक्तुं शक्यते । चिरायुरपि लभ्यते ।

ननु सर्वेषां रोगाणामामनिवृत्तिरेव तत्र भेषजमिति वक्तव्ये सति ज्वरादावामनिवृत्त्यकरणं दोषहेतुकं भवति । आमनिवृत्तिरपि लङ्घनादेव भाव्येति लङ्घनकरणमप्यावश्यकमिति ब्रह्मणा प्रतिपादितमित्याह—आदीति ।

**आदिभूतमाह ब्रह्मा ॥ १० ॥**

उभयमपि रोगनिवर्तकप्रतिपादनादामशोषणार्थं लङ्घनकरणमपि परम्परा-हेतुभूतमिति ब्रह्मा आहेत्यर्थः । अत्र सूत्रवचनं—

[2] लङ्घनं कार्यमामे तु विष्टम्भे स्वेदनं भृशम् ।

इति वचनाल्लङ्घनेन आमनिवृत्तौ सत्यां तेन फलीभूतं किमासीदित्यत आह—तदिति ।

**[3] तन्निवृत्तिरनामयम् ॥ ११ ॥**

आमनिवृत्तेरेव पुरुषार्थो भूत्वा अरोगवान् भवति ।

दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ।
ये तु संशोधनैश्शुद्धा न तेषां पुनरुद्भवः ॥

इति लङ्घनपाचनैर्जितदेहस्य व्याधयो न पुनर्भवन्तीत्युक्तम् । तथा सति सर्वविषयात्मकानि पञ्चेन्द्रियाणि । मनस आत्मगोचरत्वं केनोपायेन हेतुना भाव्यमित्यत आह—अनामयीति ।

**अनामयी आत्मानं [4] सम्मन्यते ॥ १२ ॥**

---

[1] – [2] अष्टाङ्गसूत्रम् VIII—27. [3] तन्निवृत्तेरनामयी. [4] अनामया-त्मानम्.

पूर्वोक्तरीत्या देहस्य अनामयत्वं सम्पाद्य आत्ममनननिदिध्यासनयोगेन परमसुखं जीवोऽनुभवति । तत्र वचनं—

क्रमेणोपचिता दोषाः क्रमेणोपचिता गुणाः ।
गता ये च पुनर्भावं अप्रकम्प्या भवन्ति च ॥

अनामयकार्यकरणेन अरोगो भवन् स्वर्गसुखमेवानुभवतीत्यर्थः । एवमुक्तरीत्या देहस्य अनामयत्वं साधितम् । तावता आत्ममननसामग्री न प्रतिपादिता । किं अरोगवान्भवतीति दृढतरजठरानलवशत्वेन सर्वेन्द्रियाणां सर्वविषयभोक्तृत्वं साधितम् ! अनामयत्वमात्ममननसामग्रीमात्रजन्यत्वं न भवतीत्यस्वरसादाह—अहमिति ।

## अहम्प्रत्ययः कर्मकर्ता ॥ १३ ॥

अहंकाराधिष्ठितमात्रं रक्तोऽहं श्यावोऽहं इति प्रत्ययविषयकमहमिति ज्ञानम् । तथा ज्ञानवानहमिति अनुव्यवसायेन ज्ञातुं शक्तः सत्कर्माधिकारी भवेत् । सुकर्मणा आत्ममननं कर्तुं शक्यत इति ।

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।

इति धर्मविषयकज्ञानगोचरत्वेन परब्रह्मणः मनोविषयकज्ञानगोचरत्वं सिध्यति । अधिष्ठानभूतोऽयमात्मा, यस्सिध्यति स एव जीवात्मा । तावुभौ शरीराधिष्ठितावेव । तयोरन्यस्य सर्वभोक्तृत्वं व्यपदेष्टुमाह—स्थानेति ।

## स्थानवानहंकारी ॥ १४ ॥

परमात्मनामधिष्ठानरूपत्वं नोपपद्यते । तज्जीवात्मनां सम्भवतीत्याशयवानाहेत्यर्थः । यस्य यावत्कालो योगश्चरति तस्य अरोगित्वस्य स्वतस्सिद्धत्वादित्यत आह—यावदिति ॥

## यावदरोगी अभिमन्यते ॥ १५ ॥

शोषकपोषकद्रव्यविज्ञानानन्तरं अरोगकार्यहेतुकसामग्रीभजनात् 'अहमरोगवान्' इति व्यवसायज्ञानेन अभिमन्तुं शक्यत इत्यर्थः । यः अरोगी आत्ममनननिदिध्यासनयोगयोग्यो भवेत् तेन तत्तद्विषयगोचराणि पञ्चेन्द्रियाणि शरीरे संसृज्य आत्मानुगोचरान्तरिन्द्रियेण मनसा परमात्मा मन्तव्य इत्युक्तम् । बाह्येन्द्रियाणां बाह्यविषयगोचरत्वमप्रयोजकं स्यादित्यत आह-स इति ।

## स एव भुङ्क्ते ॥ १६ ॥

## [1]अजो ह्यधिष्ठाता ॥ १७ ॥

सर्वविषयानुभवो जीवस्सर्वमश्नुते । अत्र श्रुतिः—

> द्वा सुपर्णा सयुजा सखाया
> समानं वृक्षं परिषस्वजाते ।
> तयोरन्यः पिप्पलं स्वाद्वत्ति
> अनश्नन्नन्यो अभिचाकशीति ॥

इति श्रुतिरेव अत्र प्रमाणम् । इच्छति, जानाति, प्रयतते इति सर्वकार्यस्य आत्मनः आत्ममनस्संयोगस्य कारणत्वं प्रतीतम् । अतस्सर्वविषयभोक्तृत्वं जीवात्मन उपलब्धेः । तस्मात्परमात्मनाऽनुभूयत इत्याह—भुङ्क्ते इति ।

## भुङ्क्ते विषयभोगान् ॥ १८ ॥

स्वप्रकाशरूपः परमात्मा सच्चिदानंदानुभवविषयवानिति तात्पर्यम् । सत्यं ज्ञानमनन्तं ब्रह्मेति सत्यानन्तज्ञानं स्वविषयानन्दात्मनः परमात्मा ।

---

[1] अजौ ह्यधिष्ठितौ.

ननु एकस्सकलविषयभोगान्भुङ्क्ते । भोगाः कर्माधीनाः । जीवस्य कर्मभोक्तृत्वं विधिरिति वक्तव्ये सति उपस्थितविषयभोक्तृत्वं जीवस्य, परमात्मनः सर्वविषयभोक्तृत्वं भासते, सर्वज्ञत्वात् । उभयोः कर्मभोक्तृत्वं प्रसक्तमित्यस्वरसादाह—अन्य इति ।

**अन्यः कर्म भुङ्क्त ॥ १९ ॥**

अन्यो जीवात्मा कर्माधिकारी सन् स्वकर्माधीनविषयभोगान् भुङ्क्त इत्यर्थः । सुकर्मणा सुखप्रदानविषयफलं भुङ्क्ते । दुष्टकर्मणा दुःखविषयकफलं भुङ्क्ते । भोगस्य सुखदुःखात्मकत्वात् । सुखदुःखानुभवो भोगः जीवस्य लक्षणं प्रतिभासितम् । जीवस्य सकलविषयानुभवत्वं प्रसज्यत इत्यर्थः । दुष्टकर्मजे शरीरे सति सत्कर्मैव सदा कुर्यादित्यर्थः ।

परमात्मनः सत्कर्मविषयककर्मकरणत्वं विधिः । ईश्वरस्यापि यत्किंचित्कर्मजनककर्माधिकारित्वं प्रसक्तमित्यस्वरसादाह— य इति ।

**यः कर्ता कर्मभोगी ॥ २० ॥**

राजसतामसफलप्रदहेतुकद्रव्यादनजातसुखदुःखफलं अहंकारविशिष्टकर्माधिकारिणः प्रयच्छत इति । साक्षात्कर्मणः फलावश्यंभावनियमादित्यत आह—कर्तेति ।

**कर्ता शरीरी ॥ २१ ॥**

यावत्कर्मकर्ता शरीरी अत्र कर्ता भवतीत्यर्थः । यत्किंचित्फलमुद्दिश्य यः कर्म करोति स शरीरीत्युक्तम् । शरीराभावादात्मन अन्नादनत्वं न योग्यमित्यस्वरसादाह—अशरीरीति ।

अशरीरी नान्नमत्ति ।। २२ ।।

कर्मफलयोः कार्यकारणत्वं नियमेन अन्नादनत्वम् स्वकर्मानुकूलफलं लभ्यते । तच्छरीरिणः स फलं प्रयच्छतीति भावः । अहरहर्मनुष्या अशनमिच्छन्ति । प्रत्यहमशनार्थं लोके तत्फलोपयोगि कर्म चेत्कृतं तत्र फलाभावो न दृश्यते । तत्रापि शरीरमस्ति । तस्मात् कर्मफलयोः कार्यकारणभावो नास्तीत्याह नेति ।

[1] न केवलं शरीरं भोगयोग्यमात्मनो योगात् ।। २३ ।।

प्रथमतः शरीरोत्पत्तिकालः तज्जन्मान्तरसंस्कारादेव बालकादीनां स्तन्यपानादिफलं प्रयच्छतीत्यर्थः ।

ननु बालकादीनामपि शरीरमस्ति, तत्र कर्म न कृतं, तेषामयोग्यत्वात् । स्तन्यपानादिफलं मात्रा दीयते । तस्मात्कर्मफलयोः कार्यकारणभावो वक्तुं न शक्यत इत्यत आह—भोगयोग्यमिति । तदानीं दृष्टकर्माभावेऽपि जन्मान्तरकर्मकरणं कल्प्यते, शरीरवत्त्वादात्मनः । शरीरधारणस्योचितत्वादेव बालकादीनां स्तन्यपानादिकं मात्रा दीयते इति चेन्न । शरीरधारणादीनां जन्मान्तरकर्महेतुफलत्वं कल्प्यते । आत्मनश्शरीरवत्त्वात् आत्मनश्शरीरधारणस्योचितत्वात् । आत्मसंयोगकारणभूतस्य शरीरिणो भोगायतनत्वं जीवस्य प्रतीतम् । तस्माच्छरीराधिष्ठानयोग्यत्वं नान्यस्येत्यत आह—अजाविति ।

अजौ ह्यधिष्ठितौ ।। २४ ।।

---

[1] अहरहर्मनुष्या अशनमिच्छन्ति इत्यधिकपाठः.

न जायत इत्यजः। तौ जीवात्मपरमात्मानौ शरीराधिष्ठितावित्यर्थः। घटज्ञानवानहमिति यस्य प्रतीतिस्तस्यैव विषयानुभवत्वं अनयोरन्यतरस्य सम्भवतीत्यर्थः। अत आह—अन्य इति।

**अन्योऽन्नमत्ति ॥ २५ ॥**

शरीराङ्गानि इन्द्रियाणि. अङ्गी शरीरी। जीवात्मन इन्द्रियगोचरविषयानुभवार्थं तदङ्गभूतेन्द्रियाणि संसृज्य जानाति, इच्छति, प्रयतते, इत्येतत्प्रत्ययान्यथानुपपत्त्या जीवात्मा अन्नमश्नुते। तद्व्यतिरिक्तात्मना किं तदनुभूयत इत्याशङ्कायामाह—अनत्तीति।

**अनत्त्येवमन्यः ॥ २६ ॥**

अन्यस्य परमात्मनः सर्वविषयानुभवत्वं प्रसिद्धमिति अन्यस्य फलेनाविशिष्टत्वात् एतादृशार्थफलं अनत्ति स्वयं स्वप्रकाशात्मकत्वात् स्वयमेवानुभवतीत्यर्थः।

विकारकार्यहेतुकसामग्रीविषयककार्यानुभवशरीरमस्यात्मनो भोगयोग्यं स्यादित्यत आह—सतीति।

**सति शरीरे भोगाय ॥ २७ ॥**

शरीरे सति सर्वविषयभोगार्हत्वमात्मना सम्पादितमित्याहेत्यर्थः। शरीरिणः कान्यङ्गानि ? पञ्चेन्द्रियाणामप्यङ्गत्वं प्रतिपादितम्। मनस अगोचरत्वेन मनसोऽन्तरिन्द्रियत्वेन षडित्युपदिष्टम्। षण्णामात्मनो भोगविषयप्रापकहेतुभूतार्थत्वात्। तस्माच्छरीरस्य भोगयोग्यत्वमिति स्वत एव सिद्धत्वात्। विषयविज्ञानमिन्द्रियाधीनं इन्द्रियाणि च शरीराधिष्ठितानि। सर्वविषयाः शरीराधीना इत्यर्थः।

ननु प्रवृत्तिर्द्विविधा इष्टप्राप्त्यर्थमनिष्टपरिहारार्थं चेति । स्वाधिष्ठानानुभूतशरीरं संरक्षणीयमित्येका प्रवृत्तिः । सा द्विविधा प्रवृत्तिरात्मन् उपपद्यते । तत्कथं शरीराङ्गभूतानि पञ्चेन्द्रियाणि? तद्द्वारा इष्टप्राप्तिरूपफलं कथं लभ्यते? अनिष्टपरिहारद्वारा इष्टप्राप्तिरूपफलमपि लभ्यते? अनिष्टपरिहारद्वारा उभयफलं शरीरिणो भाव्यमित्यत आह—अष्टेति ।

अष्टाङ्गी शरीरी ॥ २८ ॥

अष्टानामङ्गानां समाहारः अष्टाङ्गम् । शरीरमस्यास्तीति शरीरी । अत्र सूत्रवचनम्—

कायबालग्रहोर्ध्वाङ्गा शल्यदंष्ट्राजरावृषान् ।
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता[1] ॥

शरीरोपद्रवकार्यकारणीभूतव्याधय औपाधिकभूताः वातपित्तकफप्रकुपितहेतुकधातवोऽपि न प्रवर्धन्त इति अष्टरोगाणां अङ्गत्वं प्रतिपादितम् । शरीराणामेतादृशा व्याधयः । तेषां धातूनामङ्गत्वं प्रतिपादितम् । सप्तधातुमयं शरीरमिति अङ्गोपद्रवकारकव्याधीनां परम्परया अङ्गत्वं प्रतिपादितमित्यर्थः ।

ननु धातुप्रवर्धकद्रव्याणामङ्गत्वं वक्तव्यं चेत् तथा सुकरमिति धातुविनाशकारकाणां शरीरनाशकानां अङ्गत्वं कथं स्यादिति चेन्न, शरीरभावकार्यस्य व्याधीनां कार्यकारणभावस्य वक्तुं शक्यत्वादित्यर्थः ।

शरीरविनाशहेतुभूतानामष्टरोगाणां लक्षणप्रमाणे व्यपदिशति—यावदिति ।

---

[1] अष्टाङ्गसूत्रम् '—5,

यावत्कृतिविधेः कायः ॥ २९ ॥

यावन्निदानज्ञानविषयकज्ञानजन्यसाधकीभूतनिवर्तकानां कृतिः काये निवर्त्यः। तत्रैतयोः यावद्विधिः यावच्छास्त्रोक्तकर्मसहिष्णुत्वं यस्य निवर्तकं भवति स एव काय इति उपदेशः। अत्र सूत्रवचनम्—

शोधनं शमनं चेति समासादौषधं द्विधा।
शरीरजानां दोषाणां क्रमेण परमौषधम् ॥[1]

शरीरत्वावच्छेदेन कायबालशरीरस्याप्येकत्वेन क्रमेण परमौषधमिति कायबालचिकित्साभेदेन विवक्षितत्वात्क्रमशब्दार्थो विवक्षितः। ननु काय-बालामयौ आमहेतुजन्यामरोगनिवर्तकसामग्र्यां सत्यां तज्जन्यरोग-निवृत्तेर्दृष्टत्वात् तज्जातामयौ कायबालेति प्रतिपादितौ। तदन्यजातरोगा ग्रहा ग्रहजातरोगाः। तेषां का गतिरित्याशयवानाह—आमेति।

आमजामयकार्यहेतुकचित्तक्षोभभयनिग्रहविग्रहो ग्रहः ॥ ३० ॥

अत्र केचित्—आमजन्या व्याधयः। तेषां किंचित्सामग्रीप्रयुक्तकर्म तत्र भेषजम्। ग्रहाभिभूतामयानां आमनिवृत्तिकर्मकरणस्यायोग्यत्वात्, अत्र तन्निवर्तकसामग्र्या अननुभूतत्वात्, शास्त्रतः अदृष्टत्वाच्च। तस्मादे-तत्सूत्रमयुक्तमिति वदन्तं प्रति परिहर्तुकामस्सूत्रं व्याचष्टे—आमेति।

तद्रोगनिवर्तकतद्ग्रहनिग्रहरूपं तत्र भेषजम्। मन्त्रतन्त्रबलिप्रदानादयो निवर्तकाः। ग्रहेष्वनुगुणेष्वेकदोषमार्गा ग्रहजन्यादिरुजोऽपि बलिदान-मन्त्राद्यैः निवर्तनैः निवर्तयितुं सुखेन शक्या भवन्तीत्यर्थः। तत्र सामग्री-

[1] अष्टाङ्गसूत्रम् I—24-25.

ग्रहरूपमन्त्रैः भयनिग्रहो भवति । आमहेतुकसामग्रीजन्यरोगाभावादित्यर्थः । ऊर्ध्वाङ्गजाता अनेकरोगाः पूर्वोक्तप्रकारनिर्वतका निवर्त्याः ते ऊर्ध्वाङ्ग जातरोगा बहवो दृष्टाः । तन्निदानमेतद्भिन्नविषयकम्, एतन्निदानस्यापि तद्भिन्नविषयकत्वात् । कर्णनेत्रशिरोनासिकाजिह्वास्थितपवनपित्तप्रकोपकारकाः तद्धेतुकार्याहेतुकार्यहेतुभूतामयाः कारणजन्याः इत्यूर्ध्वाङ्गरोगान्विशिनष्टि— आमेति ।

आमजामयकार्यहेतुकान्यहेतुकामयनिवर्तका अपूर्वाङ्गहेतुकाः ॥ ३१ ॥

पूर्वकायहेतुकजातरोगकार्यहेतुकसामग्रीजन्यहेतुप्रतिपादनात् उत्तर-कायाधिष्ठितरोगप्रतिपादकामजातरोगकार्यहेतुस्थिताः निवर्तकैः निवर्तयितु योग्या भवन्तीत्यर्थः ।

रेचकलङ्घनाभ्यां निवर्तयितुमयोग्या इत्याशङ्क्य तदामयानां तन्निवर्तकाः प्रकाश्यन्ते—दोषेति ।

दोषसञ्चाराभावजास्थिकर्णनासादिसन्धिजरुजश्शस्त्रेणैके निवर्तकाः ॥ ३२ ॥

दोषाः वातपित्तकफाः प्रकुपिताः । विकारहेतुभूतसञ्चारजन्य-कर्णनासादिसन्धिजातदुष्टरक्तशल्यरूपरुजां तन्निवर्तकानि शस्त्रक्षाराग्निकर्माणि शिरोऽस्थिरक्तं विमोचयन्तीत्यर्थः । तत्र वचनं—

शस्त्रादिसाधकः कृच्छ्रसङ्करे च ततो गदः ।
एकशब्देन एकेषां मुख्यत्वं प्रतिपादितम् ॥

तन्निवर्तका इति बहुजातरुङ्निवर्तका न भवन्तीत्यर्थः। दोषहेतुकास्ते च रुजो धातुविनाशकाः। तन्निवर्तकप्रकारकाः औषधादयः। अत्र वचनं—

नावनाञ्जनपानेषु योजयेद्विषशान्तये।
विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा॥
सूक्ष्मं ताम्ररजःकाले सक्षौद्रं हृद्विशोधनम्।
शुद्धे हृदि ततश्शाणं हेमचूर्णस्य दापयेत्।
न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम्॥[1]

इति वचनात्।

अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः।
योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः॥[2]

इति वचनान्तरेणापि सूत्रार्थो ज्ञाप्यत इति व्याधिहेतुकद्रव्यादनाज्ञातरोगाणां तन्निवर्तकौषधयोगवशाद्व्याधिनिवृत्तिरेव फलमिति अनिष्टपरिहारार्थमपि फलप्रवृत्तेर्दृष्टत्वात् स्वस्थानाभिवर्धकसर्वभोक्तृत्वं कथं स्यादित्यत आह—प्रकाशमानेति।

**प्रकाशमानप्रथमप्रयाणाधिगतनिस्सृतामृतप्रतिप्रयाणाहृतयोगविभागधातुपोषकसुरसादनादरोगवानजरः॥ २३॥**

अग्निजस्वरूपकुण्डल्युद्भवश्वासानिलजातेनोष्मणा प्रकाशमानस्सन् प्रथमप्रयाणादुत्थितसहस्रकमलादागतामृतमाहृत्य यथायोगं सप्तधातून्सन्तर्प्य यो योगं करोति स चिरायुर्भवति। शुद्धरसादनाच्च फलं भवतीति अजरत्वं सुप्रसिद्धमित्यर्थः। अत्र कविवाक्यं—

---

[1] अष्टाङ्गसूत्रम् VII—26-28. [2] अष्टाङ्गसूत्रम् VII—2.

षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षो रसायनम् ।
भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ।। [1]

इतः परं शारीरविषयकयोगक्रमविधिं प्रतिपादयिष्याम इत्युक्तम् । इदानीमिष्टप्राप्तिरूपफलं वक्तुं "आयुष्कामयमानो योगं कुर्यात्" इति यत्प्रतिपादितं, 'सर्वजने दुष्कृतमिति' तत्तद्दुरितबाहुल्याद्दुःखदोऽयमिति आशयवान् सूत्रान्तरमाह—कायेति ।

**कायकालाधिकाले चरमधातुप्रवर्धकरसवद्द्रव्यैर्वाजीकरणं कुर्यात् ।। ३४ ।।**

रसायनं च सेवेत धातुपुष्टीन्द्रियप्रदम् ।

इति वचनात् ।

[2] यावद्वर्गोत्तमद्रव्यैर्यत्प्रधानप्रमापिताः ।
तावद्रसा विरुद्धापूः तद्रसायनमीरितम् ? ।।

इति रसायनलक्षणम् । रसायनविधौ कर्मविधौ क्रमः रत्नवर्गोक्तद्रव्येषु वज्रस्य रसद्रव्यत्वात् स श्रेष्ठो भवति । मणिवर्गोक्तद्रव्येषु कान्तमणिः रसद्रव्यत्वात् श्रेष्ठो भवति । पाषाणवर्गेषु रसवद्द्रव्यत्वादभ्रकस्य श्रेष्ठत्वम् । सत्ववद्द्रव्यवर्गेषु भूनागसत्वस्य रसवद्द्रव्यत्वात् श्रेष्ठत्वं भवति । रसवद्-द्रव्योपाधिकभेदद्रव्येषु रसेन्द्रस्य रसवद्द्रव्यत्वात् श्रेष्ठत्वं भवति । संस्कारादि-कर्मसु बीजकर्मकरणस्य रसवद्द्रव्यत्वात् श्रेष्ठत्वं भवति । अत्र 'चिरायुरि-च्छाप्रवृत्तिविषय आयुर्वेदार्थपुरुषार्थोपपादिका' इति प्रयोजनं तथा एकैकस्य कार्यकारणभावज्ञानं तत्तद्विषयकज्ञानगोचरज्ञानं प्रयोजकमिति तत्सर्वं

---

[1] माघकाव्यम् II—93. [2] दुष्परिष्कारोयं श्लोकः.

सङ्गृहीतम् । एवं पुरुषार्थोपपादितो वेदितव्य इत्याह—य इति ।

**य एवं वेद ॥ ३५ ॥**

एवमुक्तप्रकारेण ज्ञातव्य इत्यर्थः ।

एतावता निवर्त्यनिवर्तकज्ञानं जातम् । तावता उत्तमपुरुषार्थरूपफलं कथं लभ्यते इत्यत आह—सेति ।

**स चिरायुर्भवति ॥ ३६ ॥**

ननु निवर्तका लोके बहवस्सन्ति । एकदा सर्वविषयकपदार्थज्ञानं सम्पादनीयं, सर्वशरीराणां निवर्तकज्ञानं परमपुरुषार्थ इत्यर्थः । एतत्पदार्थज्ञानानन्तरं ज्ञानविषयककार्यकारणचिरकालजीवितस्य पुरुषार्थ उपलभ्यते ।

एतज्ज्ञानविषयकज्ञानमेव भेषजं भवतीत्याह—तदिति ।

**तदेव भेषजम् ॥ ३७ ॥**

भेषजज्ञानानन्तरं चिकित्साकर्म व्याचष्टे—सेति ।

**सैव चिकित्सा ॥ ३८ ॥**

नराश्वगजादिशरीराणां नानाविधरोगास्सम्भवन्ति । तन्निवर्तकानि वृक्षलतादियोग्यद्रव्याणि षड्रसात्मकपदार्थोपकारकाणि । आयुर्वेदप्रतिपादितार्थमालोकनं कुर्यादित्याह—तावदिति ।

**तावद्द्रव्यावलोकनं कुर्यात् ॥ ३९ ॥**

दोषप्रकोपाभावकार्यहेतुभूतधातुदूषकयावद्विषयगोचरेन्द्रियाभिवर्धक—द्रव्यावलोकनं कुर्यात् ।

षड्रसात्मकद्रव्याणि व्याचष्टे—रसा इति ।

**रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः तत्परित्राणकाः ॥४०॥**

देहस्य सप्तधातुमयत्वात् ते रसास्सप्तधातून्यथाक्रमं परिपालयन्ति । तेन सप्त धातवः प्रत्यहं त्रायन्त इति तत्परित्राणकाः । तत्र वचनं—

ते रसा नु रसतो रसभेदाः
तारतम्यपरिकल्पनया च ।
सम्भवन्ति गणनां समतीताः
दोषभेषजवशादुपयोज्याः [1] ॥

तत्परित्राणकाः शरीरस्थितदोषान्समासन्तः शरीरसंरक्षका रसाः । रसादीनां प्रकोपरूपकार्यकारणत्वं वक्तुमयोग्यत्वात् तदर्थं दोषा एव सुप्रसिद्धाः । अतस्त्रयाणां षड्भिरसाकं कार्यकारणभावः प्रसिद्ध इत्यत आह—स्वाद्विति ॥

**स्वाद्वम्लकटुकाः पाया रसाः ॥ ४१ ॥**

**यथा समदोषा यथाग्निप्रवर्तकाः ॥ ४२ ॥**

ते रसाः पाके स्वाद्वम्लकटुका भवन्ति । रसास्समाश्चेद्दोषा अपि समा एव । ते दोषा रसान्वयादिना प्रकोपरहितास्सन्तः जठराग्निप्रवर्तका इत्यर्थः । अत्र सूत्रवचनं—

त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ।

षड्रसानां पाके त्रिधा विभावित्वं प्रतिपादितम् । ननु षण्णां मध्ये त्रिधा विभावित्वं दोषत्रयाणामेव षड्भिरसाकं कार्यकारणत्वं भासते । तदन्यत्रयाणां का गतिरित्यत आह—सिद्धा इति ।

---

[1] अष्टाङ्गसूत्रम् XI—44.

**सिद्धाष्षट्पाके त्रयः ॥ ४३ ॥**

षड्रसास्त्रिधा भूत्वा दोषाणामप्रकोपकारका इति प्रतिपादितम् । तदेव विशिनष्टि—तिक्तेति ।

**तिक्तस्स्वादु पाके ॥ ४४ ॥**

तिक्तरसद्रव्यं पाचकपित्तेन पाके कृते सति स्वादुत्वं भजति ।

कषायरसोऽपि तद्रसवदम्लीभूतो भवन् कफपित्तप्रकोपं हरतीत्याह—कषायेति ।

**कषायोऽम्लरसः ॥ ४५ ॥**

कषाय अम्लो भूत्वा पाके अन्योन्यद्रव्यसंयोगगुणान् प्रयच्छति । कफपित्तप्रकोपस्य कषाययुक्ताम्लरसेन साकं कार्यकारणभावो भवतीत्यर्थः ॥

ऊषणरसोऽपि पाके लवणरसो भूत्वा कफपवनप्रकोपकार्यस्य लवणोषणरसौ कारणीभूतौ । तन्निवर्तकत्वेन कार्यकारणभावो भवेदित्याह—ऊषणमिति ।

**ऊषणं लवणः पाके ॥ ४६ ॥**

ऊषणरसो लवणद्रव्यं भूत्वा पवनकफहारीत्यर्थः ।

ननु मधुररसादिषड्रसाः सप्तधातुपोषकाः । कषायरसो रसासृग्धातुप्रवर्धकः । असृग्धातोरेव रसासृगिति व्यपदेशः । कषायरसपोष्य एकधातुर्भवति । तस्मादेकरसप्रवर्तकत्वेन पोषकत्वे कर्मणि एकधातुरिति व्यपदेशः । मांसधातूनां षड्रसा एव पोषका इति व्यवह्रियमाणत्वात्, लोके षड्रसवद्द्रव्यव्यतिरेकेण रसवद्द्रव्यस्य अदृष्टत्वात् षड्रसवद्द्रव्याभावस्य दृष्टानुभवत्वाच्च ।

अत्ररोगोत्पादकपदार्थानामदृष्टत्वेन तु उत्पादकद्रव्याणामसद्भावितत्वेन तद्रोगनिवृत्त्यर्थं शास्त्रप्रवृत्तिः कथं भवेदित्यस्त्ररसादाह—व्युत्क्रम इति ।

व्युत्क्रमरसा विकारकारकाः ।। ४७ ।।

स्वादुतिक्तयोर्मित्रत्वम् । कषायाम्लरसयोर्मित्रत्वम् । लवणोषण-रसयोर्मित्रत्वम् । एतद्व्यतिरिक्तानां एतद्व्यतिरिक्तपदार्थैरन्योन्ययोगे व्युत्क्रम-रसयोस्सत्त्वम् । तस्माद्व्युत्क्रमरसावेव कारकावित्यर्थः । तस्मात्कर्माधीन-वशात्पाके सम्भवति तत्र अदृष्टमेव नियामकम् । ईश्वरस्सर्वज्ञस्स एव स्वकर्मानुकूलफलं प्रयच्छति । प्रत्यहं सर्वरसादनत्वस्य सर्वशरीराणां सम्भावितत्वात् । अतः परमाप्तं पण्डितं स्वनिकटे संस्थाप्य भक्ष्याभक्ष्य-पदार्थौ विभज्य तत्सर्वं पण्डिताय विज्ञापयन् तेन अरोगकार्यकारणभावं जानन् प्रवर्तेत । तत्र वचनं—

राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् ।
सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः [1] ।।

व्युत्क्रमरसवद्द्रव्यादनमेव विषमान्नम् । तस्मादरक्षणीयं न किंचित् ।

ननु अहरहर्भक्षितान्नं जठराग्निना पच्यते । तत्क्रनपचनेन भक्षितान्नं भस्मीभवति । सर्वं सारकिट्टतया विभज्य तेन धातुपोषणं कथं क्रियत इत्यत आह—पाचकेति ।

पाचकपित्तं पचत्याहारम् ।। ४८ ।।

जठराग्निना भक्षितान्नं न पच्यते । तत् पाचकपित्तेन भाव्यम् । तेन सारकिट्टतया विभज्य किट्टकर्म कर्तुं योग्यमित्यर्थः । तत्र वचनं—

---

[1] अष्टाङ्गसूत्रम् VII—1.

पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् ।
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥

ननु पाचकपित्तं न सारकिट्टतया पृथग्विभज्य अन्नमात्रं पचति । दोषा दुष्टास्सन्तः धातून्दूषयन्ति । तेनावश्यं दोषपचनमपि कर्तव्यम् । तत्र वचनं—

आहारं पचति शिखी दोषानाहारवर्जितान्पचति ।
दोषक्षये च धातून्पचति हि धातुक्षयेऽपि च प्राणान् ॥

एतद्वचनानुसारेण पाचकोपकारकत्वेन जठरानल एव प्रतिभाति न तत्पित्तमित्यस्वरसादाह—दोषेति ।

**दोषधातुमलोष्मजं तथा ॥ ४९ ॥**

धातुदोषान्मलोष्मजान् पित्तद्विकारं विभज्य पचतीत्यर्थः । ननु दोषपचनं रोगनिवृत्तिकारणम् । पाचकपित्तेन आमान्तलङ्घनेन संशोष्य दोषस्थितविकारान्पचति । तत्र अनिलानलात्मककुण्डलिताभ्यां जातोष्मैव पाचकपित्तमिति व्यपदेशः । अन्यथा शुद्धानलस्यैवेति नाशङ्कनीयम् । तद्द्वंद्वं दोषे हृते तद्विपरीतगुणान्प्रयच्छतीत्याशयवानाह—ग्रहणीति ।

**ग्रहणीकलाऽऽयुस्तेजांसि दधाति ॥ ५० ॥**

बाह्यस्थितपदार्थानां गुणान्सङ्गृह्य दोषधातुस्थितदुर्गुणान्निगृह्य निग्रहं कृत्वा स्वार्जितगुणानुग्रहं कर्तुं समर्थं सत् पाचकपित्तम् । निग्रहानुग्रहयोः पाचकपित्तस्यैव समर्थत्वात् । पित्तकलायाः ग्रहणीपदं विशेषितम् । सा कला आयुस्तेजांसि दधाति । अत्र शारीरवचनं—

अन्नभौतिकधात्वग्निकर्मेति परिभाषितम् ।
अन्नस्य पक्ता सर्वेषां पक्तृणामधिको मतः ॥

---

[1] अष्टाङ्गसूत्रम् XII—10.

तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ।
तस्मात्तं विधिवद्युक्तैरन्नपानौदनैर्हितैः ।
पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः [1] ॥

इत्यादिवचनानि बहूनि सन्ति । कुण्डलपुरिथतश्वासानिलानलचक्रजातपित्तो-द्भवत्वादेव कलाज्वलने शिखिपदं प्रसिद्धम् । कुण्डलिनी अनला-निलात्मिका । तस्याः पित्तमस्तीति सकलमतसिद्धम् । सा कला ज्वलन-कला । सा देहं दहतीति यत्तद्युक्तम् । यावद्भुक्तान्नं सारकिट्टतया विभज्य दन्दह्यते । अन्नपचनकार्यमात्रपर्यवेन कुण्डलिन्युद्भवश्वासानिलस्यैव दहनरूपकर्मप्रतिपादकत्वम् । तत्सर्वशरीरान्तरस्थितं सत् जीवनोपकारं करो-तीत्यर्थः ।

ननु ग्रहणीकला आयुस्तेजो दधातीति यदुक्तं तन्न युक्तम् । हितमितान्नादनमेव शरीरदार्ढ्यरूपधारणं च करोति । तद्यथा पथ्यापथ्यविधिं विज्ञाय अन्नपानादने सति तुष्टिः पुष्टिश्च भवति । तदभावे कार्श्यं प्रतीयते । तस्मादेतयोरेव अन्वयव्यतिरेकाभ्यां कार्यकारणभावः । अन्नादनस्य निग्राहके रोगे सति स एव तदिति चेत् तैलादिना देहलेपनद्वारा धातुपुष्टिमिन्द्रियप्रदां कुर्यादित्यस्वरसादाह—भक्तमिति ।

**भक्तादनेनामाशयातिरोधनात् कलाऽबला भवति ॥ ५१ ॥**

भक्तमन्नम् । अन्नादनेनामाशयेऽतिपूर्णे सति कुण्डलिनीस्थितपित्त-कला अबला भवन्ती सती अन्नादनाजातपाकजन्यरसेन धातुं व्यापकं

---

[1] अष्टाङ्गसूत्रम् III—70-72.

कर्तुं असमर्था भवतीति कृत्वा तस्मात्कला अबला भवतीत्यर्थः । तत्र सूत्रवचनं—

मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ।
विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ॥
अकाले बहु चाल्पं वाभुक्तं तु विषमाशनम् ।
त्रीण्यप्येतानि मृत्युं वा घोरान्व्याधीन्सृजन्ति वा [1] ॥

एवमादिकारणेन कला अबला भवतीत्यर्थः । तदेव विरुद्धाहार इत्युच्यते । कला अबला सती अन्नं न पचति । स रोगोऽष्टप्रकारो भवति । नानाविधकार्योत्पादकसामग्रीभेदेन अजीर्णप्रधानाङ्गत्वेन ज्वरोपद्रवाः तद्भेदा भवन्तीत्याह—आमेति ।

**आमाशयातिपूर्णात् कलाऽबलादामाशयस्थितपवनगतिनिरोधानादनिलप्रकोपो हि भवति ॥**

कला दौर्बल्यात् "अजीर्णेन विना न ज्वरः" इति ज्वराः आविर्भवन्तीत्यर्थः । अत्र निदानवचनं—

स जायतेऽष्टधा दोषैः पृथङ्मिश्रैस्समागतैः ।
आगन्तुश्च मलास्तत्र स्वैस्स्वैर्दुष्टाः प्रदूषणैः ॥
आमाशयं प्रविश्यामममनुगम्य पिधाय च ।
स्रोतांसि पङ्क्तिस्थानाच्च निरस्य ज्वलनं बहिः ॥
सह तेनाभिसर्पन्तस्तपन्तस्सकलं वपुः ।
कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्तयन्ति ते [2] ॥

स ज्वर एकोऽपि ज्वरोपद्रवकारकहेतवो नानारूपा भवन्ति । तस्मात् नराश्वपशुगजादिषु बहुरूपा भवन्तीत्यर्थः । तत्तज्जातिविधि-

[1] अष्टाङ्गसूत्रम् VIII—33-33. [2] अष्टाङ्गनिदानम् II—3-5.

विहितान्नादनादजीर्णाज्जातज्वराः तदुपद्रवभेदेन अष्टधा भवन्तीत्यर्थः । अजीर्णाज्जातज्वरस्तु अष्टधा उपहूयत इति यत्तदयुक्तम्, भेदजनकसामग्र्य-भावादित्यस्वरसादाह—यादृशा इति ।

**यादृशा दोषास्तादृशानिलप्रकोपजातानलास्तादृशा ज्वराः ॥ ५३ ॥**

ये दोषप्रकोपहेतुकास्तद्विरुद्धरसजातास्तज्जन्यदोषाः पाचकपित्तादिपञ्च-प्रकाराः ते स्वस्थानच्युता बहुविधरूपा भवन्तीत्यर्थः । तत्र वचनं—

विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते ॥ [1]

तद्विरुद्धलक्षणज्ञापकहेतुभेदप्रदर्शनेन सत्यवच्छेदके ज्ञाते सति एक एव ज्वरः कार्यभेदेन नानारूपो भवतीति वक्तुं शक्यते । तल्लक्षणं ज्ञातं सत् तत्तद्भेदोऽपि ज्ञातुं शक्यत इत्यस्वरसादाह—अक्षीति ।

**अक्षिकर्णनासाशिरोरुग्विदाहजिह्वास्यशोषकुक्ष्यो ज्वलयन् ज्वलति ॥ ५४ ॥**

अक्षिकर्णनासादिषु, तथा शिरोऽव्यथा, जिह्वाया विदाहः, आस्य-शोषः । कुक्ष्य इति अन्तस्तापः । आपादमस्तकं ज्वलनात् ज्वलति स ज्वर इत्यर्थः । तत्र निदानवचनं—

तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ।
आस्यवैरस्यमरुचिर्जृम्भा सास्राकुलाक्षता ॥
अङ्गमर्दोऽविपाकोऽल्पप्राणता बहुनिद्रता ।
रोमहर्षो विनमनं पिण्डिकोद्वेष्टनं क्लमः ॥
हितोपदेशेष्वक्षान्तिः प्रीतिरम्लपटूषणे ।

[1] अष्टाङ्गनिदानम् II—2,

द्वेषस्स्वादुषु भक्ष्येषु तथा बालेषु तृड्भृशम् ।
शब्दाग्निशीतवाताम्बुच्छायोष्णेष्वनिमित्ततः ।
इच्छा द्वेषश्च तदनु ज्वरस्य व्यक्तता भवेत् ।।[1]

विरुद्धरसादनाज्जातज्वरस्यैतादृशलक्षणलक्षितत्वे ज्ञातव्य इत्यर्थः ।

एकहेतुकृतकार्यस्यैकत्वेऽपि तत्तद्दोषप्रकोपकारकरसविरमजन्यात्ववृद्धि-भेदजन्यौपाधिकज्वरं व्यपदिशति—अङ्गेति ।

**अङ्गपीडनमलमार्गातिरोधनातिपीडनधातुमार्गविगमना-**
**निलादनलस्थलचलनादिनाऽनिलज्वरः ।। ५५ ।।**

सर्वाङ्गानामतिपीडनं करोति । सर्वमलमार्गानतिरुध्य पीडनं करोति । धातुमार्गगमननिरोधनाभ्यां चारतिजाड्यादिविकारं करोतीत्यर्थः । अत्र निदानवचनं—

आगमापगमक्षोभमृदुतावेदनोष्मणाम् ।
वैषम्यं तत्र तत्राङ्गे तास्तास्स्युर्वेदनाश्चलाः ।।
पादयोस्सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं श्रमः ।
विश्लेष इव सन्धीनां साद ऊर्वोः कटीग्रहः ।।
पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम् ।
छिन्दन्त इव चास्थीनि पार्श्वाङ्गानि विशेषतः ।।
हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः ।
स्कन्धयोर्मथनं बाह्वोः भेदः पीडनमंसयोः ।।
अशक्तिर्भक्षणे हन्वोः जृम्भणं कर्णयोस्स्वनः ।
निस्तोदश्शङ्खयोर्मूर्ध्नि वेदना विरसास्यता ।।
कषायास्यत्वमथवा मलानामप्रवर्तनम् ।

[1] अष्टांगनिदानम् II—6-10.

रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता ।।

प्रसेकारोचकाश्रद्धाविपाकाः स्वेदजागराः ।
कण्ठोष्ठशोषस्तृट्शुष्कौ छर्दिकासौ विषादिता ।।

हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोः ग्रहः ।
भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे ।। [1]

पवनपित्ते अङ्गपीडनं सर्वाङ्गेषु प्रपीडनम् । मलमार्गातिरोधनं सर्वमलद्वाराणां वायुपूरितत्वान्मलमूत्रादिकार्यकारणं दुश्शकं च भवतीत्यर्थः । धातुचरमार्गविगमनं विरुद्धगमनं रोगहेतुकम् । अनिलादनिलस्थलचलनं जठरानलस्थलचलनं भवति । लग्नस्थलचलनत्वात् आहारपचनं कर्तुमशक्यत्वादित्यर्थः । तत्र दोषप्रकोपहेतुकरसविरसादनादजीर्णे जाते दोषभेदेन ज्वरास्त्रिविधा भवन्तीति वक्तुं शक्यते । सर्वसामान्यज्वर एकः तदन्तरदोषभेदेन त्रिधा भूत्वा ज्वरश्चतुर्विधो जातः । इतः परमष्टज्वरसङ्ख्यापूरणार्थं पञ्चमो वातपित्तज्वर इति वक्तुं न शक्यते । एतत्प्रतिपादितज्वरव्यतिरेकेण तदुत्पादकसामग्र्यभावादेव तत्कार्यं नोपपद्यते, कारणेन विना कार्याभावस्योक्तत्वादित्यस्वरसादाह—पवनेति ।

**पवनपित्तहेतुकरसविरसजाताजीर्णजन्यामरसासृग्धातुचराद्यदोष उभयलक्षणयुक्तरोगः पवनपित्तप्रकोपज्वरः ।। ५६ ।।**

ननु पवनपित्तज्वरोऽस्तीति सूत्रे अस्तीत्यस्य व्याख्यानं गम्यते । सूत्रव्याख्यानमन्यथा कार्यं निदानशास्त्रेऽदृष्टत्वादितिसूत्रार्थेऽरुचिर्न प्रतिपादि-

---

[1] अष्टाङ्गनिदानम् II—10-18.

तव्या । पवनपित्तज्वरः, पवनश्लेष्मज्वरः, पित्तश्लेष्मज्वर इति द्वन्द्वजानि त्रीणि भासन्ते । तथा सति आगन्तुकाभिघातज्वर इति ज्वरस्याष्टरूपत्वं चैवमाकरेण सुबोधितमित्यर्थः । निदाने वातपित्तप्रधानद्वन्द्वज्वरस्य तल्लक्षण-प्रतीतेः अभावात् । किन्तु पवनकफज्वर एकः, श्लेष्मपित्तज्वरः, आगन्तु-काभिघातज्वर इत्यष्टधा ज्वरभेदः प्रतिपादितः । आयुर्वेदे पवनपित्तज्वरो द्वन्द्व इति प्रतिपादितः । परब्रह्मणा प्रतिपादितार्थस्सामान्यज्वरः, त्रिदोषो-त्थिता ज्वरास्त्रयः, त्रिदोषद्वन्द्वजास्त्रयः, इत्यष्टरूपो भवति ज्वर इत्यायुर्वेद-वचनतात्पर्यम् । पवनभूतद्रव्यस्य इतरधातुभ्यां साकं योगग्रहणस्य औपयोगि-कत्वात् ।

> ............... पवनस्तदितरयोः प्रभुः ।
> विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् ।
> "स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ।"[1]

तस्मात् द्वन्द्वजानि त्रिरूपाणि भवन्तीत्यर्थः । तत्रापि पवनस्य द्वाभ्यां साकं द्विरूपदानं युक्तमित्यर्थः । कफपित्तयोः लघुत्वात्तादृशबलं नास्तीत्यर्थः । तत्र वचनं—

> [2] सर्वाकारं रसादीनां शुद्ध्याऽशुद्ध्याऽपि वा क्रमात् ।
> वातपित्तकफैस्सप्तदशद्वादशवासरान् ।
> [3] प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च ॥ [4]

इति वचनानुसारेण सामान्यतो द्वन्द्वजास्त्रयश्च, आगन्तुकेन साकमष्ट-प्रकारो भवतीति तात्पर्यम् । सामान्यज्वरस्य यावदजीर्णभावकालस्य तत्तद्विमोचनहेतुकत्वात् । एकैकधातुप्राधान्यं सप्तदिनानन्तरं विमुच्यते ।

---

[1] अष्टाङ्गनिदानम् I—11 अन्त्या पङ्क्तिः केवलं अष्टाङ्गनिदाने दृश्यते ।
[2] भ्रान्त्वाकार (क). [3] प्रयोऽ (क). [4] अष्टाङ्गनिदानम् II—60-61.

पवनपित्तपवनकफद्वन्द्वजानां दश द्वादश दिनानि अवधिः । कफपित्तज्वरस्य दिनमवधिः । पवनपित्तपवनकफयोः दशदिनान्यवधिः । तावन्मात्रेण ज्वरो निवर्तते । रसादीनां धात्वाकारं चेत् निवृत्तिर्भवति । रसादयो विरसास्सन्तः धातुचराश्चेत् पूर्वोक्तकालाननतिक्रम्य शरीरं विमुञ्चन्तीत्यर्थः । एवं—

**पवनकफविकारहेतुकरसविरसजाताजीर्णजन्यामयमांसमेदोधातुचर उभयलक्षणसहितः पवनकफविकारजातज्वरः ॥ ५७ ॥**

एतस्यापि पूर्वोक्तरीत्या व्याख्यानं कर्तव्यमिति । द्वन्द्वदोषान्तरमाह— कफपित्तेति ।

**कफपित्तविकारहेतुकरसविरसजाताजीर्णजन्यामयास्थिमज्जाधातुचराध-दोषश्चोभयलक्षणयुक्तो रोगः कफपित्तविकारजातज्वरः ॥ ५८ ॥**

तत्तत्कालहेतुकविकारा भवन्तीत्यर्थः ।

ननु अष्टविधज्वराणां सङ्ख्यापूरणं, दोषत्रयोत्पादितज्वरास्त्रयः, तत्तद्द्वन्द्वदोषजातज्वरास्त्रयः । केवलाजीर्णजातज्वर एकः । सर्वेऽपि ज्वरा रसविरसजाताजीर्णजन्या एव । अजीर्णाभावज्वराभावयोः कार्यकारणभावो वक्तुं शक्यते । अजीर्णभामस्य च ज्वरस्य च व्याप्तेर्दृष्टत्वात् । "नाजीर्णेन विना ज्वरः" इति नियामकशास्त्रस्य विद्यमानत्वात् । तद्व्यतिरेकेण आगन्तुकज्वराभावत्वेन तेन साकं अष्टविधप्रकारत्वं नोपपद्यत इत्यत्रवरसादाह— मन इति ।

**मनःकामभयभूताभिघातकाऊहेतूत्पन्नज्वरस्यान्तर्विदाहश्वासखासमदभ्रममूर्छाच्छर्द्यतिसारशोकक्रोधभयगुणास्तन्निवर्तकनिवर्तका आगन्तुकज्वराः ।। ५९ ।।**

मनोऽभिघातज्वरो मानसिकज्वरः । मनोदार्ढ्यसम्पादनमेव तत्र भेषजम् । कामः—यावत्प्रीतिविषयकमनोभावहेतूत्पन्नज्वरः । यावदर्थानभिभूततदन्यानुभवनित्यज्ञानविषयविपरीतज्ञानजन्यज्वरो भयजातज्वरः । एवं भूतज्वरस्य अभिघातज्वरत्वम् । ते कालस्वभावजातज्वरा एव । तादृशज्वरा बहवस्सन्ति । तस्मादागन्तुकज्वरस्यापि सन्निधानपूर्वकत्वादष्टसङ्ख्यापूरणं सूत्रेण कृतमित्यर्थः । तत्र निदानवचनं—

वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
वैकृतोन्यस्स दुस्साध्यः प्रायश्च प्राकृतोऽनिलात् ।।

वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।
कुर्यात्पित्तं च शरदि तस्य चानुबलं कफः ।।

तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ।।

बलवत्स्वल्पदोषेषु ज्वरस्साध्योऽनुपद्रवः ।
सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ।। [1]

---

[1] अष्टाङ्गनिदानम् 11—50-53.

इत्यष्टविधज्वरलक्षणानि व्यपदिशानीत्यर्थः । श्लेष्मपित्तादिद्वन्द्वज्वर-रूपदोषाणां एतद्धेतुभूतविरसजन्यरसा रोगा अस्थिमज्जाधातुपर्यन्तं उक्तदोषैः साकं दृढतरसञ्चारेण वधोत्पादकलक्षणसामग्रीसहितैः दोषाः प्राणहरणं कर्तुं योग्या भवन्तीत्यर्थः । तत्र ग्रहणी यदा अबला भवति तदा रसाः पाके विरसा भूत्वा तत्तद्धेतुकतत्तद्रोगान् कुर्युः । कलाबलाभावकार्यहेत्वनिमित्त-कार्यकारणमेव तत्र भेषजम् । आदोषपचनपर्यन्तं लङ्घनं कार्यमिति आमहेतुककार्याभावहेतुजन्यामयानां आमाभावपरिपालनं निवर्तकमिति नोपपद्यते आमहेतुककार्याभावात् । अत्र कोऽयं नियामक इत्यस्वरसादाह—पचनेति ।

**पचनाद्यप्रकोपादग्निबलं पोषयन्क्रियाक्रमः ॥ ६० ॥**

निवर्तकैरौषधाद्यैः वातपित्तकफा अप्रकुपिताः भवन्ति । तैरग्निबलं पोषयन् यावत्कर्म विधीयते, स एव क्रियाक्रमः ।

लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति ।
स्वास्थ्यं क्षुत्तृड्रुचिः पक्तिर्बलमोजश्च जायते ।[1]

इति वचनम् । अत्र दोषप्रकोपकार्याभावकर्मकरणं च अग्निप्रज्वलनकार्य-परिपालनं च क्रियाक्रमो भवति ।

यदुक्तं तदेव प्रतिपादयति—पथ्येति ।

**पथ्याद्दोषे क्षीणेऽग्निबले जाते क्षुत्तृड्रुचिशक्तिः[2] बलकाल-त्रिभागज्ञो वमनविरेकाच्छ्वासकासहृद्रोगविषमज्वरातिसारेभ्योऽभया-त्सुखीभवेत् ॥ ६१ ॥**

---

[1] अष्टाङ्गचिकित्सा I—3. [2] बलकालविभागात्.

हितमितपथ्यादनाद्दोषे क्षीणे दोषप्रकोपकार्याभावकरणे तस्मादग्नेर्बलं कर्तुं दृढतरसामग्र्यां सत्यां क्षुत्तृड्रुचिरशक्तिः । धातुक्षमो यदि भवेत्तदनन्तरं वमनविरेककर्मकरणेन श्वासखासहृद्रोगविषमज्वरेभ्यः भयरहितस्सन् सुखी भवेत् । तस्य चिरायुर्भवतीत्यर्थः ।

ननु इदमप्यनुपपन्नम् । पथ्यान्नादनात्पूर्णे सति धातवः पुष्णन्तीति यत्तदयुक्तम् । अन्नादनस्य च तज्जाताजीर्णस्य च कार्यकारणभावो वक्तुं शक्यः । तस्मात्सारकिट्टतया पाके कृतकार्यकरणेन अनलेन आमाशययोः कार्यकारणभावो वक्तुं शक्यत्वादित्यत आह—आमेति ।

आमाशयस्थितं सर्वधातुबलकारकम् ॥ ६२ ॥

अन्नपानादनाज्जाताहारो धातून्यथायथं कुर्वन् सन्तर्पयन् सारं विसृज्य तेनामाशयमापूरयति । तेन पूर्णे स धातून्पुष्णातीत्यर्थः । अत्र सूत्रवचनम्—

> प्रमृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे ।
> विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ॥
> तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ ।
> प्रयुञ्जीताहारं विधिनियमितः कालस्स हि मतः ॥ [1]

आमाशयातिपूरणायाहारं विधिनियमितं कालहितं प्रयुञ्जीत ।

ननु षड्रसद्रव्यादनात्पाके तद्रसान् धातुषु संस्थाप्य धातवस्तुष्टास्सन्तः तेन विरसद्रवेणामाशयः पूर्यताम् । तावता पाचकपित्तकलायाः अबलत्वेन कार्यकरत्वासम्भवात् तयोः कार्यकारणभावः कथं भवेदित्यस्वरसादाह—समानेति ।

---

[1] अष्टाङ्गसूत्रम् VIII—55.

**समानानिलेन[1] तत्स्थान् कला ज्वलयन् पचति ॥ ६३ ॥**

समानवायुनाऽनले प्रज्वलिते सति सा कळा सर्वं भुक्तं पचति । धातुदेहशोषककार्यस्य च आमाशयस्य च कार्यकारणभावस्य च वक्तुं सुकरत्वादिति भावः । अत्र सूत्रवचनम्—

समानोऽग्निसमीपस्थकोष्ठे चरति सर्वतः ।
अनुगृह्णाति पचति विवेचयति मुञ्चति ॥[2]

रसे कोष्ठे चरति सति एवमाकारेण कलायाः अवलत्वं स विमोचयेदित्यर्थः ।

ननु अबलाग्निना आमाशयस्थितमन्नं पक्तुं असामर्थ्ये सति अतस्समानानिलेन सन्धुक्षयन्तीति यदुक्तं तदसङ्गतं, अत्यशनाज्जाताजीर्णस्य तन्निवर्तकेन विना शुद्धसमानानिलेन आमाशयस्थितान्नं, अनलप्रज्वलनीभूतद्रव्यादनं विना ग्रहणीकलायाः अबलत्वमपहर्तुं शक्यते । अत आह—दुष्टेति ।

**दुष्टग्रहणी रोगस्य कारिका ॥ ६४ ॥**

प्रत्युत ग्रहणीकला दुष्टा सती रोगकारिका भवतीत्यर्थः ।

आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।
विष्टम्भयन्तोऽलसकं च्यावयन्तो विषूचिकाम् ॥[3]

इति सूत्रवचनम् । विरुद्धान्नादनेन ग्रहणीकला दुष्टा सती भुक्तान्नं सप्तधातुपोषणं कर्तुमसमर्था । ग्रहणीकलाया भाव्यकार्यस्य अजीर्णजातामयस्य च हेतुमत्तया कार्यकारणभावत्वेन दुष्टग्रहण्या रोगकारकत्वं सिद्धमित्यर्थः ।

---

[1] तत्स्थं-प. [2] अष्टाङ्गसूत्रम् XII—8. [3] सूत्रम् VIII—5.

ननु मन्दानलप्रज्वलनं जठरानलेन भवितव्यम् । अत्र बहिरनलस्यायोग्यत्वात् समानानिलेन भवितव्यमभिव्यञ्जनमिति यत्तत्केवलं निवर्तकद्रव्यादनं विना न समर्थोऽयमिति मत्वा निवर्तकद्रव्यमाह—द्रवेति ।

**द्रवद्रव्यैर्विभजन्कालादन्नं प्राणानिलेन कोष्ठं गतं समानानिलेन तत्स्था कला ज्वलयन्ती पचति ॥ ६५ ॥**

वस्तुतस्तु द्रवद्रव्यैरस्माकं योऽन्नमत्ति स व्यञ्जनानि द्रवीभूतानि कृत्वा भुनक्ति । तद्भुक्तान्नं अग्निसमीपस्थितसमानानिलेन पक्तुं प्रज्वलितेन सारकिट्टतया विभजतान्नं हृद्गतं सत् प्राणानिलेन आहारकोष्ठं गतं करोति, तदनन्तरं नाभिप्रदेशगतं कारयति । तस्मात्सा कला अतिप्रज्वलिता सती धातुपोषकगुणं न धत्ते । प्रत्युत धातुशोषणं च करोति । ग्रहणीकला अतिप्रज्वलिता सती धातुदूषणं करोति । तस्मात्सा कला दाहावशेषं पचति । धातुक्षयकारिकाऽपि भवति । एवमाशयांश्च पचेत् । तदप्यजीर्णमिति व्यवहरति । तेन धातुपोषकत्वस्य पतितत्वात् तत्पचनं अनग्निकृतमिति यत्तन्न रोचत इत्यर्थः । अत्र वचनं —

चयादीन् यान्ति सद्योऽपि दोषाः कायेऽपि वा न वा ।
व्याप्नोति सहसा देहमापादतलमस्तकम् ॥

निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ।
नानारूपैरसंख्येयैः विकाराः कुपिता मलाः ।
तापयन्ति तनुं तस्मात्तद्धेत्वाकृति साधनम् ॥ [1]

---

[1] अष्टाङ्ग सूत्रम् XII—28-30.

ननु द्रवद्रव्यादनेन यावद्धातुतृप्ति भोजनं कृतं चेत् पञ्चविधपाचक-पित्तमध्ये अत्यग्निना पचति चेत् तत्पाचितान्नं धातुप्रदं न भवति। तत्सावशेषपचनमपि न क्रियते। तस्मादाशया रिक्तीभूतास्सन्तः तद्वदजीर्ण-वदन्नप्रकोपं कुर्वन्तीत्यस्वरसादाह रिक्त इति।

रिक्ते वायुः प्रकुप्यते ॥ ६६ ॥

तत्र सूत्रवचनं—

बलवत्यबलात्वन्नमाममेव विमुञ्चति।
ग्रहण्या बलमग्निर्हि स चाऽपि ग्रहणीबलः ॥ [1]

दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारणा।
यदन्नं देहधात्वोजोबलवर्णादिपोषणम् ॥ [2]

इति शारीरवचनम्। अत्यग्निना द्रवीभूतत्वेन कालादन्नमपि साव-शेषाभावपचनात् आशया रिक्तीभूताः। तेष्वाशयेषु वायुः प्रवर्धते। अनिलस्य रूक्षगुणवद्द्रव्यत्वात्। आशये रिक्ते सति वायुः प्रकुप्यत इत्यर्थः। तत्र रूक्षो लघुस्सितः खरस्सूक्ष्मश्चलोऽनिलः। अग्निप्रज्वलन-हेतुभूतेन्धनसंयोगे सति ज्वलनं भवेत्। आशयानां रिक्तीभूतत्वेन अनलस्य ज्वलनहेतुकद्रवद्रव्याभावेन ग्रहणीकलायाः स्वजज्वलनगुणवत्त्वेन स्थातुमश क्यत्वादित्यस्वरसादाह—अनलेति।

अनलोऽल्पो भवति ॥ ६७ ॥

वस्तुतस्तु इदमप्यनुपपन्नं, आमाशये रिक्ते सति पवनप्रकोपकार्यं प्रति हेतोरदृष्टत्वात्। अनामयकार्यकारणत्वं अनामयपालनत्वम्। तस्या-

---

[1] अष्टाङ्ग शारीर III—52-53. [2] अष्टाङ्ग शारीर III—52-54.

रोगहेतुकत्वात् । 'रिक्ते वायुः प्रकुप्यते' इत्येतत्सूत्रं व्यर्थं स्यात् । ग्रहणीकलायाः समानानिलसमीपस्थितत्वेन ज्वलनहेतुकसामग्रीसत्वात् । 'अनलोऽल्पो भवति' इति सूत्रमपि व्यर्थं स्यादिति चेत्, पञ्चप्राणोपकारकान्नग्रहणाद्दोषोपकारकाः । मलमूत्राधिक्यमपि विशेषतः । आशये रिक्ते सति पवनप्रकोपहेतुत्वं यत्र दृश्यते तत्रायं नियमः—मलमूत्रनिरोधनाज्जातामये दृष्टे सति तन्निवर्तकद्रव्येण रेचिते तेन रिक्तीकृताशये यत्र पवनप्रकोपहेतुत्वं तत्र तद्दृश्यत इति तात्पर्यम्, तस्य दृष्टत्वात् । आमाशयस्य रिक्ततया रूक्षता वातस्य । रूक्षगुणत्वं प्रथमत उपात्तं विरुद्धरसादनाज्जाताजीर्णगुणहितामयेन सारकिट्टतया अविभज्य पचनात् मलमूत्रादिकं द्रवीभूतमपक्वतमिति प्रतिभाति । तत्र सिद्धकलायाः अज्वलितत्वाज्जातानलपचनात् जातामये दृष्टे सति तद्विरुद्धचलकृताशयस्य रिक्ततया दोषप्रकोपहेतुकत्वं स्यात् । तस्मात् 'रिक्ते वायुः प्रकुप्यते' इति सूत्रं सम्यक्प्रतिपादितमित्यर्थः । अजीर्णजातामये आमाशयरिक्तत्वाज्जातानलप्रकोपस्य च सन्धुक्षणावश्यकत्वेन आदौ पवनप्रकोपरहितकार्यस्य कारणीभूतरसद्रव्यं व्याचष्टे— मधुरीति ।

मधुरीभूताभ्यवहृतान्नं पवनप्रकोपहारकम् ॥ ६८ ॥

तत्स्वभावसिद्धमधुररसेन तत्तद्द्रव्यकर्मोपाधिना अनिलप्रकोपाभावकार्यस्य यन्निवर्तकं मधुरीभूतं कृत्वा तावद्भुक्तान्नं पवनप्रकोपं हरतीति हारकम् । आमाशयरिक्तताकार्ये तत्स्थानप्रकोपे सति यावद्भुक्तान्नं पक्तुं अग्नेरनवकाशात् तन्निवर्तकस्वादुरसवद्द्रव्यमद्यात्प्रथमतः अश्नीयादित्यर्थः । तद्वदन्त्यमधुरीभूतद्रव्यमनिलप्रकोपहारकमित्यर्थः । तत्र—

त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ।[1]

एतद्वचनानुसारेण पाके मधुरीभूतद्रव्यं दोषनिवर्तकम्, उत स्वतस्स्थितस्वादुरसवद्द्रव्यं वा । नाद्यः, सकलद्रव्याणि पाके त्रिधा विकारीकरोति । तन्निवर्तकद्रव्यमस्तीति नियामकाभावात् । नान्त्यः, स्वादुरसवद्द्रव्यं सकलदोषान्हरतीति । तत्र वचनं—

तक्ताद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥[2]

एतद्वचनानुसारेण एकस्यैव नियामकत्वं भवतीति अवच्छेदकत्वाभावात् । तस्मादेतदैक्यमिति तत्र । मधुरीभूतव्यञ्जनैस्साकं प्रथमतोऽन्नमश्नीयात् । तत् हृद्गतमम्लीभूतं भवेत् । तदा हृदयं प्रविश्य ततः पक्वाशयगतं भवेत् । ततः कटुरसो भूत्वा पच्यते । तस्मान्मधुरीभूतद्रव्यं ........भवति, तद्वत्पवनप्रकोपमपहरतीति मत्वा तस्मादेतत्सूत्रं सार्थकमित्यर्थः । आमाशयरिक्तत्वमेव पवनप्रकोपहेतुकं, पित्तप्रकोपकार्यस्य च हेतोरदृष्टत्वात् । अहरहर्भुक्तान्नं पच्यमानं सत् दोषत्रयनिवर्तकत्वेन धातून् पोषयतीति वक्तव्यम् । तत्र पित्तप्रकोपकार्यस्य च हेतोरदृष्टत्वात् अहरहर्भुक्तान्नं पच्यमानं सत् दोषत्रयनिवर्तनं करोतीति वक्तव्यम् । तत्र पित्तप्रकोपकार्यस्य च तद्धेतोरदृष्टत्वात् । कार्यज्ञानस्य कारणज्ञानेन विनाऽप्रसक्तेरित्यस्वरसादाह—हृद्गतेति ।

---

[1] अष्टाङ्गसूत्रम् I—17. [2] अष्टाङ्गसूत्रम् I—15.

हृद्गतकफप्लुतान्नमम्लीभूतं पित्तप्रकोपनाशकम् ॥ ६९ ॥

अस्यार्थः—आमाशयस्य पवनप्रकोपहेतुत्वं प्रतिपादितम् । पित्त-प्रकोपस्याजीर्णोत्पत्तिकारणत्वं वक्तुं शक्यत्वात्, तत्कार्यस्य च हेतोरदृष्टत्वात् इत्यस्वरसं मनसि निधाय केश्चिद्व्याख्यानं क्रियत इत्यस्वरसान्तरमाह—हृदिति ।

अस्यार्थः—मधुरीभूतार्थान् भुक्तवतः उदानानिलेन कण्ठं प्रविशत्तत् हृद्गतं सत् कफप्लुतं संसर्गदोषवशात् अम्लीभूतं भवति । स रसः पित्तप्रकोपं करोति । अत्र सूत्रं—

अम्लोऽग्निदीप्तिकृत्स्निग्धः हृद्यः पाचनरोचनः ।
उष्णवीर्यो हिमस्पर्शः प्रीणनो भेदनो लघुः ।
करोति कफपित्तास्रं मूढवातानुलोमनम् [1] ॥

एतद्वचनानुसारेण पित्तप्रकोपहेतोरदर्शनात् पित्तनिवर्तकः स्वादुरसः पित्तप्रकोपं हरतीत्यर्थः । तत्र सूत्रवचनं—

"तक्राद्या मारुतं घ्नन्ति" इति प्रतिपादितम् ।

एतद्वचनानुसारेण स्वादुरसस्य पित्तप्रकोपराहित्यजनकत्वं प्रतिपादितम् । एतत्सूत्रवचनद्वयस्यार्थस्सुबोध इत्यर्थः ।

ननु दोषप्रकोपनिवर्तनद्वारा धातून्पुष्णन्तौ स्वाद्वम्लरसौ पवनप्रकोपं कुरुतः । तस्मात्तन्निवर्तको न भवेदित्यस्वरसादाह—मधुरेति ।

मधुराम्लरसौ कफकरौ ॥ ७० ॥

मधुररसश्चाम्लरसश्चोभयमपि कफप्रकोपं दत्ते । मधुररसः पवन-पित्तनिवर्तकरसः तत्तद्द्रव्यं भूत्वाऽन्नः प्रविशति । तस्य तन्निवर्तनमेव

[1] अष्टाङ्गसूत्रम् X—10-11.

पुरुषार्थः । तत्कफहेतुकमित्युच्यते । तिक्तोषणकषायरसाः कफनिवर्तकाः । रसादिषट्कस्य दोषनिवर्तकत्वम् । रसादिषु स्वाद्वम्लरसौ वातपित्तप्रकोप-हेतू भवतः । तयोरेव हि वैष्यत् कफकारका[1] इति । स च स्वादुरस औपाधिकरसोऽम्लरस उभावपि पवनपित्तप्रकोपकारकौ[2] । प्रत्युत पवन-प्रकोपस्यापि हेतू भवतः । कथं कफनिवर्तकौ भवतः इत्यस्वरसादाह— हृदिति ।

**हृच्च्युताहारमनलशोषितमामाशयस्थं कफं हरति ॥ ७१ ॥**

प्राशिताहारमनलशोषितमामाशयस्थं कफं हरति । तदेवान्नं प्राशितं यथाक्रममाशयादिषु स्थित्वा सारकिट्टादिविभजनं कुर्वत् यदन्नं पचति आमाशयस्थं सत् तदेव कटुरसो भवति । तत्र सूत्रवचनं—

त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ।[3]

एतद्वचनानुसारेण स्वभावतस्स्वादुरसोऽपि औपाधिकाम्लरसो भूत्वा पित्तमपि जनयति । तदनन्तरं आम्लरसस्य कार्यकारित्वं वक्तव्यम् । आमाशयस्थितस्सन् कटुरसो भूत्वा कफनिवर्तको भवतीत्यर्थः । कटुरसस्य च कफनिवर्तकत्वं सुप्रसिद्धमिति भावः ।

उद्वेजयति जिह्वाग्रं कुर्वंश्चिमिचिमां कटुः ।
स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च ॥[4]

ननु एकमेव द्रव्यं त्रिधा विभजनं करोतीति सूत्रे प्रतिपादित-मित्युक्तम्, तच्चिन्त्यम् । आदौ स्वादुरसस्यैव कार्यकारित्वं च वक्तव्यम् ।

---

[1] कफकारिकारका (क). [2] कारकाविति (क). [3] अष्टाङ्गसूत्र I—17.
[4] अष्टाङ्गसूत्र X—5.

तदनन्तरमम्लरसस्य कार्यकारित्वं वक्तव्यम् । कटुरसस्यापि तथा कार्य-कारित्वभजनात् । तस्मात्स्वाद्वम्लकटुरसानामेव दोषसाम्यं प्रतिपादितम्, नैव रोगमात्रनिवर्तकसामग्री प्रतिपादिता इति । तत्र सूत्रवचनम् ।

रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।[1]

एतद्वचनमत्र प्रमाणमिति त्रयाणां दोषाणां समता या सामग्री दृश्यते सा सामग्री त्रिभिरेव कार्या । तथा सति तदितररसानां का गतिरित्याशयं मनसि निधाय तच्चिन्त्यमित्युक्तम् । तत्र शारीरवचनं—

आदौ षड्रसमुत्पन्नं मधुरीभूतमीरयेत् ।
फेनीभूतं कफं यातं विदाहादम्लतां ततः ॥
पित्तमामाशयात् कुर्याच्च्यवमानं च्युतं पुनः ।
अग्निना शोषितं पक्वं पिण्डितं कटुमारुतम् ॥[2]

एकरसवद्द्रव्यमेव पाके त्रिधा विभजनं करोतीत्यर्थः । सर्वधातुपचनं हरतां वातपित्तकफदोषाणां अविकारकगतिं प्रापयितुं तत्र भोज्यद्रव्यादनं, तेषां बहुरसात्मकत्वात् । ते रसाः तत्द्विधिचोदितफलानि प्रयच्छन्तीति यान् रसान् यो भोक्तुमुपलभते तेन उपलभ्यमानरसं तदनुभववशात् फलं प्रदीयते इति रसान् विद्यात् । तस्माद्बहुरसद्रव्यादनादेव तत्तद्विधिचोदितफलं प्राप्यत इत्यस्वरसादाह—स्वाद्विति ।

स्वाद्वम्लकटुकाः पाक्या रसा यथा समदोषा
यथायथं योगफलदायकाः ॥ ७२ ॥

सर्वे रसाः पाकेन स्वाद्वम्लकटुका भूत्वा यथार्थस्थिता रसा एव तत्तत्फलदायका इति । समाधत्ते—य इति ।

---

[1] अष्टाङ्गसूत्रम् I—19. [2] अष्टाङ्गशारीर III—57-58.

**ये रसास्तद्धेतुभूतास्तदुद्भूतजातानलास्तदुद्भूत-धातुपोषकाः ॥ ७३ ॥**

अस्यार्थः—तद्धेतुकार्यहेतुभूतास्तद्धेतुभूताः इति । तत्तदुद्भूतरसादनकार्यजातानलत्वं पाचकपित्तमेव । अनलपाचितरसाः तत्तद्भूतहितधातुपोषणं कुर्वन्तीत्येतत्सूत्रार्थः । तत्र वचनं—

भौमाप्याग्नेयवायव्याः पञ्चोष्माणस्सनाभसाः ।
पञ्चाहारगुणान्स्वान्स्वान्पार्थिवादीन्पचन्त्यनु ॥

यथास्वं ते च पुष्णन्ति पक्वा भूतगुणान्पृथक् ।
पार्थिवाः पार्थिवानेव शेषाश्शेषांश्च देहगान् ॥ [1]

सर्वशरीरवद्द्रव्यं पञ्चभूतात्मकमिति तत्पार्थिवभूताधिकं व्यञ्जनान्नं भोक्तुमिच्छतश्शरीरस्य पार्थिवावयवं पुपोषति । अब्भूताधिकव्यञ्जनान्नं भोक्तुमिच्छतश्शरीरस्य अब्भूताधिकवृद्धिं करोति । एवं वह्निभूताधिकव्यञ्जनान्नं भोक्तुमिच्छतश्शरीरस्य वह्निभूतावयववृद्धिं करोति । एवमनिलस्य च । एवं नाभसोऽप्यभिवृद्धिं करोतीत्यर्थः । यद्यद्द्रव्यान्वितो रसस्तत्तद्द्रव्यगुणप्रदः । पञ्चभूताधिकद्रव्येभ्यः तत्तद्द्रव्याभिव्यञ्जनावयवा अभिवर्धन्ते । तस्मात् रसादीनां कार्यकारणभावः किमासीदित्यत आह—रसेति ।

**रसाद्रक्तम् ॥ ७४ ॥**

रक्तधातुजनकरसासृगभिवर्धककार्यस्य कषायरसो हेतुर्भवतीत्यर्थः । "रसो ह्यसृक्," "रसो वै सः" । तस्माद्रसासृजोरैक्येन षड्रसास्सप्तधातुपोषका इति । तत्र शारीरवचनं—

---

[1] अष्टाङ्गशारीर III—59-60.

रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।
अस्थ्नो मज्जा ततश्शुक्रं शुक्राद्गर्भः प्रजायते ॥ [1]

एवं सप्तधातूनां रसादीनां षण्णां च कार्यकारणभावोऽस्तीति ज्ञाप्यते । रसवद्द्रव्यं रक्तधातुजनकं भवतु, कषायरसो रक्तधातुजनक इत्यत्र कोऽयं नियमः ? दोषादीनामरोगकार्यकारणत्वं प्रतिपादितम् । तेषां परंपरया धातुपोषणद्वारा धातुजनकत्वं च विवक्षितम् । दोषधातुविकाराभावस्य रसादीनां च कार्यकारणभावे ज्ञाते सति देहारोग्यकार्यस्य रसानामेव सत्त्वे सुप्रसिद्धिरिति भावः । कषायरसास्वादनात् रसासृग्धातुरेधते । ऊषणरसो मांसधातुप्रवर्धकरक्तधातून्सम्पोष्य हेतुर्भवतीत्यर्थः । [2] रसाद्रक्तं, तस्मान्मांसं, मांसान्मेदः, मेदसोऽस्थि, अस्थ्नो मज्जा, मज्जातश्शुक्रं, शुक्राद्गर्भो भवति । अब्भूतोद्भवस्वादुरसश्शुक्लधातुपोषकः । तद्विरसस्तन्नाशको भवति । पृथिव्युद्भवो रसो मज्जाधातुपोषको भवति । तद्विरसस्तन्नाशको भवति । तेजोभूतोद्भवोषणरसः अस्थिधातुपोषकः । तद्विरसस्तन्नाशको भवति । लवणमूषणरसभेदः । पवनभूतोद्भवस्तिक्तरसः मांसमेदोऽभिवर्धकः, मेदसोऽपि मांसरूपत्वात् अभेदोऽत्र विवक्षितः । गगनभूतोद्भवकषायरसः रसासृग्धातुप्रदः रसासृजोरेकधातुरूपत्वात् । तस्माच्छरीरं पाञ्चभौतिकमिति व्यपदिशति—पञ्चेति ।

पञ्चभूतात्मकं शरीरम् ॥ ७५ ॥

---

[1] अष्टाङ्गशारीर III—62. [2] क्वचित्सूत्रपाठे रसादक्तं इत्यनन्तरं 'रक्तान्मांसं, मांसादस्थि, अस्थ्नो मजा, मजातश्शुक्रं, शुक्राद्गर्भो भवति' इत्यधिकं दृश्यते । तच्चैतद्भाष्यानुगुणम् .

पृथग्व्यवस्थिताः पञ्चभूताः अस्मिन् शरीरे नोपपद्यन्ते देहस्य दोषधातुमलाशयात्मकत्वात् । एकैकस्य महाद्रव्यत्वात् संसृष्टेरभावात् । एकैकस्य च नाशतस्संसृष्टिः तेषां विभजनं कर्तुमशक्यत्वात् । एकैकशरीरे तत्तल्लक्षणसहितद्रव्योपलब्धेरभावात् । तस्मात्पञ्चभूतात्मकं शरीरमिति वचनं न क्षोदक्षममित्याशयं मनसि निधाय आदौ गगनभूतस्य तत्संसृष्टिलक्षणं तत्कार्यं च व्यपदिशति—श्रोत्रेति ।

**श्रोत्रान्तस्स्थितशब्दगुणकबोधकसिराभ्यां श्रूयते ॥ ७६ ॥**

अस्यार्थः—अन्तस्तिष्ठत इत्यन्तस्स्थितौ । तयोरन्तस्स्थितयोः शब्दो गुणो ययोस्तौ शब्दगुणकौ । बहुव्रीहौ कप्रत्ययः । उपस्थितयोग्यविषयस्य बोधिकाभ्यां सिराभ्यां श्रूयते । तत्र शरीरवचनम्—

> षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ।
> शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद्गुणाः ।
> खानिलाग्न्यब्भुवामेकगुणवृद्ध्यन्वयः परे । [1]

एकादशगुणवद्द्रव्यं शरीरेऽन्वेति । गन्धवद्गुणभूतो नासिकाया-मुपलभ्यते । अब्भूतगुणलक्षणस्य जिह्वायामुपलब्धिः । तैजसगुणवद्द्रव्यं अक्ष्णोः प्रतिभाति । तत्र रूपोपलंभकज्ञानं प्रमाणम् । पवनद्रव्यं स्पर्श-गुणम् । शब्दगुणवदाकाशद्रव्यम । कर्णशष्कुल्यवच्छिन्नाकाशो शब्दोप-लम्भकत्वात् । तस्मात्पञ्चभूतात्मकं शरीरमिति वाक्यं सुप्रसिद्धम् । शब्दगुणवानाकाश इत्याकाशस्य लक्षणं प्रसिद्धमित्यर्थः । श्रोत्रान्तस्स्थित-

[1] अष्टाङ्गशारीर III—1-2.

सिराभ्यां श्रूयते शब्दः । तावता आकाशस्य शरीरात्मकत्वं कथं सङ्गच्छते ? 'यत्सत्वे यत्सत्त्वम् ; यदभावे यदभावः ' इति न्यायेन शब्दग्राहकप्रतीत-शब्दग्रहणं अन्वयव्यतिरेकाभ्यां देहस्याकाशात्मकत्वं न साधयति । तस्मात्पञ्चभूतात्मकं शरीरमिति वचनस्य यद्दूषणं दत्तं तदपरिहार्यं भवेदित्यस्वरसादाह— शब्द इति ।

शब्दगुणक आकाशः ।। ७७ ।।

शब्दो गुणो यस्य स शब्दगुणद्रव्यमाकाशः । बहुव्रीहौ कप्रत्ययः । आकाशस्य शब्दगुणकत्वात् । द्रव्यान्तरस्पर्शे सति तद्विषयकज्ञानं जायते । तदन्यथानुपपत्त्या तद्व्यापकत्वं वायोः प्रतीतम् । (आकाशवन्निर्गुणद्रव्य-प्रतीतत्वात्) स्पर्शैकवेद्यत्वं वायोः प्रतीयते, स्पर्शगुणवान्वायुः इत्युप-लम्भकत्वात् । स्पर्शो गुणो यस्य स स्पर्शगुणवान् । द्रव्यान्तरसंसर्गे सति तद्विषयकज्ञानं जायते । तद्व्यतिरिक्तेन्द्रियाणां अविषयत्वे सति तद्विषय-कत्वात् । तदधीनज्ञानविषयकज्ञानं त्वगिन्द्रियज्ञानविषयकज्ञानपवनस्य एक-देशशरीरव्यापकत्वं सुप्रसिद्धम् । रसासृग्धातुजन्या त्वक् । तदन्य-धात्वनाधारभूतत्वचः श्वासोच्छ्वासरूपपवनाधारकत्वं प्रतिपाद्यते—रसेति ।

रसासृग्धातुजन्या त्वक् श्वासोच्छ्वासावहा ।। ७८ ।।
सप्तधातुत्वगावृतानिलो वियज्जातः ।। ७९ ।।

उभयोरपि धातुत्वग्व्याप्यकार्यं प्रति एकशरीरस्य कार्यकारणत्वं भवति । एतावता त्वङ्मात्रस्य रसासृग्धातुजन्यत्वं सर्वजातिशरीरत्वचां व्याप्यत्वं प्रत्यपादीत्यर्थः । स वायुराकाशजन्यः, " आकाशाद्वायुः "

इति प्रमासिद्धत्वात् । ननु देहस्य अनिलधारणत्वं दाहप्रतिबन्धकेऽसति अनलधारणत्वं च वक्तव्यम् । अन्यथा वहति नभोऽनिलवत् । अनिलधारणायोग्यत्वात् । जठराग्नेरन्नपचनकार्यस्य दाहप्रतिबन्धकाभावकार्यत्वेनादृष्टत्वात् इति न वक्तव्यम्, कुण्डलीगतपित्तस्य अनलवत्कार्यकर्मकरणोपयोगिकत्वात् । तत्पाचककर्म ग्रहणीकला पचनरूपकार्यं करोति । तस्मादनलात्मकं शरीरमिति वक्तुमयोग्यत्वादित्यस्वरसादाह—षडिति ।

**षट्पञ्चाशत्सिरावृताक्षिगतानलः पञ्चरूपोपपन्नमाहारं पचन् अनिलजातानलस्स्वगतार्थं पश्यति ॥ ८० ॥**

अस्यार्थः—

षट्पञ्चाशत्सिरावृते अक्षिणी ययोस्तयोर्गतानलः तैजसरूपाग्निः ज्वलद्द्रव्यसिरावृतनेत्रगोलमध्यस्थितत्वात् ज्वालावृतद्रव्यावयवानां दहनप्रतिबन्धकत्वं सम्पाद्य सोऽनलः भुक्तान्नपचनार्थं ग्रहणीकला भूत्वा शरीरं व्याप्य तिष्ठति । अतिदूरस्थमपि तत्सजातीयद्रव्यं विषयीकरोति । तस्मान्नेत्रगोलमध्यस्थितस्सन् यः पश्यति स एवानलस्सर्वशरीरव्यापकः । अनिलजातानलः स्वगतार्थं अनिलजातानलद्रव्यं दूरस्थमपि विषयीकरोति । अतिदूरस्थोऽप्यनिलश्चक्षुषा विषयो गृह्यते । कुण्डलीगतपित्तं तु सर्वभुक्तान्नपचनार्थम् । तस्याः कुण्डल्या देवतारूपत्वात् । तत्पित्तमपि तैजसवद्भवति । चक्षुर्गोचरार्थं चक्षुर्गततैजसं दूरस्थितमप्यर्थं विषयीकरोति । सा कला सर्वं पक्तुं योग्या भवतीत्यर्थः ।

रसादिभेदविभजनार्थं रसनेन्द्रियप्रकल्पनम् । तदुद्भूतद्रव्यं तद्विभजनार्थम् । तदुद्भूतव्यतिरिक्तस्य तेन ग्रहीतुमशक्यत्वात्. इत्याशयं मनसि निधाय रसनेन्द्रियस्वरूपं विवृणोति—लालेति ।

लालारूपो रसादिभेदान्विभजन् जिह्वया
रसं गृह्णाति ।। ८१ ।।

लालारूपरसः जिह्वाग्रवर्ती पदार्थान्गृह्णाति । भुक्तान्नविभजनं च करोतीत्यर्थः ।

ननु रसादिविभजनं ग्रहणीकला अदुष्टा सती करोतीति सर्वं विधिवत्प्रतीयते । सा अदुष्टा सत्यपि तद्विभजनज्ञानं नानुभूयते, तद्विभजनज्ञानस्य जठराग्नेश्च कार्यकारणभावो गृह्यते चेत् जिह्वाग्रस्थितलालाजलस्य कार्यकारणभावः कथं गृह्यते ! तद्भेदविभजनस्य अन्यथा सिद्धत्वात् । तस्मादनन्योद्भूतात्मकत्वं नोपलभ्यते इत्यस्वरसादाह जिह्वेति ।

जिह्वासंस्थितद्विसिराधारसर्वरसाभिज्ञा ।। ८२ ।।

अनलजाताब्लालारूपरसनेन्द्रियस्य रसस्पर्शमात्रेण तत्तद्व्यञ्जनं कृत्वा रसादयोऽनुभूयन्ते । अन्वयव्यतिरेकप्रमाणसिद्धत्वात् । द्विसिराधारकत्वं सर्वरसाभिज्ञत्वं अनलजन्यत्वं चैतस्यैव प्रतीयते । नान्यस्येत्यर्थः । पृथिवीलक्षणं गन्धवत्त्वम् । गन्धवती पृथिवी सर्वशरीरगन्धोपलंभिका भवति । शरीरं पार्थिवं गन्धगुणस्योपलभ्यमानत्वात्, यन्नैवं, तन्नैवं यथा वायव्यशरीरम् । यथेति वायुलोकनिवासिनां दृष्टान्तः । अस्य तु शरीरस्य पार्थिवावयवत्वेन सर्वगन्ध उपलभ्यते । तस्मान्न पञ्चभूतात्मकं शरीरमित्यस्वरसादाह—चतुरिति ।

**चतुर्विंशतिसिरा नासिकाग्रगतोद्भवा पृथिवी चतुर्विंशतितत्त्वबोधिका ॥ ८३ ॥**

सर्वाणि तत्त्वानि नासाग्रे प्रतिभान्ति । तस्मात्पार्थिवावयवि शरीरं कथं स्यादित्यस्वरसादाह—यत्सिरेति ।

**यत्सिरावृतं शरीरम् । अन्नाद्भूतानि जायन्ते, जातन्यन्नेन वर्धन्ते, अद्यतेऽत्ति च भूतानि, तस्मादन्नं तदुच्यते ॥ ८४ ॥**

सर्वाणि शरीराणि पार्थिवानि । तदितराः आपो ह्यग्न्यनिलाकाशाः तत्कार्योपलम्भकमात्रचरितार्थत्वात् । अतोऽन्यावयवं शरीरं स्यादित्याशङ्कते—नासिकेति ।

**नासिकाधिक्यविकारभूताः नासाग्रे प्रतीयन्ते ॥ ८५ ॥**

तत्तन्निष्ठगुणानि तानि चतुर्विंशतितत्त्वरूपगुणानि चतुर्विंशतिसिराधारकानि । सर्वेऽवयवा गन्धवद्गुणभूयिष्ठाः । तस्मात् शरीरं पार्थिवमिति सर्वजनसिद्धमिति एतत्सिरावृतं शरीरमिति वक्तुं शक्यते । दोषधातुमलाशयात्मकं तत्सर्वं गन्धोपलब्धिज्ञानपूर्वकं पञ्चभूतात्मकं शरीरमिति सूत्रं न क्षमं, तद्देहातिरिक्तदेशस्थितं शरीरं समवेत्य तिष्ठतीति नोपयुक्तम् । किं च "अन्नाद्भूतानि जायन्ते" इति वचनमपि नोपपद्यते, सर्वेषां सर्वकालेऽपि प्रजोत्पत्तिरेव स्यात् इति चेन्न । अन्नादनसामग्र्या सर्वदोषस्थितत्वात्तादृशं कार्यं नोपपद्यते इति । किन्तु अदृष्टद्वारा स्त्रीपुंसयोगे सति प्रजाः प्रजायन्ते । तस्माच्छरीरान्तस्स्थितसप्तधातूनां मातृजास्त्रयः पितृजाश्च त्रयः । उभयमेलनं योनिः । शुक्रशोणितसन्निपातो योनिरित्यत्र

पितृशुक्लसान्निपात्यम् । एतच्छुक्लमहिम्ना अनेकेषां समाहारे सति सन्निपातः । पितृजश्शुक्लसन्निपातः । एकरसश्चरमधातुः । बहुवचनं नोपपद्यत इति पितृजं अस्थिमज्जाशुक्लधातुसान्निपात्यं योनेर्लक्षणम् । एवं मातृजानि रक्त-मांसमेदांसि । एषां सान्निपात्यं योनिः । तस्मात् स्त्रीपुरुषयोस्संयोगे सति सप्तधातूत्पादकसामग्रीसन्निपात एव योनिरिति व्यपदेशः । रक्तमित्यत्र रसा-सृजोरैक्यं, तदेकधातुरिति पूर्वमेव प्रतिपादितम् । इति मातृजाश्चत्वारो धातवः पितृजाश्च त्रयः । उभयोर्धात्वोर्मेलनं योनिरिति समाधत्ते— मातृजमिति ॥

## मातृजं रक्तमांसमेदः, पितृजं मज्जास्थिरेतः, सत्त्वरजस्तमो-गुणात्मकं शरीरम् ॥ ८६ ॥

स्त्रीणां चत्वारो धातवः । पुंसां त्रयो धातवः । न्यूनाधिक मात्रसंयोगवशात् स्त्रीपूर्वकमेव प्रथममुक्तत्वात् । तस्मात् स्त्रीपुंसयोर्मेलनम् । तत्र वदन्ति—'मातापितरौ पितरौ' ।

जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ,
स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेस्सिसृक्षया ।
[1] प्रसूतिकाले सर्वस्य तावेव पितरौ स्मृतौ ॥

मातापितृभ्यामन्यतरस्य बहुवचनेन प्रतिपादनम् । तस्मादुभयो-र्धातुमेलनरूपं योनिरित्यर्थः । जगदुत्पत्तौ योनिरेव कारणमिति ज्ञापनार्थं च स्त्रीधातवश्चत्वार इति । पितुरपि मातुरपि बहुकारणीभूता जगदुत्पत्तिहेतुः प्रकृतिरेव । तस्याः "प्रकृतेः महत्, महतोऽहंकारः, अहंकारात्पञ्च तन्मात्राणि" इति श्रुतेर्विद्यमानत्वात् सर्वश्रेष्ठा माता प्रथमत उपात्ता । तत्र शारीरवचनं—

---

[1] 'प्रसूतिभाजः सर्गस्य' इति कुमारसम्भवे सर्गः २.

बीजात्मकैर्महाभूतैस्सूक्ष्मैस्सत्वानुगैश्च सः ।
मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्धते [1] ॥

ननु मातृजातवश्चत्वारः । पितृजाश्च त्रयः । तावन्मात्रेण शरीरोत्पत्तिः प्रतिपादिता । इतः परं सत्वरजस्तमोगुणानां कस्य द्रव्यस्य गुणित्वम् ? । तथा सति गुणगुणिनोः कार्यकारणभावो वक्तुं शक्यते । तेषां गुणिरूपद्रव्यादर्शनात् न गुणिनमन्तरेण गुणास्सन्ति । तस्मात् सत्वरजस्तमोगुणात्मकं शरीरमिति सूत्रस्यैकदेशं व्यर्थं स्यादित्यस्वरसादाह—आयुरिति ।

आयुरारोग्यतेजोबलशुद्धादि वपुस्सत्वगुणोत्पादकम् ॥ ८७ ॥

सत्वगुणस्यैतादृशलक्षणानि सन्तीति प्रतिपादितम् । ननु गुणाश्रयो द्रव्यमिति गुणाश्रयत्वं द्रव्यस्य । पञ्चभूतानां गुणाः । इति ते तत्तद्द्रव्यनिष्ठास्सन्ति । अतस्ते पृथक्त्र्यवस्थिताः । अत एतेषां सत्वरजस्तमोगुणानामेते एतस्य द्रव्यस्येति व्यपदिशेत् । तेषां गन्धादीनां गन्धरसरूपस्पर्शशब्दाः पञ्चभूतानां एकैकशोऽवच्छेदकाः । गुणत्रयस्य तेषां नावच्छेदकत्वात्, गुणो गुणिनमन्तरेण स्थातुं नोपपद्यत इत्यस्वरसान्तरादाह— आयुरिति ।

आयुश्च आरोग्यं च तेजश्च बलं चैतानि स्वरूपाणि वपुष आविर्भवन्तीति कारणान्यथानुपपत्त्या तत्तत्कार्यकल्पनस्य विधेयत्वात् । अत्र शारीरवचनं—

तेजो यथार्करश्मीनां स्फटिकेन तिरस्कृतम् ।
नैधनं दृश्यते गच्छत् सत्वो गर्भाशयं तथा ॥ [2]

---

[1] अष्टाङ्गशारीर I—2. [2] अष्टाङ्गशारीर I—3.

सात्त्विकराजसतामसगुणाः तत्तदुत्पादकहेतुत्वकाः कार्यमनुयान्तीति हेतुमद्भावस्य नियामकत्वात् । तत्तद्धेतुभूतरसादनाज्जातसात्त्विकराजसतामस-गुणाः जीवात्मनि सन्ति । अत एव तस्य गुणित्वं प्रतिपादितम् । यथा स्फटिकस्थितं तेजः । अर्कतीक्ष्णकिरणाविर्भावे सति तत्रानलो दृश्यते । तत्र स्फटिकार्ककिरणसंयोगः कारणम् । कार्योत्पादकसामग्र्यां सत्यां अवि-लम्बेन कार्यकारणभावसामग्रीसान्निध्यात् कार्यं यत्र दृश्यते तत्रायं नियमो ज्ञातव्यः । तत्र जीवस्यावयवे सात्त्विकादयः अदृष्टादिसकलसामग्र्यां सत्यां मातापित्रन्तरुपस्थितहिताहितान्नादनादन्तः प्रविष्टे सति ग्रहणीकलाश्रयो धातून्सम्पोष्य रसासृङ्मांसमेदसां समाहारो रक्तधातुरिति व्यपदिश्यते । पैतृकं तु शुक्लम् । अस्थिमज्जारेतसां समाहारश्शुक्लमिति व्यपदिश्यते । अन्यथा रक्तशुक्लावेव कारणे सप्तधातुमयशरीरोत्पत्तिरूपकार्यस्येति वक्तुं न शक्यते । तस्मात्सप्तधातुमयं शरीरमिति ज्ञापनार्थम् ॥

> मृद्वत्र मातृजं रक्तमांसमज्जासृगादिकम् ।
> पैतृकं तु स्थिरं शुक्रं धमन्यस्थिकचादिकम् [1] ॥

इति वचनानुसारेण ।

अत्र काव्यवचनं—

> स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेस्सिसृक्षया ।
> प्रसूतिकाले सर्वस्य तावेव पितरौ स्मृतौ ॥

तस्माच्छुक्लशोणितसन्निपातो योनिरिति । सान्निपात्यशब्दमहिम्ना बीजात्मकधातुमेलनं सान्निपात्यम् । तत्र शारीरवचनं—

---

[1] अष्टाङ्गशारीर III—4.

चेतन्य: चित्तवृक्षाणां नानायोनिषु जन्मसु ।

नानायोनिषु तेषु चेतन्यश्चित्तं आविर्भवति तादृशमित्यर्थः ।

ननु पैतृकास्त्रय: मातृजाश्चत्वार एवं सप्तधातुमयं शरीरमिति शरीरकार्यस्य कारणत्वं प्रतिपादितम् । एवं सति श्रुतिविरोधस्स्यात् । "आत्मन आकाशस्सम्भूतः । आकाशाद्वायुः" । इति विद्यमानत्वात् । अन्तस्स्थितधातुपोषणं कुर्वन्ति ते । तस्मादेव व्याख्यानमयुक्तमित्यस्वरसादाह — यत्रेति ।

**यत्रस्था रसास्तत्तद्भूतजातास्ते धातुपोषकाः ॥ ८८ ॥**

यत्र स्थिताः तत्तदवच्छेदकगुणाविक्यं यत्र भासते तदवच्छेदकावच्छिन्ना रसास्तदवच्छेदकावच्छिन्ना भवन्तः तत्तद्धातुजनका इति ते रसा धातुपोषकाः ॥

**अथात आदिभूतं यः कर्ता यावत्कृतेस्तथा तदेव भेषजं मनःकामहृद्गतकफशुक्रादिभिरावृतं शरीरं दश ॥ ८९ ॥**

इत्यायुर्वेदस्य प्रथमप्रश्नस्य भाष्यं योगानन्दनाथकृतं
सुप्रसिद्धं महाजनसंमतं प्रतिसूत्रव्याख्यानं
लोकोपकारकम्
प्रथमप्रश्नः समाप्तः



## आयुर्वेदे द्वितीयप्रश्नः

—o—

गुहान्तरनिवासिनीं गुरुकृपाकटाक्षादमी
सहायमनुचिन्तकास्सरसिजेषु षट्सु क्रमात् ।
गुहामयभिपक्तया सततमष्टवाग्वादिनीं
महात्रिपुरसुन्दरीमिह मुहुर्नमस्कुर्महे ॥

रोगत्वं प्रतिपादितम् । रोगनिवृत्तिद्वारा धातुपोषणं वक्तुमुचितं भवति । तथा सति दोषप्रकोपनिवर्तकं रसादिर्विना लोके निवर्तकद्रव्याभावः सुप्रसिद्ध इत्यस्वरसादाह—द्विरसेति ।

**द्विरसार्थरमहीनार्थहीनरसवाननिलनिवारकः ॥ १ ॥**

स्वादुरसो रसपचनप्रकोपनिवर्तकः । पित्तप्रकोपोऽपि स्वादुरसेन भाव्यः । एकस्य द्रव्यस्योभयदोषनिवर्तकत्वं वक्तुं शक्यते । द्विरसार्थहीनाधिकरसद्रव्यं पवनपित्तप्रकोपनिवर्तकम् । अधिकस्वादुरसद्रव्यं पित्तप्रकोपनिवर्तकम् । तस्मादधिकरसद्रव्यं पवनं हरतीति सूत्रे प्रतिपादितम् ॥

कषायतिक्तमधुराः पित्तमन्यैस्तु कुप्यते । इति ॥

ननु शरीरं सप्तधातुमयं, तज्जन्यमपि सप्तधातुमयं भवति शरीरे सिराः कति सन्ति? आशयाश्च मर्मस्थानसन्धयः! तत्सर्वं विहाय पैतृकास्त्रयः मातृजाश्चत्वारो धातव एवाभिहिता इत्याशयं मनसि निधाय तत्र स्थितसिरामर्मास्थिसन्ध्याशयानलादीनि व्याचष्टे—षडिति ॥

**षट्सहस्रत्रिंशत्सिरास्त्रिंशच्छल्याश्शतद्वयदशोत्तरसन्धयो नवाशीतिस्नायुपेशिधरा भवन्ति ॥ २ ॥**

शरीरमात्रं सर्वत्र सिरावृतम् । तथाऽस्थीनि सन्धयश्चाशयाश्च सर्वैरेभिरावृतं शरीरमिति । तत्सर्वं भूतमयम् । मातुरेवोत्पद्यन्त इत्यर्थः । दोषास्सिरावृता मर्मगता आशयस्थाश्च । एते स्वस्थदोषमार्गा अन्यस्वस्थ-धातून्प्रविशन्ति । स्वस्थास्वस्थदोषविज्ञानार्थं सर्वशरीरं विभज्य तत्तज्ज्ञानं विज्ञाय दोषप्रकोपानपहर्तुं शक्यत एवेत्यर्थः । शरीरस्थितसिरादीन्विभजति ॥

ननु सप्तधातुधरास्सप्तत्वं च पवनसप्तत्वं चाश्रितम् । अन्तःप्रविष्ट-स्स्वादुरसो भूत्वाऽनिलप्रकोपं हरतीति यत्तदयुक्तं, धातुपोषककार्योपकारकत्वे-नान्यथासिद्धत्वात् । त्वगन्तस्स्थरसासृगादयो यथाविधि मार्गे सञ्चारी-कृताः । पवनप्रकोपस्य निवारकत्वं स्वादुरसस्य कथं भवेदित्यस्वरसादाह— सप्तेति ।

**सप्तधातुधरास्सप्ताशयास्तन्मध्यगग्रहणीकलाजातः स्वादुरसोऽनिलप्रकोपं हरति ॥ ३ ॥**

अस्यार्थः—सप्तत्वचः सप्तधातून्दधति । रसरक्तावपि अनिलसञ्चा-रायथामार्गमनतिक्रम्य स्थितस्थापकत्वमनिल एव हरति । तस्य तावन्मात्रोप-कारकगुणत्वात् स्वादुरसः अनिलप्रकोपं हरतीति यत्तद्युक्तमित्यर्थः । गता-गतकलोपकारकत्वं अनिल एव करोति । तस्मादनिलप्रकोपनिवृत्त्यर्थं स्वादुरसद्रव्यादनं युक्तमित्यर्थः । तत्र सूत्रवचनं—

प्राणादिभेदात्पञ्चात्मा वायुः प्राणोऽत्र मूर्धगः ।
उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ॥

छीवनक्षवथूद्गारनिश्वासान्नप्रवेशकृत् ।
उरस्थानमुदानस्य नासानाभिगलांश्चरेत् ।
वाक्प्रवृत्तिप्रयत्नौजोबलवर्णप्रतिक्रियः [1] ॥

इति । एतद्वचनानुसारेण सर्वशरीरव्यापकत्वमनिलस्य । तस्मात्स्वादुरसः अनिलकोपं हरतीत्यर्थः ॥

ननु एतादृशाशयानां सर्वशरीरान्तरस्थितत्वस्य सार्वजनीनत्वेन तत्तत्कार्योपलम्भकत्वं यथाविधि चोदितमिति सप्ताशयास्सप्तधातुमन्तः सर्वसाधारणत्वात् । तथा सति एष्वाशयेषु प्रजाजननदेशं निर्णेतुमशक्यत्वात्, किं च सप्तत्वविसराधात्वाशयाभिवर्धनं पञ्चपाचकपित्तानिलजातत्वादुरसोऽनिलप्रकोपमपहरतु । तस्य रोगारोगैककारणत्वं सर्वशरीराणां सुप्रसिद्धमिति तात्पर्यं मनसि निधाय प्रजाजननहेतुप्रदेशं विवृणोति—अष्टेति ।

अष्टमो गर्भाशयः स्त्रीणाम् ॥ ४ ॥

प्रजाजननहेतुकाशयः स्त्रीणामेव सम्भाव्य इत्यर्थः । तत्र शारीरवचनं—

गर्भाशयेऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे । [2]

सप्ताशयातिरिक्तं पित्तपक्वाशयान्तरं नेतरेषु सम्भावितमिति गर्भाधानहेतुकत्वं स्त्रीणामेव सम्भावितत्वात् । अत एव प्रथमतः स्त्रीणां नामोच्चारणानन्तरं पुंनामोच्चारणमिति सकलशास्त्रेषु श्रेष्ठक्रमोऽस्तीति व्यपदेशितम् । आदौ स्त्रीपुरुषयोर्धातुरेव योन्यां प्रविश्य जनयति । तथा सति धातुमेलनमेव पिण्डं भवेत् । यावत्कारणं तावत्कार्यमिति न्यायात् ।

---

[1] अष्टाङ्गसूत्रम् । प्रयत्नोर्जाबलवर्णस्मृतिक्रियः । (क) XII—4-5.
[2] अष्टाङ्गशारीरं III—11.

इदानीमङ्गजननकार्यदर्शनस्य हेत्वभावो दृश्यते । कारणेन विना कथं कार्योत्पत्तिरित्यस्वरसादाह—स्वमिति ।

**स्वं स्वं स्वोष्मणा स्रवद्रसात्मं चौजः ।**
**स्वं स्वं स्वस्य स्वयमेव हेतुर्भवति ॥ ५ ॥**

स्वाङ्गानि स्वस्मिन्नेव प्रजाः प्रजायन्ते, अन्यथा तदन्वयव्यतिरेकाभ्यां सुखदुःखे कथमुपपद्येते । अन्यजननस्य तदन्वयव्यतिरेके सति सुखदुःखानुभवोऽस्तीत्यत इतरजनने स्वशरीरमेव कारणमिति । तत्र काव्यवचनं—

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मनैव प्रलीयसे ॥

श्रुतिवचनं—

अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदां शतम् ॥

गर्भाशयगतोष्मणा मातुः पित्तसारः स्रवति । तत्सारजन्यस्सारः शिरउत्पादको भवति । तद्रसात्मकं चौजो भवति । गर्भाशयगतोष्मणा मातुः पाणिः स्रवति । तत्सारजन्यो रसः पाण्युत्पादको भवति । गर्भाशयगतोष्मणा मातुः पादसारस्स्रवति । तत्सारजन्यसारः पादोत्पादको भवति । एवं पार्श्वौ च । पृष्ठोदरजङ्घशिश्नोपस्थपाय्वङ्गादीनि गर्भाशयगतोष्मणा मातुरङ्गानि एषु स्रवन्ति । तत्सारजन्यसाराणि तदुत्पादकानि भवन्ति । मातुराहाररसाहारास्तद्व्यतिरिक्ताङ्गाभिवर्धकाः । तान्यङ्गानि रक्तभूतानि सन्ति । तत्तदङ्गेषु वायुः प्रकुप्यते । तत्पवनकोपनिवृत्त्यर्थं स्वादुरसवद्द्रव्यम्, तन्निवर्तनद्वारा भेषजं स्वादुरसमश्नीयात् ॥

अथ ज्ञापनार्थं तदुत्पादकान्यङ्गान्याह—शिर इति ॥

**शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपाय्वङ्गानि भवन्ति ॥ ६ ॥**

एतानि मातुर्गर्भाशये स्रवन्ति । तत्तदङ्गान्याविर्भवन्तीत्यर्थः । ते रसा गर्भाशयमुखं पुष्णन्तीत्यर्थः । गर्भाशयगतोष्मणा मातुः पादपार्श्वपृष्ठोदरजङ्घशिश्नोपस्थेभ्यस्सारास्स्रवन्ति । तत्सारजन्यसाराः पार्श्वाद्यङ्गोत्पादकाः । तद्रसात्मकं चौजो भवति । अन्तर्वर्त्न्याः शिरोमांसाशयानां सारस्य गर्भे स्रावितत्वात् । गर्भाशये पवनप्रकोपस्य युक्तत्वात्, तदथ स्वादु रसवद्द्रव्यमद्यात् । अङ्गाविर्भावानन्तरं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामतिक्षत्वात् तत्तत्स्थितानि तत्तत्स्थानं विहाय गर्भाशयं प्रवेष्टुमयोग्यत्वात् श्रोत्रादीनामाविर्भावः कथं स्यादित्यस्वरसादाह—श्रोत्रेति ॥

**श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणास्तथा ॥ ७ ॥**

सर्वेन्द्रियाणि सूक्ष्मशरीराण्यपि मातुस्स्वशरीरास्थितपञ्चभूतानां गर्भाशये उपलभ्यमानत्वात् । इन्द्रियादीनां तत्तद्गुणत्वादेव गुणिनमन्तरेण गुणावस्थानस्य वक्तुमयोग्यत्वात् तत्तद्भूतप्रवेशनात्तत्तदिन्द्रियसहिता एव गर्भाशयं प्रविशन्तीत्यर्थः । धात्वादीनां सारद्रव्यत्वेन स्वं स्वं स्वोष्मणा स्रवत्तदाकृतिकार्यहेतुकमातृधातुस्रावितावयवो गर्भाशये कुणपावयवाभिवृद्धिहेतुककार्यं रसावकाशवद्भवतीति । तस्मात्तयोः कार्यकारणभावो वक्तुं शक्यते । अत्र तु निराकृति द्रव्यं सरन्ध्रकं कथमन्यत्र प्रवेष्टुं शक्यते ? शिरःपाण्यादिवत्सावयवद्रव्यत्वाभावात् सावकाशप्रवेशानवकाशः । इदं तु निरवयवद्रव्यं स्वमातृस्रावयवपारं गर्भाशये स्रवतीति वक्तुमशक्यमित्यस्वरसादाह—सरन्ध्रेति ।

**सरन्ध्रकाभ्यन्तरधरास्त्रयस्त्रयस्सिराः ।**

**पादयोश्चतुस्त्रिंशत्सरन्ध्रकाभ्यन्तरधराः ॥ ८ ॥**

अस्यार्थः—

काश्चिदभ्यन्तरधराः काश्चित्सरन्ध्रकाः एकैकशस्त्रिसिरावृताः । सावकाशद्रव्यस्य व्याप्याकाशत्वेन शरीरस्य पञ्चभूतात्मकत्वेन आकाशद्रव्यस्यापि तत्प्रविष्टत्वात् तस्य त्रित्रिसिरावृतद्रव्यत्वात् गर्भाशये स्रावयितुं युक्तमित्यर्थः । अत्र त्रित्रिसिरावृताः सरन्ध्रकाभ्यन्तरधराः सप्तशतसङ्ख्याकाः पादमस्तकाधिष्ठिता इत्यर्थः । मातृगर्भाशये तदङ्गानि तत्रैव स्रवन्तीत्युक्तम् । तदेव विवृणोति—पादेति । पादयुग्मस्थितपद्मं गर्भाशये स्रावितत्वात् तत्पादयुगमजायत । अवर्णद्वयमपि तत्रैवाजायत । तदनन्तरं मातृजानुस्थितत्रिसिरावृतं च मातृगर्भाशये कुणपपिण्डरूपस्याविर्भावे कथं नु मातुरङ्गसार एव तत्राविर्भवतीत्यत आह—पादेति ।

**पादस्थितपद्ममवर्णजनकं चतुस्त्रिंशत्सिरावृतम् ॥ ९ ॥**

मातुरङ्गभूतपादं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकसरन्ध्रकाभ्यन्तरं चतुस्त्रिंशत्सिरावृतं तत्पादस्थितावर्णं वामपादे स्वरितप्लुतसहितावर्णात्मकं पादयुगमजायतेत्यर्थः । तदूर्ध्वाङ्गं जानुयुगं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकमजायतेत्याह— जान्विति ।

**जानुपद्मगतमिवर्णजनकं चतुस्त्रिंशत्सिरावृतम् ॥ १० ॥**

सरन्ध्रकाभ्यन्तरधरचतुस्त्रिंशत्सिरावृतं वामेतरजानुयुगं स्वरितप्लुतसहितेवर्णद्वयं गर्भाशये स्रावितं तज्जानुयुगमजायतेत्यर्थः ।

गतागतकर्मोपकारकवर्णप्रयुक्तवातपित्तकफदोषाश्रयद्रव्यादनेन अविक्रान्तः गतागतकर्मोपकारकजङ्घ देशगतपद्मं सरन्ध्रकाभ्यन्तरविंशतिसिरावृतं जानुपद्ममजायतेत्याह—उवर्णेति ।

**उवर्णात्मकमूरुप्रदेशपद्मं त्रिंशतिसिरावृतम् ।। ११ ।।**

स्वरितप्लुतसहितोवर्णजङ्घापद्मं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं गर्भाशये आविर्भवतीत्यर्थः ।

श्रोणिप्रदेशस्थितसरन्ध्रकाभ्यन्तरधराश्रितवर्णज्ञापकमूरुप्रदेशपद्मं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं दृश्यत इत्याह—ऋवर्णेति ।

**ऋवर्णजनकं श्रोणिप्रदेशपद्मं विंशतिसिरावृतम् ।। १२ ।।**

ऋवर्णहेतुकमूरुप्रदेशपद्मं विंशतिसिरावृतं स्वरितप्लुतसहितवर्णाधारभूतं पाचकपित्तोष्मभिर्विंशतिसिरावृतं वामेतरोरुपद्मं गतागतकर्मोपकारकबहुभारजं मातुरङ्गादेव गर्माशये आविर्भवतीत्यर्थः ।

ऌवर्णज्ञापकं श्रोणिप्रदेशपद्मं तथैवाजायतेत्याह—ऌवर्णेति ।

**ऌवर्णजनकं श्रोणिप्रदेशपद्मं चतुस्त्रिंशत्सिरावृतम् ।। १३ ।।**

सरन्ध्रकाभ्यन्तरसिरावृतमूर्ध्वाङ्गभारवहं श्रोणिप्रदेशपद्मं आविर्भवतीत्यर्थः ।

एवर्णाधारभूतमेवर्णस्वरितप्लुतवर्णाधारभूतकटिबीजवङ्क्षणतत्पार्श्वलग्नं आधारभूतमातुरङ्गान्येव तत्राविर्भवन्तीत्याह—एवर्णमिति ।

**एवर्णजनकं कटिप्रदेशगतपद्मं चतुस्त्रिंश-त्सिरावृतम् ।। १४ ।।**

**ऐवर्णजनकं बीजगतपार्श्वगतपद्मं चतुस्त्रिंश-त्सिरावृतम् ।। १५ ।।**

**ओवर्णजनकं वङ्क्षणप्रदेशगतं पद्मं द्वादश-सिरावृतम् ।। १६ ।।**

**औवर्णजनकं बीजप्रदेशगतं पद्मं द्विसिरा-वृतम् ।। १७ ।।**

मिथुनकर्मोपयोगिका ए ऐ ओ औ इत्याद्यचः कटिप्रदेशपद्मं वङ्क्षण-प्रदेशपद्मं चतुस्त्रिंशत्सिरावृतं मातुरङ्गानि स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं गर्भाशये आविर्भवन्तीत्यर्थः ॥

दीर्घस्वरितप्लुतस्वररूपभूतानां ए ऐ ओ औ वर्णानामाधारभूतानि । अनुबन्धकहेतुवर्गस्य मध्ये कखवर्णद्वयस्य एवर्णाधारपद्मपार्श्वस्थितपद्मस्य प्रजाजननहेतुभूतस्य मिथुनकर्महेतुपद्मं विवृणोति—कखेति ।

**कखवर्णजनकं तत्पार्श्वपद्मं षोडशसिरावृतम् ।। १८ ।।**

अवर्णकवर्णहवर्णज्ञापकसिरावृतपवनतात्वोष्ठपुटव्यापार औवर्णज्ञापक-सामग्री सरन्ध्रकाभ्यन्तरचतुस्त्रिंशत्सिरागतपवनं दीर्घस्वरितप्लुतसहितमज्जं तत्पार्श्वस्थितं सत् श्रोत्राकाशमुद्भावयतीत्यर्थः ।

मिथुनकर्मोपकारकमेढ्रपद्मं सरन्ध्रकाभ्यन्तरधरत्रिषष्टिसिरावृतं गघवर्ण-देवताधारभूतं सप्तधातुरजन्यरेतआधारभूतं सकलधातुसिरामयं मन्मथगेहपद्मं विवृणोति—गघेति ।

गघवर्णजनकमेढ्रप्रदेशत्रिषष्टिसिरावृतः ॥ १९ ॥

गर्भाशये पिण्डं यथा भवति तथा मातुराहाररसजातं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं पुंवत्पिण्डं यथा दृश्यते तन्मेढ्रपद्माज्जायत इति वक्तव्यम्, तस्य मातुरङ्गाभावत्वेन मेढ्रपद्मस्यायोग्यत्वात्। एतदाविर्भावकथनमयोग्यमिति न वाच्यम्। रेतोऽधिकत्वात् पुत्रो भवतीति न्यायात्। शुक्लशोणितसन्निपातो योनिरिति लक्षणवचनाच्च। एतयोरैक्यं योनिः। तद्वचनं तत्तदङ्गाविर्भावकथनं मातुराहारपरिणामवशात् पुंनिष्ठरेतस आधिक्यं यत्र भवति तत्र मेढ्रपद्मस्य हेतुत्वात् शुक्रशोणितसान्निपात्याविर्भावकथनं तत्तदभिवर्धनं च। स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं पुन्निष्ठाङ्गाविर्भावं तत्सान्निपात्याभिवर्धनं तस्यापि योनिलिङ्गस्यापि मेढ्रपद्मत्वात् तज्जातत्वकथनं तदङ्गाभिवर्धनं च युक्तमित्यर्थः। पुन्निष्ठमेढ्रपद्मं स्त्रीनिष्ठयोनिपद्मं चेत्युभयस्यापि मन्मथगेहत्वात्। रेतआधिक्यजातोपाधिकवशाच्च। दीर्घमेढ्रहेतुकपद्मस्य पुन्निष्ठत्वेन तदङ्गाभिवर्धनं युक्तमिति तात्पर्यम्।

स्त्रीनिष्ठसिरावृतमेढ्रपद्माधारभूतपृष्ठदेशपद्मं विविच्य दर्शयति—डेति।

डोच्चारणहेतुकं पृष्ठदेशगतं पद्मं चतुस्त्रिंशत्सिरावृतम् ॥ २० ॥

सरन्ध्रकाभ्यन्तराधारचतुस्त्रिंशत्सिरावृतं डवर्णदेवताधारभूतपृष्ठदेशपद्मं ऊर्ध्वाङ्गसर्वदेहभारं भजन पादजानुजङ्घोरुकटिश्रोणिभ्यां गतागतरूपचलनात्मककर्म कुर्वत् मिथुनकर्मोपकारकफलमात्रमेव भजत् अपानपवनाधारकं जठरानलप्रदेशाधारभूतं तज्जातमलनिस्सारणहेतुकं भवतीत्यर्थः। ननु

स्त्रीपुरुषसाधारणलिङ्गमेढ्रपद्मे तत्तज्जातिजन्यस्वरा एव तत्तद्वर्णशरीरज्ञापकाश्शरीरभेदमपि तत्र जाता वर्णा एव ज्ञापयन्तीत्युक्तम् । तत्तद्देशास्थितगुदविवरस्यापि सरन्ध्रकत्वात् तद्गुदप्रदेशविवरं विहाय योनिलिङ्गमेढ्रपद्मस्थितरन्ध्राणां हीनाधिकत्वात् तत्तज्जातिजन्यस्वरज्ञापकगुदस्थितरन्ध्रमार्गं विहाय लिङ्गमेढ्ररन्ध्राधारसिरारन्ध्रमार्गगतपवननिस्सरणगघवर्णभेदज्ञानज्ञापकं भवतीत्याशयं मनसि निधाय गुदद्वाराधारभूतवर्णदेवतां विवृणोति—ङेति ।

**ङोच्चारणहेतुकं पृष्ठदेशपद्मं चतुस्त्रिंशत्सिरावृतम् ॥ २१ ॥**

ङकारानुबन्धदेवताधारभूतपृष्ठदेशपद्मं चतुस्त्रिंशत्सिरावृतम् । पृष्ठदेशपद्मविवरस्य विट्संसरणमात्र एव चरितार्थत्वात् सवर्णस्वराभेदज्ञापकं भवतीत्यर्थः ।

सर्वाशयानामाधारभूतगुदावृतवलयपद्मयोनिलिङ्गमेढ्रपद्मावृतसिरावर्णाधारभूतगुदावृतचक्रपद्मं चछवर्णदेवतात्मकं विवृणोति—चछेति ।

**चछवर्णोत्पादकं तत्पार्श्वपद्मं चतुर्दशसिरावृतम् ॥ २२ ॥**

गुदपद्मस्य वक्राकारेणावृतपद्मे तत्पार्श्वपद्मं पवननिस्सरणहेतुभूतचछवर्णदेवतात्मकं गर्भाशये आविर्भवतीत्यर्थः ।

जठरानलरूपपाचकपित्तस्य आधारभूतजठरानलपद्मं आविर्भवतीत्याह—जझेति ।

**जझवर्णोच्चारणहेतुकं जठरानलपद्मं चतुर्दशसिरावृतम् ॥ २३ ॥**

कुण्डल्याधारभूतगतपवनदेवतारूपषट्कमलानामाधारभूतत्वात् श्वासो-च्छ्वासरूपपवनाधारभूतं नाभिपद्मं मातुराहाररसजातरसाहृतकमलकाण्डालवालस्थरूपं विवृणोति—ञेति ।

ञवर्णोत्पादकं नाभिप्रदेशपद्मं विंशतिसिरा-
वृतम् ।। २४ ।।

कुण्डलीगतनत्पार्श्वगपवनस्य आधारभूतं सरन्ध्रकाभ्यन्तरधरं विंशति-सिरावृतम् । नाभिप्रदेशपद्मं ञवर्णदेवतात्मकं पाचकपित्ताग्निजनकं अग्नि-चक्रजातश्वासानिलोष्मणा सहस्रदलावृतशिरःकमलस्थामृतजनकं भवतीत्यर्थः ।।

नाभिरन्ध्रसिरावृतकुण्डलीरूपपवनचक्रं सरन्ध्रकाभ्यन्तरधरत्रिंशत्सिरावृतं नाभिपद्मावृतपवनचक्रं व्याचष्टे—टठेति ।

टठवर्णोत्पादकं नाभिप्रदेशपद्मं त्रिंशत्सिरा-
वृतम् ।। २५ ।।

कुण्डल्याधारभूतानिलात्मनाभिरन्ध्रसिरावृतपवनचक्रं मातुराहाररसाद्गर्भा-शयं पोषयत् टठवर्णदेवतात्मकं त्रिंशत्सिरावृतं नाभ्यावृतपवनचक्रमाविर्भव-तीत्यर्थः ।

नाभिपार्श्वस्थितरोमराजिकार्यजनकाभ्यावृतालवालचक्रं द्वाविंशतिसिरा-वृतडढवर्णदेवतात्मकं मातुराहाररसादनाज्जातरसस्राावितं गर्भाशयरोमराजिशाखि जायत इत्याह—डढेति ।

डढवर्णहेतुकं रोमराजिपार्श्वगतं द्वाविंशतिसिरा-
वृतम् ।। २६ ।।

सरन्ध्रकाभ्यन्तरद्वाविंशतिसिरावृतपवनेन डढवर्णदेवताश्रोत्रविवरप्रापण-

रोमराजिहेतुकपार्श्वद्वयपद्मं जायत इत्यर्थः ।

तद्रोमराजिफलीभूतहृत्कमलं विवृणोति—णवर्णेति ।

**णवर्णाधारभूतं हृत्कमलं त्रिंशत्सिरावृतम् ॥ २७ ॥**

त्रिंशत्सिरावृतं हृत्कमलं प्रादुर्भवतीत्यर्थः ।

पञ्चाशत्सिरावृतस्तनद्वयपद्मं सकलस्वराभिव्यञ्जकमाह—तथेति ।

**तथवर्णोत्पादकं स्तनद्वयपद्मं पञ्चाशत्सिरावृतम् ॥ २८ ॥**

अधिकस्तनद्वयपद्मं सुस्वराभिव्यञ्जकहेतुकं स्तनद्वयपद्मवत् पुंसामधिक-घोषधातुज्ञापकं तन्मांसग्रन्थिरूपं दीर्घस्वरितप्लुतसहिताचामाधारभूतं तादृश-स्तनयुग्मं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं मातुराहारपरिणामाज्जातं गर्भाशये स्तनयुगं जायत इत्यर्थः ॥

सरन्ध्रकाभ्यन्तरधरकण्टदेशपद्मं दधवर्णोत्पत्तिकार्यहेतुकं कण्ठदेशपद्मं जायत इत्याह—दधेति ।

**दधवर्णोत्पादकं कण्ठदेशपद्मं पञ्चाशत्सिरावृतम् ॥ २९ ॥**

सर्ववर्णानामाधारभूतं सर्वसिराभिव्यञ्जकं गर्भाशये मातुराहाररस-परिणामहेतुकं कण्ठदेशपद्मं जायत इत्यर्थः ॥

सरन्ध्रकाभ्यन्तरधरसिरावृतं अनुस्वारनवर्णदेवतात्मकं जायत इत्याह—नेति ।

**नवर्णोत्पादकं ग्रीवापद्मं षोडशसिरावृतम् ॥ ३० ॥**

नवर्णोत्पादकं षोडशसिरावृतं गर्भाशये ग्रीवापद्मं जायत इत्यर्थः । शिरस्स्थानाधिष्ठितनवर्णरूपानुस्वारदेवतात्मकं षोडशसिरावृतं ग्रीवाङ्गाधारभूत-पद्मं मातुर्गर्भाशयं प्रविश्य ग्रीवाङ्गं जायत इत्यर्थः ॥

पफवर्णस्थानबाहुप्रदेशं षोडशसिरावृतपद्मं मातुरङ्गं स्वं स्वं स्वोष्मणा स्रवद्रमात्मकं पफवर्णदेवतात्मकं बाहुप्रदेशमित्याह—पफेति ।

**पफवर्णोत्पादकं बाहुपद्मं षोडशसिरावृतम् ।। ३१ ।।**

पफवर्णोत्पादकं तथा बाह्वोः षोडशसिरावृतं सरन्ध्रकाभ्यन्तरधरबाहु-प्रदेशपद्मं गर्भाशये आविर्भवतीत्यर्थः ।।

जिह्वाग्रस्थितलालारूपरसादिबन्धनहेतुकं बभवर्णदेवतात्मकं द्विसिरावृतं जिह्वान्तःप्रदेशगतपद्मं मातुरङ्गात्स्रवत् तत्तत्सारगर्भाशयं प्रविश्य रसबन्धनपद्मं जायत इत्याह—बभेति ।

**बभवर्णजनकं प्रकोष्ठप्रदेशपद्मं पञ्चाशत्सिरा-वृतम् ।। ३२ ।।**

बभवर्णज्ञापकं रसबन्धनपद्मं सरन्ध्रकाभ्यन्तरधरं पञ्चाशत्सिरावृतप्रकोष्ठ-गतपद्मं बभवर्णदेवतात्मकं रसवद्द्रव्यादनसारजातं मातुरङ्गात्स्रवीभूतं प्रकोष्ठ-पद्मं गर्भाशये आविर्भवतीत्यर्थः ।

अनुस्वारसहितबिन्दुरूपमवर्णदेवतात्मकं मनोविषयकयावच्छब्दोच्चारण-जातार्थबोधकहस्तविन्यासज्ञापकं हस्तपद्मं जायत इत्याह—मेति ।

**मवर्णोच्चारणहेतुकं सकलशब्दार्थज्ञापकं हस्तगतपद्मं पञ्चाशत्सिरावृतम् ।। ३३ ।।**

ताल्वोष्ठपुटव्यापाराधीनशब्दार्थविषयज्ञापकयावत्सिरासजातीयव्यापकं हस्तपद्ममाविर्भवतीत्यर्थः ।।

जिह्वाग्रस्थितलालारूपरसादिज्ञापकं यवर्णदेवतात्मकं द्विसिरावृत-

जिह्वाग्रगतपद्मं मातुरङ्गात्तन्त्रीभूतरसबन्धनपद्मं गर्भाशये जायत इत्याह—यवर्णेति ।

**यवर्णज्ञापकं रसबन्धनपद्मं द्विसिरावृतम् ॥ ३४ ॥**

सर्ववर्णज्ञापकहेतुभूतं लालारूपजलात्मकाविर्भूतं यवर्णदेवतात्मकं गर्भाशये जिह्वाग्रगतपद्मं जायत इत्यर्थः ।

जिह्वाग्रस्थितपद्मपार्श्ववर्तिसरन्ध्रकाभ्यन्तररेफवर्णदेवतात्मकं मातुराहार-रसपरिणामवशात् गर्भाशये जिह्वापार्श्वाग्रपद्मं जायत इत्याह—रेफेति ।

**रेफवर्णोत्पादकमोष्ठपद्मं षोडशसिरावृतम् ॥ ३५ ॥**

**लवर्णजनकं वाचस्पतिप्रदेशस्थं द्विसिरावृतम् ॥ ३६ ॥**

सकलवर्णोत्पादकवाचस्पतिप्रदेशगतमोष्ठपद्मं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं गर्भाशये दृश्यत इत्यर्थः ॥

चतुर्विंशतिसिरात्मकलवर्णज्ञापकं तद्वर्णाधिष्ठितदेवतात्मकं स्वं स्वं स्वोष्मणा स्रवद्रसात्मकं नासिकाग्रगतपद्मं जायत इत्याह—वेति ।

**ववर्णोत्पादकं नासिकाग्रगतपद्मं चतुस्त्रिंशत्सिरा-वृतम् ॥ ३७ ॥**

गन्धवती पृथिवी सर्वद्रव्यनिष्ठगन्धं चतुस्त्रिंशत्सिरावृता जिघ्रन्ती गर्भाशयं प्रविश्य प्रादुर्भवतीत्यर्थः ॥

एकैकसिरावृतं तालुद्वयगतपद्मं शवर्णोच्चारणहेतुभूतं आस्यप्रदेशं सम्प्राप्य श्रोत्रप्रदेशपद्मं भवतीत्याह—शेति ।

**शवर्णज्ञापकं गन्धवहपद्मं द्विसिरावृतम् ॥ ३८ ॥**

द्विसिरावृत्तशवर्णदेवतात्मकं तालुद्वयपद्मं रसनेन्द्रियगतलालारूप-जलजनकं व्याचष्टे—षेति ।

**षवर्णोत्पादकतालुद्वयपद्ममेकैकसिरावृतम् ॥ ३९ ॥**

तालुप्रदेशाधारकद्विसिरागतपवनेन षवर्णं श्रोत्रेन्द्रियं प्राप्य ताल्वोष्ठपुट-व्यापारसामग्रीसान्निध्ये भवतीत्यर्थः ॥

पञ्चाशत्सिरावृतमक्षिपद्मं सवर्णाधारभूतं जायत इत्याह—सेति ।

**सवर्णज्ञापकमक्षिप्रदेशगतपद्मं चतुःपञ्चाश-त्सिरावृतम् ॥ ४० ॥**

तत्तज्जनाक्षिपद्मं सवर्णज्ञापकं गर्भाशये आविर्भवतीत्यर्थः ।

सरन्ध्रकाभ्यन्तरद्विसिरावृतपक्षप्रदेशपद्मं आविर्भवतीत्याह—हेति ।

**हवर्णोत्पादकं पक्षप्रदेशपद्मं द्विसिरावृतम् ॥ ४१ ॥**

मातुराहारादनाज्जातं हवर्णदेवतात्मकं जायत इत्यर्थः ।

सरन्ध्रकाभ्यन्तरधरद्विसिरावृतळवर्णदेवतात्मकं अपाङ्गदेशपद्ममाविर्भव-तीत्याह—ळेति ।

**ळवर्णोत्पादकमपाङ्गदेशपद्मं द्विसिरावृतम् ॥ ४२ ॥**

मातुराहाररसाज्जातं मातुरपाङ्गपद्मं गर्भाशये आविर्भवतीत्यर्थः ।

एकैकसिरावृतं द्वात्रिंशद्दन्तपङ्क्तिपद्मं क्षवर्णदेवतात्मकं जायत इत्याह—क्षेति ।

**क्षवर्णज्ञापकं दन्तपङ्क्तिप्रदेशपद्मं त्रिंश-त्सिरावृतम् ॥ ४३ ॥**

मातुराहाररसाज्जातं दन्तपङ्क्तिपद्मं गर्भाशये आविर्भवतीत्यर्थः ।

पञ्चदशसिरावृतं कपोलपद्मं रवर्णदेवतात्मकं गर्भाशये प्रादुर्भवतीत्याह —रेफेति ।

**रेफोत्पादकं कपोलपद्मं रवर्णदेवतात्मकम् ॥ ४४ ॥**

रेफदेवतात्मकं कपोलपद्मं गर्भाशये आविर्भवतीत्यर्थः ।

आदिक्षान्तवर्णाधारकाङ्गपद्मं पादाद्यङ्गाधिष्ठितं वर्णोच्चारणप्रयत्न-जातवर्णाद्यनुभवज्ञानविषयकताल्वोष्ठपुटव्यापारजातपवनप्रयत्नप्रेरिताङ्गज्ञापक— वर्णज्ञानविषयकज्ञानवत्त्वात्, यन्नैवं तन्नैवं यथा घटः । स्वरितशब्द-विषयकज्ञानं ताल्वोष्ठपुटव्यापाराधीनसंस्कारजातवर्णानुभवविषयकं ज्ञानेच्छा-प्रयत्नजातवर्णानुभवज्ञानविषयकत्वात् यन्नैवं तन्नैवम् । इयं शब्दविषयप्रवृत्तिः इच्छाज्ञानविषयिका, समर्थप्रवृत्तिजनकत्वात्, यथा घटः । एतदनुमान-चतुष्टयं सर्ववर्णानां तत्तदङ्गाधिष्ठितपद्मविषयकं भवति ।

सरन्ध्रकाभ्यन्तरधरास्ससप्तशतसिरा आस्यं च तत्प्रदेशमावृत्य ताल्वोष्ठ-पुटव्यापारभेदकर्मणा वर्णानां उत्पत्तिकारणं, तद्ज्ञानादिकर्मव्यतिरेकेण वर्णा नोत्पद्यन्ते । अन्यथा वीणानादवत्तन्त्रीणां यावद्दुष्टताडनात्पवनेन नखजातकर्मणा तत्तद्वर्णजनकहेतुभूतत्वं भवतीति वीणायन्त्रशरीरे तत्तद्वर्णो-त्पादकं तत्तत्प्रदेशस्थिततत्तद्वर्णजनकनिबन्धनं कृत्वा तावद्वर्णजनकाङ्गुष्ठपुट-

घट्टनेन एतादृशवर्णनिमित्तमेतत् इति तज्जनकहेतुभूतकारणकर्मणां तज्जन्यशब्दानां व्याप्तिं गृहीत्वा तत्तद्वर्णजनककर्म करोतीति तत्तत्कारणानुगुणकार्यमेव उत्पद्यते। सरन्ध्रकाभ्यन्तरधरास्त्रिशत्सिरावृतास्सन्तः हस्ताङ्गुष्ठताडनेन प्रेरिता रणत्सप्तस्वरादिभेदाः पृथक्पृथग्विभिन्नास्सन्तः श्रुतिमण्डलाः स्वरव्यक्तोत्तरोत्तरतारतम्यं भूत्वा हीनमध्यमोत्तमाः कर्मकरणात्तत्तदनुस्वरितस्वराश्श्रूयन्ते। तद्वदेव शरीरयन्त्रं विज्ञाय तत्तद्वर्णानां व्याप्तिं गृहीत्वा तत्तद्वर्णात्मकाः शब्दावच्छेदकप्रयत्नव्यापारकर्मकरणात्तत्तत्स्वराधिष्ठितवर्णात्मकाश्शब्दाः तत्तद्धेतुभूतसिराभिः श्रूयन्त इत्याह—सिरेति।

## सिरास्थदोषगतिजातशब्दः कर्णयोः प्रपद्यते ॥ ४५ ॥

ननु शब्दगुणवदाकाशमिति आकाशस्यैव शब्दजनकत्वम्। कर्णशष्कुल्यवच्छिन्नाकाश एव शब्दो भासते, नान्यत्र। ताल्वोष्ठपुटव्यापारादिकं निमित्तकारणम्। न तावत्सिराणां समवायत्वं तासां शरीरावयवाकारजनकत्वम्। ता न शब्दबोधकाः। पावकस्य दुष्टत्वेन धातुपोषकत्वे भ्रमः। तस्मात्पूर्वोक्तरीत्या सूत्रव्याख्यानं न सङ्गतमिति। अत्रोच्यते—आकाशस्यैकत्वेन अनेकवर्णभेदजनककार्यस्य सामग्र्यभावात्। शरीरान्तस्स्थितधातुसञ्चारितवायुः अत्र न विवक्षितः, किन्तु ताल्वोष्ठपुटव्यापाराङ्गाङ्गसङ्घट्टनाज्जातशब्दकार्यहेतुकपवनश्शब्दजनक इति वक्तुं शक्यते। ताल्वोष्ठपुटव्यापाराङ्गाङ्गसंसर्गाज्जातपवनात् योग्यं भवतीति। यावत्कालविषयकौपाधिकपवनजातशब्दान्तरारम्भकः कदम्बमुकुळन्यायेन वा वीचीतरङ्गन्यायेन वा शब्दान्तरं जायते। तस्माद्द्रव्यसंयोगजातपवनस्य समवायकारणत्वं वक्तुं शक्यते। ताल्वोष्ठपुटव्यापारो यत्र दृश्यते तत्रैव वातशब्दनिमित्तकशब्दो

नियमेन श्रूयते । तस्मात्तयोस्संयोगः समवायकारणमिति द्योत्यते । ताल्वोष्ठ-पुटव्यापारहेतुककार्यस्यास्यसंयोगस्य सिरादीनां वर्णभेदस्य निमित्तकारणत्वं ज्ञाप्यते । वर्णभेदात् शब्दविषयकज्ञानभेदकार्यं विचित्रहेतुप्रतिपादकसामग्री-जन्यं कारणस्य क्रियाविशेषमात्रवैलक्षण्यतया विचित्रवर्णज्ञापकत्वमनुभूयते । सोऽनुभवः सामग्रीभेदाद्भवतीति देशतः कालतः घटनारूपकार्यविशेषतः सिरादिबाहुल्यसंयोगात् हीनाल्पतरोच्चरितस्वरादिवर्णभेदज्ञानं तत्सामग्रीभेदात् भवतीति यत्र यत्संबन्धवर्णः स एव वौसिष्टक ? इत्यभ्युपगमात् श्रोत्राकाशस्य व्यवधानसामीप्यदेशभेदजातमहिम्ना उच्चोच्चतरोच्चतमोच्चारणभेदात्तत्तद्वर्णात्मक-शब्दभेदो ज्ञायते । शब्दभेदबोधकवाक्यं सिराभेदोद्भववर्णभेदबोधककार्यं च पक्षद्वयं गृहीतम् । साध्यं तु तदुच्चारणहेतुभूतवर्णभेदविषयकज्ञानपूर्वं सिरादिभेदजन्यवर्णविषयकज्ञानात्मकत्वात् भेर्यादिशब्दवत् ।

अत्र शारीरवचनं—

दोषधातुमलादीनां ऊष्मेत्यात्रेयशासनम् ।
तदधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता ॥

सैव धन्वन्तरिमते कला पित्तधराह्वया ।
आयुरारोग्यवीर्यौजो भूतधात्वग्निपुष्टये ॥

एतद्वचनानुसारेण तत्तत्प्रदेशोद्भववर्णज्ञापिका ग्रहणीकला । तत्तद्रसादनाजात-वर्णादिभेदज्ञानं तत्तद्रसद्रव्यपाकज्ञातपोषकैककार्यविषयकं रसविरसादनजात-दोषादोषज्ञापकं उच्चोच्चतरशब्दभेदविषयकज्ञानगोचरजनकत्वात् । तत्तद्रसा-हाराद्रसजातफलकार्यं वर्णोच्चारणहेतुपूर्वकं तत्तद्वर्णग्रहणीकलाषोडशकैकफल-

मात्रकार्यत्वात् श्रोत्रान्तस्स्थितसिरासंबन्धकरणेन ग्रहणीकलायाः शब्दबोधक-कार्यहेतुकत्वं व्यपदिश्यत इत्यर्थः । पादपद्ममारभ्य कर्णशष्कुलीकृतपद्म-पर्यन्तस्थितवर्णानां श्रोत्रान्तस्स्थितसिरासंबन्धकार्यकारणं सप्तशतसङ्ख्यापूर्वकानां सिराणां आवेध्यत्वं विधिरिति ज्ञाप्यते । किं च देहधारकाष्टाशीतिसिरा न वेध्याः सिरासङ्कीर्णग्रन्थिकृतक्षुद्रवक्रग्रन्थिषु स्थिताश्च रक्तविमोचनकरणे न योग्या इत्यर्थः । ग्रहणीकलायाः रोगाभावकार्यहेतुकत्वं अविरुद्धरसादना-ज्जातकर्मानुसारेण पाचकपित्ताख्या ग्रहणीकला वातपित्तकफैर्जुष्टानुबोधिकानु-स्वारान् सवर्णान् सुबलान् अकारादिक्षकारान्तवर्णान् स्वस्य चापरस्य च बोधयितु समर्था भवन्तीत्यर्थः ॥

यदि विरुद्धरसादनाज्जाताजीर्णात् अनिलोऽजीर्णः तथा सति दोषगतयो विरुद्धा विकारकाः सत्यः शरीरं पीडयन्ति । यत्तद्दोषकं रसादनानुसारेण विरुद्धबोधकत्वं विवर्णज्ञापकत्वं अबलत्वं स्वरहीनत्वं तत्तद्वर्णे-षूपलभ्यते । तत्तद्वर्णाधिष्ठितस्थलं विकारभूतमिति विज्ञाय तत्तन्निवर्तककार्य-करणं विधिरिति ।

येनारोग्यं भवेद्यस्य भवेद्यत्सुबलं तथा ।
तदेव भेषजं सौख्यं भवेत्तेनैव तत्तदा ॥

इति उक्तत्वात् । येन केन प्रकारेण तन्निवर्तनं कारयेदित्यर्थः । श्रोत्रोपलब्धवर्णात्मकशब्दः सिरान्यदोषगतिक्रियाजन्यहेतुवत् अन्याहेतुकत्वे सति तद्धेतुजन्यत्वात् घटवत् । एतदनुमानेन सर्ववर्णात्मकशब्दानां सिरान्य-दोषगतिक्रियाजन्यत्वं भासते । त्रयाणां कारणत्वसङ्घे सङ्घे शक्तिः[1] न त्वेकैकस्येति प्रतिपादितम् । ननु सिराणां शरीरयन्त्रधारणप्रयोजककार्य-

[1] स त्वेकैकस्या (क).

हेतुकत्वं ब्रूमः । सशब्दोत्पादककार्यहेतुभूतत्वस्य अन्यथासिद्धत्वात् । दोष-गतिप्रकोपेन च रोगसम्भवात् । तथा हि विरुद्धरसादनादजीर्णे सति यावत्कारणाधिक्यजाताः तत्तद्रोगकार्यहेतुकाः सशब्दोपलम्भकान्यहेतुकाः । तत्तद्रोगनिवृत्यर्थं तत्तत्प्रदेशसिरागतासृग्विमोचनेन तत्तद्धेतुभूतरोगनिवर्तनस्य दृष्टत्वात् । सिरान्यगतरोगस्य तन्निष्ठासृग्विमोचननिवर्तककार्यस्य कार्यकारण-भावः सूच्यते । करणस्य क्रियाविशेषवैलक्षण्यमात्रप्रतिपादकत्वात् । तत्र वचनम्—

सिराविधिश्शल्यविधिश्शस्त्रक्षाराग्निकर्म च ।

इति सूत्रवचनस्य सिरासृग्विमोचनरूपकार्यप्रतिपादकत्वाच्च न ते शब्दजन्य-कार्यहेतुका इति । अत्रोच्यते—विरुद्धरसादनाज्जातरोगनिदानभूतलक्षणा-त्तत्सिराप्रबोधकवर्णनिष्ठविकारविरुद्धस्वराघोषवर्णात्मकानि लिङ्गानि विज्ञाय तत्तद्रोगनिवृत्त्यर्थं तत्तत्सिरागतदुष्टरक्तविमोचनमात्र एव चरितार्थत्वात् । तस्मान्नान्यथासिद्धिरित्यर्थः ।

ननु वर्णप्रबोधकसिराः सप्तशतसङ्ख्याकाः । ता एव मर्मस्थानभूताः आवेध्या इत्युक्तम् । यत्र यत्र विकारे जाते तत्तत्प्रदेशस्थितसिरासृग्विमोचनं कर्तव्यमित्युक्तम् ।

शिरोनेत्रविकारेषु ललाट्यां मोचयेत्सिराम् ।

इत्यादिवचनानि बहूनि सन्ति । तत्तद्वचनानुसारेण तत्तत्प्रदेशस्थितसिरा वेध्याः । वेधार्हसिराणामवेधकत्वप्रतिपादनपरं सिरास्यसूत्रं व्यर्थं स्यादित्य-स्वरसादाह—रिक्तेति ।

## रिक्तातिरिक्तातिपूर्णास्सिरा न वेध्याः ॥ ४६ ॥

रिक्तास्सिरा ह्रस्ववर्णोच्चारणहेतुभूताः । अतिरिक्तास्सिरा (दीर्घ) वर्णोच्चारणहेतुभूताः । अतिपूर्णास्सिरास्त्वतिप्लुतवर्णोच्चारणहेतुभूताः ।

ननु तत्र सप्तशतसिराणां मध्ये अष्टाशीतिसिरा वर्णोत्पादकहेतुभूताः ह्रस्वसंयोगोच्चारणहेतुभूततत्तद्बोधविज्ञानविषयकज्ञानविषयानुभवप्रमापदवृत्तिनि - मित्तकाः सुस्वराः अष्टाशीतिसिराजन्यपदविषयकप्रवृत्तिहेतुभूतत्वात् । ता न वेध्या इति ब्रूमः । ह्रस्ववर्णानामधोमुखास्सिराः तज्जनकहेतुभूताः सिरा रिक्ताः । अतिरिक्तास्सिराः संसर्गवर्णोत्पादकवक्रमार्गगाः । अतिपूर्णाः सिरा गतागतोद्बोधकप्रवर्तकपवनगतकार्यानुकूलसुस्वराः प्लुताश्च । तासां करणत्वं प्रतिपादितम् । करणस्य क्रियाविशेषवैलक्षण्यद्योतककार्यहेतुभूतत्वात् । सप्तशतसिराणां मध्ये अष्टानवतिसिराः सरन्ध्रकाभ्यन्तरधराः । ता एव रिक्तातिरिक्तातिपूर्णास्सिरा न वेध्याः । कस्यचिद्देहभेदेन अष्टानवतिसिराः । काश्चित्सरन्ध्रकाभ्यन्तरधराः । सर्वेषामेकप्रकारकवर्णोत्पादकवर्णसमूहपदजन्य- वाक्यानां तत्तच्छरीरावच्छेददर्शनात् । सप्तशतसिराणां मध्ये तादृशा एव नोत्पादका इति व्यवच्छेत्तुं वक्तुमशक्यत्वात् । तत्तच्छरीररूपविचित्रस्वर- शब्दज्ञानविषयकः आत्मा प्रतिशरीरं भिन्नः सुखदुःखादिवैचित्र्यादिभेदे- नोपलभ्यमानत्वात् , शब्दस्वरविचित्रवर्णाङ्गभेदद्रव्यगुणाधारकत्वात् । तस्मा- त्परोद्बोधकत्वसर्ववर्णप्रदात्मकानां ते वैचित्र्योपलम्भकत्वात् । सप्तशतसिराणां अवेधकत्वं वक्तुं विधेयाः सर्ववर्णानां भेदोद्बोधकाः । तस्मात्सप्तशतसिराणा- मधोमुखत्वं प्रतिपादितमित्यर्थः ।

"धन्वन्तरिस्तु त्रीण्याह [1] सन्धीनां च शतद्वयम्"
एतद्वचनमारभ्य न हि धन्वन्तरिमते
"[2] तदधिष्ठानमन्नस्य ग्रहणात् ग्रहणी मता ।
सैव धन्वन्तरिमते [3] कला पित्तधराह्वया ॥

एतावत्प्रतिपादितार्थे सद्वर्णात्मकपदार्थप्रवृत्तिविषयकज्ञानगोचरज्ञान-कार्योद्बोधकसिरा: सप्तशतसङ्ख्याका: ता न वेध्या इति ज्ञापनार्थे "सैव धन्वन्तरिमते" इति शरीरे प्रतिपादितम् । तदेवायुर्वेदप्रतिपादितार्थमिदमिति विविच्य दर्शनात् 'सैव' इत्युक्तम् आमपित्तं पक्त्वा पाचककला सुप्रसन्ना सती तदधिष्ठानवर्णानां ज्ञापकत्वात् ग्रहणीत्यभिधीयते । अविरुद्धरसद्रव्या-दनाज्जातकला प्रबला सती सुवर्णसुस्वरसुपदसुवाक्यबोधिका । कर्णशष्कुल्य-वच्छिन्नाकाशस्य एतेन आयुरारोग्यतेजोधातुप्रतिपादिका भवतीत्यर्थ: । अत्र सूत्रवचनं—

उन्मार्गगा यन्त्रनिपीडनेन
स्वथानमायान्ति पुनर्न यावत् ।
दोषा: प्रदुष्टा रुधिरं प्रपन्ना
तावद्धिताहारविहारभाक्स्यात् ॥

नात्युष्णशीतं लघुदीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनव [4] स्थितासृग्मिर्विशेषादिति रक्षणीय: ॥ [5]

सव्याधिनिदानहेतुभूतस्य शब्दोच्चारणादवगम्य तद्व्याधिविधिरिति ज्ञानमुपलभ्य चिकित्सां कारयेदिति । यद्यन्तस्थितविकारं शब्दोच्चारणादेव ज्ञात्वा साध्यविधिं विज्ञाय कारयेदिति तात्पर्यम् । स्वरास्वरं जीर्णहेतुक-सिराभिबोधककार्यं दुष्टासृग्विमोचनाद्वारा सिराया हेतुत्वं प्रतिपादितमित्यर्थ: ।

---

[1] वार्धिकानां शतद्वयम् (क). [2] तत्तदधिष्ठानवर्णस्य (क). [3] 'क' प्रतौ नास्ति । [4] स्थितासृगाभि. [5] अष्टाङ्गहृदयम्, सू ५२.

रिक्तातिरिक्तातिपूर्णसिराणामवेध्यत्वज्ञापकं यादृशानां स्वरूपज्ञाने सति वक्तुं शक्यते तत्प्रयोजनमपि तथा । तस्मान्मर्माशयमज्ञात्वा तन्निषेद्धुनशक्यमित्यस्वरसादाह—ता इति ।

## तास्सिरा मर्माशयगा रिक्ताः ॥ ४७ ॥

रन्ध्रसञ्चारे पवनस्य योगाधारकत्वात् सरन्ध्रकायसिरावच्छेदनेन दोषप्रकोपो भवति । ता न वेध्याः । या सिरा अतिरिक्ताभ्यन्तरधरदोषसञ्चारार्थं अवकाशाभावद्रव्यत्वात् सरन्ध्रा सती अन्तरिन्द्रियं भूत्वा वर्तते सा सिरा न वेध्या मर्मस्थानतद्गुणहेतुभूतत्वात् । तत्प्रयोजनं यावद्वर्णमात्रोच्चारणं तदन्वयाधीनम् । तास्सिरा न वेध्याः । अतिपूर्णास्सर्वकालेषु पवनपूरितरन्ध्रेषु दोषसंचारहेतुभूताः श्रोत्राकाशस्य स्वभेदप्राप्योपकारकाः ताश्च मर्माशयगा इत्यर्थः ।

ननु अष्टनवतिसिराणां मध्ये यत्र यत्र स्थाने यत्सिराश्रितवर्णदोषः प्रदृश्यते, किं च विरसादनाज्जातग्रहणीकलादौर्बल्येन तत्रस्थितवर्णदोषः गमनागमनमार्गनिरोधात्पवनादिषु विकारश्च प्रदृश्यते, तत्र तत्तद्वर्णोत्पादकसिराश्रयस्थलेषु तत्तद्धेतुभूतरसविरसजातरोगाः प्राप्नुवन्ति । शिरोऽस्थिविकारेषु सत्सु शिरोरोगा इति व्यवह्रियन्ते सिराविकारेषु नेत्रदेशेषु सत्सु, तत्रायं नेत्ररोगवानिति व्यवह्रियते । कर्णदेशस्थितसिराविकारेषु सत्सु कर्णरोगवानिति व्यवह्रियते । तत्तत्सिराधिष्ठानस्थितदोषादयः विरसादनजातग्रहणीकलादौर्बल्ये तत्तदधिष्ठानस्थितसिरामार्गगमनाभावजातरोगाः गमनागमनक्षोभवशात् तत्तत्स्थानस्थितसिराविकारान् प्राप्नुवन्ति । तत्तद्विकारान् तावत्सिरा एव बोधयन्ति । तत्तत्प्रदेशाधिष्ठितत्वात् तत्तद्देशोपाधिना शिरा-

रोग–नेत्ररोग–कर्णरोग–मुखरोग–नासिकारोग–जिह्वारोग–कण्ठरोग–बाहुरोग–हृत्कुक्षिरोग–अजीर्णाग्निमान्द्यादिरोग–गुल्मरोग–मेहरोग–ग्रहण्यतिसारार्शोरोग–श्वासरोग–रोमराजिप्रदेशोद्भवशोफपाण्डुरोग–अण्डजातरोग–जंघाजानुरोग––श्रोणिकटिप्रदेशोत्थितरोगबोधकसिरा एव तत्तत्प्रदेशेषु व्याधीन्संसृज्य तत्तत्प्रदेशस्थितसिरा एव व्याधीन् ज्ञापयितुं पवनगत्या तावत्सिरा एव तद्व्याधिलक्षणानि विज्ञापयन्ति । तत्तद्रोगहेतुभूतविरसादनात् कलादौर्बल्यात् आमप्रकोपे सति तत्तद्रसाभिवर्धकरसा एव तत्तद्रोगनिवर्तका इत्याशयं मनसि निधाय "तास्सिरा मर्माशयगाः" इत्याह । ननु अष्टनवतिसिरास्सप्तशतसिरा रिक्तातिरिक्तातिपूर्णास्सिरा न वेध्या इति प्रतिपादितम् । इदानीं सर्वरोगेषु तत्तद्विधिचोदितसिरागतासृग्विमोचनमेव रोगनिवर्तकसामग्रीति तत्कार्यापेक्षितत्वात् वेधार्हसिराणां प्रतिपादनं युक्तम् । तास्सिराः कीदृशाः ? तद्ज्ञानानन्तरं तत्प्रतिपादकं तदेव ज्ञातुमावश्यकमित्यस्वरसादाह—सिरेति ।

## सिरासृग्विभागविधिं ज्ञात्वा विमोचयेत् ।। ४८ ।।

सिरागतासृग्विमोचनमात्रविधिः । काश्चिदवेध्याः । तस्मात् वेध्यावेध्यत्वप्रतिपादनकर्मणः प्रस्तुतत्वात् तत्तत्सिरागतासृग्गतकार्यस्य तत्सिरागतासृग्गतरोगस्य निवृत्त्यर्थं सिरासृग्विमोचनं कुर्यादित्यर्थः । न च तत्तद्रोगनिवृत्त्यर्थं तद्धेतुकसिराभेदनं अवसरत्वात् मर्मस्थानाधिष्ठितसिराव्यतिरेकेण तद्धेतुकसिराभेदविज्ञानविषयकज्ञानं ग्रहीतुमशक्यमिति वाच्यम् । यत्र विरुद्धरसादनात् जाताजीर्णजन्यामया एव दोषविकारगतयो भवन्तीति तस्माद्दोषपचनपर्यन्तं लङ्घनं कार्यमिति । यत्र विरुद्धरसादनाज्जाताजीर्णजन्यामय-

विकारो विरुद्धधातुप्रभवो भवति तत्र तेनोच्चारितशब्दभेदात्सिरा विज्ञाय तत्स्थानगतवर्णविरुद्धमिदं वर्णमिति तद्वर्णजनकसिरास्थितिं विज्ञाय दोषधातुगत्याऽसृग्विकारो यत्र दृश्यते तत्र दुष्टाशयं विज्ञाय तत्तद्धेतुकसिराजालं च विज्ञाय तद्धेतुकृतामयाधिष्ठानस्थलं विज्ञाय सिरावेधनकर्मणां तद्धेतुजन्यामयो निवर्त्य इति "सिरासृग्विभागविधिं ज्ञात्वा विमोचयेत्" इति सूत्रमीरितमित्यर्थः । तत्सर्वमायुर्वेदद्वितीयप्रश्ने उक्तमित्यलमतिप्रसङ्गेन ॥

ननु प्रजाजननहेतुभूतं वार्धिकद्रव्यमेव भवति । इत्थमेव प्रथमसूत्रे प्रतिपादितम् यावद्विकारो यत्र दृश्यते तदानीमेव तन्निवर्तकेन स निवर्तितो भवतीति प्रतिपादितम् । यावद्विकारेऽपि लङ्घनेनैव निवर्तत इति कथं प्रतिपादितम्? कथमेतत्सिरासृग्विमोचनेन कार्यमित्यवसरादाह—नीरुजेति ।

## नीरुजावयवादीदृशौ पितरौ ॥ ४९ ॥

तयोश्च सर्वावयवाः पुष्टास्सन्तः प्रजोत्पादका भवन्तीति तेषामवयवानां रक्तधातुविकारे सति प्रतिबन्धकं भवति । तदविकारकरणार्थमयं विधिरिति तथा मातापित्रोरवयवाः अविकारफलं प्रयच्छन्तीति सूत्रमीरितम् ।

> प्रसन्नवर्णेन्द्रियमिन्द्रियार्थान् इच्छन्त इत्याहतरक्तवेगम् ।
> सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥

एतद्वचनानुसारेण पुरुषपदं मिथुनोपयोगिपदप्रतिपादकत्वात् स्त्रियमपि विषयीकरोति प्रजाजनने उभयोरपि संयोगस्य हेतुत्वात् । ननु पूर्वोक्तरीत्या अरोगकार्यजन्यफलप्रदानमेव सिरासृग्विमोचनकर्मणः प्रयोजनमित्युक्तम् ।

एतेन तयोः कार्यकारणभावः प्रतिपादितः । मातापित्रोश्च शरीरविषयक-शास्त्रविज्ञानजन्यकर्मणः फलं शरीरावयवदार्ढ्यकरणसामग्रीसम्पादनानुभवा-वयवावयवित्वं सम्पद्यते । तयोः स्त्रीपुरुषयोश्शुक्रं चार्तवं च तौ तथाभूतौ गर्भाशये पिण्डत्वेन प्रतिष्ठितौ । ताभ्यामेव बीजात्मकाभ्यामविकारभूताभ्यां प्रजाजननहेतुभूताभ्यां सत्वमाविर्भवति । तत्र शारीरवचनं—

शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशचोदितः ।
गर्भस्सम्पद्यते युक्तिवशादग्निरिवारणौ ॥

ननु आमयकारकसिरागतासृग्विमोचनमात्रेण शुक्रार्तवौ परिशुद्धा-वित्युक्तम् । न तावन्मात्रेण सङ्गच्छतेऽदुष्टाशयः । अविरुद्धदोषशुद्धेन्द्रिय-शुद्धानला एते वार्धिकद्रव्यादनाद्भाव्या एतत्सूत्रगतसिरागतदुष्टरक्तविमोचन-मात्रादेव । इदानीं शुक्रार्तवौ बीजोत्पादकहेतुभूताविति पार्थिवद्रव्यादनं विना कथं भवेतामित्यस्त्वरसादाह—शुद्धेति ।

**शुद्धाशयशुद्धदोषशुद्धानलशुद्धेन्द्रियगुणहेतुकपार्थिवद्रव्यैः प्रजाः प्रजायन्ते ॥ ५० ॥**

वार्धिकद्रव्यादनादेव सर्वाशयाः परिशुद्धा भवन्ति । इन्द्रियाणि [1]चाविकारदोषाणि । तथा पञ्चानिलाश्च पञ्च पाचकपित्तानि चादुष्टास्सन्तः लघुगुणकारकवार्धिकद्रव्यादनाद्भवन्ति । किं च सात्विकद्रव्यादनं सात्विक-गुणहेतुकम् । राजसद्रव्यादनं राजसगुणकारकम् । तामसद्रव्यादनं च तामसगुणकारकम् । वार्धिकद्रव्यादनाज्जाताशयादिकं विना बीजोत्पादनं न भवतीत्यर्थः ।

इदानीं शरीरजननकार्ये तत्प्रतिपादकसामग्री सम्पादनीया । सा आवश्यकी भवति । आशयाश्च दोषाश्च अनलाश्च इन्द्रियाणि च

[1] चाविकारदोषाश्च (क).

वार्धिकद्रव्यादनात्ते तु परिशुद्धास्सन्तः शरीरं पुष्णन्ति न ते शरीरोत्पादका इति आदौ शरीरोत्पादनकार्ये तदुत्पादकसामग्रीसम्पादनं विना कथं शरीरोत्पादनस्य आशयादीनां च सम्बन्धो घटते ? इत्यस्वरसाह—शुक्रेति ।

## शुक्रशोणितसन्निपातो योनिः ॥ ५१ ॥

पुरुषजन्यं शुक्रम् । स्त्रीजन्यं शोणितम् । तयोर्हेतुभूतं योनिः । सान्निपात्यं संसर्गहेतुभूतात्मकं तयोस्सान्निपात्यमभिधीयते । शुक्रस्य सर्वदा बीजोत्पादकत्वं वक्तुमशक्यम् । किन्तु आशयाः परिशुद्धास्सन्तः तथा प्रजाजननहेतुभूता भवन्ति । स्त्रीजन्यशोणितस्यापि तथैव । योग्यकाल-स्त्रीपुरुषसंयोगव्यापारहेतुभूतदिव्ययोनिदृढतरसंपर्कात् बीजाधारप्रदेशो गर्भाशय इति तज्जनकत्वस्य च सुप्रसिद्धत्वात् । योनावेव सत्वः गर्भस्सन् तदनन्तरं गर्भाशयं प्रविश्य विवर्धत इत्यर्थः । ननु अस्मिन्कार्ये आशयाः परिशुद्धा भवन्तु । तद्द्वारा शुक्रशोणिते अपि परिशुद्धे च । तयोरेव बीजात्मकत्वात् । कथं तदेधते ? कथं विवर्धते ? कथं चेष्टाश्रयं चलनात्मकं चेति वक्तुं शक्यते ! इत्यस्वरसादाह—योन्यामिति ।

## योन्यामाविरभूदजो विधिचोदितः ॥ ५२ ॥

अजो जीवात्मा योनिं प्रविश्य गर्भाशये आविरभूत् अदृश्यत ।

"रेतोमात्रं विजहाति । योनिं प्रविशदिन्द्रियं गर्भो जरायुवृतः । उल्बं जहाति जन्मना । ऋतेन सत्यमिन्द्रियम् ।" इति श्रुतेर्विद्यमानत्वात् ।

ननु शुक्लशोणितसन्निपाते पिण्डे सत्वं प्रविश्य गर्भाशये यत्स्थितं तदेव शरीरम् । लक्षणं तु "पञ्चभूतात्मकं शरीरम्" इति । तत्पिण्डानां

आविर्भावः केन कारणेन भाव्यः ? एवं गगनं नित्यद्रव्यम् । पृथिव्यादि-चतुष्टयमनित्यम् । तत्र रूपद्रव्यग्राहकं तेजः । तच्चेजश्चक्षुर्गोलके स्थित्वा सर्वार्थान् पश्यति । तद्विषयकज्ञाने चक्षुः कारणम् । तज्जनकीभूतं च लवणरसद्रव्यं कारणम् । तद्विषयज्ञानकार्यस्य हेतुहेतुमद्भावप्रतिपादनं विना पञ्चभूतात्मकं शरीरमिति लक्षणं न सङ्गच्छत इत्यत आह—यावदिति ।

## यावदाहारानुगुणरूपवान् भवति ।। ५३ ।।

यावद्द्रव्यादनयावत्कार्यानुगुणानलादिद्रव्यं यावद्रसवद्द्रव्यादन-जन्यस्वादुरसोद्भूतद्रव्यगुणकम् । रसनेन्द्रियविषयकं तच्च जिह्वाग्रवति सर्वरसादिभेदं विविच्य गृह्णाति । स्वादुरसवद्द्रव्यादनजन्याल्पद्रव्याभि-वर्धककार्यानुगुणकस्वादुरसवद्द्रव्ये स्वादुरसवद्विषयकज्ञानवानयमिति । यावद्-द्रव्यादनजन्यस्वादुरसाभिवर्धकनासाग्रवर्ति घ्राणेन्द्रियं गन्धरसवद्ग्राहकं सर्व-गन्धाभिव्यञ्जकपार्थिवद्रव्यविशिष्टगन्धवद्विषयकज्ञानवानयमिति । यावल्लवण-रसद्रव्यादनजन्यानलाभिवर्धकचक्षुरिन्द्रियं नेत्रान्तर्गोलवर्तिरूपादिभेदविषयक-ज्ञानगोचरज्ञानवानयमिति । तिक्तरसद्रव्यादनजन्यपवनभूताभिवर्धककार्यानु-गुणपवनं भूतद्रव्यस्पर्शवद्विषयकज्ञानगोचरज्ञानवानयमिति । एवमुक्तरीत्या-पार्थिवादिचतुष्टयाभिवर्धककार्यानुगुणवद्द्रव्यं तत्तज्जिह्वेन्द्रियविषयकज्ञान-गोचरज्ञानकार्यहेतुकं यावद्रसवद्द्रव्यादनजन्यं यत्तत्तदिन्द्रियविषयकज्ञानगोचर-ज्ञानहेतुकमिति प्रदर्शितम् । व्यतिरेकव्याप्तेः दृष्टत्वात् । तस्मादन्वय-व्यतिरेकाभ्यां कार्यकारणभावो गृहीत इत्यर्थः । तदर्थं सर्वमनुमानप्रमाणेन विविच्य ज्ञाप्यते ।

पृथिवीत्वविशिष्टद्रव्यं पृथिव्यसंयोगजन्यस्वादुरसवद्ज्ञानविषयकं,

स्वसमानाधिकरणानधिकरणकरसनेन्द्रियग्राह्यत्वे सति तद्विषयकज्ञानगोचर-प्रत्ययहेतुकत्वात्, यन्नैवं तन्नैवं, यथा कालादिः ।

अनलत्ववद्द्रव्यविशिष्टपृथिवीद्रव्यं अम्लरसवद्विषयकज्ञानविषयकं, स्वसमानाधिकरणानधिकरणकरसनेन्द्रियग्राह्यत्वे सति अम्लरसवद्द्रव्यविषयक-ज्ञानगोचरज्ञानकार्यहेतुकत्वात्, यन्नैवं तन्नैवं, यथा कालादिः ।

अब्द्रव्यविशिष्टानलत्ववद्द्रव्यं लवणरसज्ञानविषयकं, स्वसमानाधि-करणानधिकरणकरसनेन्द्रियग्राह्यत्वे सति लवणरसवद्विषयकज्ञानगोचरज्ञान-कार्यहेतुकत्वात्, यन्नैवं तन्नैवं यथा कालादिः ।

गगनविशिष्टानलत्ववद्द्रव्यं तिक्तरसवद्ज्ञानविषयकं, स्वसमानाधि-करणानधिकरणकरसनेन्द्रियग्राह्यत्वे सति तिक्तरसवद्द्रव्यविषयकज्ञानगोचर-प्रत्ययकार्यकारणत्वात्, यन्नैवं तन्नैवं, यथा कालादिः ।

अनलत्वविशिष्टानलद्रव्यं ऊषणरसवद्द्रव्यविषयकं, स्वसमानाधिकरणा-नधिकरणकरसनेन्द्रियग्राह्यत्वे सति ऊषणरसवद्द्रव्यविषयकज्ञानगोचरज्ञानकार्य-हेतुकत्वात्, यन्नैवं तन्नैवं यथा कालादिः ।

पृथिवीत्वविशिष्टानलद्रव्यं कषायरसवज्ज्ञानविषयकं, स्वसमानाधि-करणानधिकरणकरसनेन्द्रियग्राह्यत्वे सति कषायरसवदर्थविषयकज्ञानगोचरकार्य-हेतुकत्वात्, यन्नैवं तन्नैवं, यथा कालादिः ।

अत्र सूत्रवचनम्—

क्ष्माम्भोऽग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोऽनिलैः ।
द्वयोल्वणैः क्रमाद्भूतैः मधुरादिरसोद्भवः ॥

नन्वस्यानुमानस्यानुमितिग्रहे सति व्याप्तिग्रहपूर्वकत्वं वक्तव्यम् । अत्रानुमितिस्वरूपं — पृथिवीत्ववत्संसर्गद्रव्योल्बणजन्यस्वादुरसवद्द्रव्यविषयक-स्वसमानाधिकरणानधिकरणकरसनेन्द्रियग्राह्यत्ववद्द्रव्यविषयकज्ञानगोचरज्ञानत्वं अनुमितिरिति । तत्संसर्गजन्यस्वादुरसस्य रसनेन्द्रियविषयकज्ञानगोचरज्ञान-कार्यत्वं, तयोर्व्याप्तिग्रहे सति अनुमित्युदयात् ।

ननु धूमाग्न्योरिव कार्यकारणभावे गृहीते स्वादुरसस्य पाकदोष-निवर्तकत्वं वक्तुं शक्यते । तत्र धूमत्वावच्छेदेन कार्यकारणभावग्रहे स्वादुरसमात्रस्य व्याधिनिवर्तकत्वे उच्यमाने अतिप्रसङ्गात् इत्यस्वरसादाह— यावदिति ।

**यावदारोग्यदा रसा निवर्तकाः ॥ ५४ ॥**

स्वाद्वम्ललवणतिक्तोषणकषायरसाः यावच्छब्दार्थबोधकाः ते रसा एव निवर्तकाः आरोग्यदा इत्यर्थः ।

ननु सर्वशरीरिणां यदा व्याधयस्सम्भवन्ति तदानीमेव तेषां निवर्तकत्वं वक्तव्यम् । करणस्य तु क्रियाविशेषमात्रवैलक्षण्यतया तस्य फलाया-व्यवच्छिन्नत्वनियमात् ।

वृथाऽपथ्यं न कुर्वीत वृथा भेषजसेवनम् ।

इति वचनानुसारेण व्याप्तिग्रहं वक्तुमाशक्यत्वादित्यस्वरसादाह—याव-दिति ।

**यावदभ्यवहृतरसेभ्यो मातृजं पालयेत् ॥ ५५ ॥**

यावदभ्यवहृतरसेभ्यः यावद्भुक्तरसेभ्यः मातृजं मातृपिण्डं यावत्सप्त-धातून् पालयेत् रक्षयेत् । रसेभ्यो जातधातूनां संरक्षणं कारयेदित्यर्थः ।

ननु स्वाद्वादिषड्सेभ्यः सप्तधातूनां रक्षणं कारयेदित्युक्तम् । तदेव ज्ञातुमावश्यकम् । अविरुद्धकषायरसादने वक्तव्ये सति कषायरसवद्द्रव्याद-नस्य रसासृग्धातुप्रवर्धकपुरुषार्थस्य च हेतुमद्भावस्य सत्त्वात् तयोरेव कार्य-कारणभावो नान्येषाम् । सप्तधातुपदत्वं तत्तज्जनकरसादीनां वक्तुं शक्यत इत्यत आह—रेत इति ।

रेतोऽधिकात्पितुः पुत्रो भवति ।। ५६ ।।

यदा पुरुषस्थितं तेजः गर्भे आविर्भवति तत्कालमारभ्य पुरुषविकार-कार्यैकफलं सामर्थ्यं रसादयः प्रयच्छन्ति । माता स्वादुरसवद्द्रव्यादनफला स्वादुरसहेतुकशुक्लधातुप्रवर्धनं कुर्वन्ती अद्यात् । तस्मात्पितृसदृशः पुत्रो लभ्यते । "आत्मा वै पुत्रनामासि" इति श्रुतेर्विद्यमानत्वादित्यर्थः ।

मातुस्स्वादुरसवद्द्रव्यादनजातशोणितस्यापि पिण्डं शरीराभिवर्धकम् । तेन स्वादुरसजन्यकार्यफलप्रदानस्य तस्य स्वभावत्वात् यावदन्तर्वत्नी पत्नी भवति तावत्कालं रसादयः पुरुषाणामिव स्त्रीणामपि धातुप्रदा भवन्तीत्याह—रक्तेति ।

रक्ताधिकान्मातुः पुत्रिका भवति ।। ५७ ।।

तच्छोणितस्यापि स्वादुरसजन्यत्वेन पिण्डं शरीराभिवर्धककार्यहेतुभूतं भवतीति तात्पर्यार्थः । रक्ताधिकप्रवेशनात् मातृसदृशः अतिरक्तप्रवेशनात् जातपिण्डे दृश्यते ।

मृद्वत्र मातृजं रक्तमांसमज्जासृगादिकम् ।
पैतृकं तु स्थिरं शुक्रं धमन्यस्थिकचादिकम् ।।[1]

---

[1] अष्टाङ्ग. शारीर III—4-5

सर्वमपि पैतृकं नाम मातृस्वादुरसवद्द्रव्यादनजातशुक्रमांसमज्जारेत-आदिकं मातृरसाहारजातधातवस्मन्तः तत्रैव एवन्ते तथैव पितुस्स्वादुरसद्रव्यादनजाता अपि । पितृसम्बन्धिधमन्यस्थिकचादिकं तन्मिथुनकाले न जायते । किन्तु तथोत्पत्तिहेतुभूतमातुरेव शुक्लशोणितसन्निपातमात्रं तदानीमुपस्थितम् । तदनन्तरमेवाभिवर्धकं मातुः रसाहारादिकं न किमप्यन्यतरम् । यावच्छरीरोत्पत्तिपर्यन्तं आदिमध्यान्तजातरोगारोगैककारणमिति । तस्मात्तदारोग्यैकहेतुकं द्रव्यादनं प्रतिमासं प्रत्येकं निवर्तकं विधिरिति भत्र सूच्यते । पुत्रोत्पादनद्रव्यादनमपि पुत्रिकोत्पादनद्रव्यादनमपि द्वयोर्मिथुनकाले शुक्रशोणिते अपि समे स्वाता चेत्तत्र का गतिरित्याशङ्कायामाह—द्विसम इति ।

**द्विसमो यत्र षण्डो भवति ॥ ५८ ॥**

**अजो नाना जायते ॥ ५९ ॥**

पूर्वोक्तरीत्या मातृरसादनं तत्र हेतुरित्यर्थः । न जायत इत्यजः नानारूपवान् बहुरूपस्सन् स जीवः जायते इति सूत्रार्थः ॥

ननु इदमप्यनुपपन्नम् । एतदुत्पन्नपिण्डः अज इति प्रतिपाद्यते । रोगारोग्यैककारणप्रतिपादकसामग्रीकार्यं व्यर्थं स्यात् तस्य अजन्यत्वमविनाशित्वं चोभयमपि स्वत एव सिद्धम् । आरोग्यकार्यहेतुभूतकारणप्रतिपादकशास्त्रमपि व्यर्थं स्यात् इत्यस्वरसादाह—मासीति ।

**मासि मासि रजः स्त्रीणाम् ॥ ६० ॥**

मासे मासे स्त्रियः रजस्वला भवन्ति । तच्चतुष्टयदिवसपर्यन्तं स्पर्शयोग्या न भवन्तीत्यर्थः । पिण्डोत्पादकसकलसामग्र्यां सत्यां अजो

विधिचोदितम्सन् रजस्वलाशरीरं विशति । अजे आविर्भूते सति तावत्कालोपस्थितसामग्री सफला भवति । तत्सम्पर्कवशात् जीवस्य औपाधिकानित्यत्वं औपाधिकरूपत्वं अज्ञानित्वं आभासज्ञानवत्त्वं जीवात्मनि भासते । तथैव व्यवह्रियते—वृद्धोऽयं श्यामोऽयं ब्राह्मणोऽयमिति । इदानीम् अहं सुखी अहं दुःखीति एतादृशप्रत्ययानुपपत्त्या रजस्वलासंसर्गदोषवशात् जीवात्मनः कथं कर्म फलादेशं प्रयच्छति, औपाधिकसुखदुःखानुभवं प्राप्नोति न तु स्वतस्सिद्धमिति, आत्मत्वात् नित्यत्वाच्च औपाधिकसुखदुःखादिकं लभते न स्वतस्सिद्धमित्यर्थः । तस्य रजस्वलासम्पर्कदोष इति व्यपदेशः । तस्मात्सा चाण्डालीव न तां स्पृशेत् नाभिभाषेत । तत्र श्रुतिः—

"तस्मान्मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्यात् ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्तेऽथो खल्वाहुः अभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यत् "

इत्यारभ्य

" तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेत् अञ्जलिना वा पिबेत् अखर्वेण वा पात्रेण प्रजायै गोपीथाय "

एतत्प्रतिपादितार्थः रजस्वलायास्संसर्गदोषमहिम्ना अभूत् ॥

अत्र शारीरवचनं—

क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ।
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ॥
चतुर्थेऽह्नि ततस्स्नात्वा शुक्लमाल्याम्बरा शुचिः ।
इच्छन्ती भर्तृसदृशं पुत्रं पश्येत्पुरः पतिम् [1] ॥

इति शास्त्रानुसारेण "अजो नानारूपः पुरुरूप ईयते" इति सूत्रं सार्थकमित्यर्थः, बहुश्रुतिप्रतिपादकत्वात् ।

---

[1] अष्टाङ्ग. शारीर I—25-26.

चिरात्प्रजोत्पादकसकलसामग्रीसामर्थ्ये सति स जीवः ऋतुमतीं स्त्रियं प्रविश्य सुखदुःखात्मिकं पापवशादनुभवति । तत्परिहारार्थं स्नानादि, तेन तत्परिहारो भविष्यतीत्याह—चतुर्थ इति ।

## चतुर्थेऽह्नि स्नायात् ॥ ६१ ॥

चतुर्थे दिवसे तत्पापपरिहारार्थं स्नानं कुर्यादित्यर्थः । तदनन्तरं इष्टदेवताभजनं गुरुदेवताभजनं देवब्राह्मणपूजनं प्रजानुग्रहार्थं देवताप्रार्थनं च कुर्यादित्यर्थः । अहं पुत्रकामिनी तत्संपदवाप्तयर्थं पतिं व्रजामीति परिशुद्धा सती पतिसंसर्गं कुर्यादित्याह—शुद्धेति ।

## शुद्धा पतिं व्रजेत् ॥ ६२ ॥

सत्पुत्रावाप्तिर्भूयादित्यर्थः ॥

ननु यथा स्त्री रजस्वला ऋतुमती जाता सती तत आरभ्य ब्रह्मचर्यादिव्रताचरणेन गर्भोत्पत्तिर्मे भूयादिति सङ्कल्प्य चतुर्थे स्नानं कृत्वा पतिव्रजनं विधिरित्युपलभ्यते । तद्दिनव्यतिरिक्तकाले मिथुने जाते सति गर्भोत्पत्तेरदृष्टत्वात् । तत्र पूर्वदिनकर्तव्यताकार्यमङ्गत्वेनाप्रतिपादितमिति न कोऽप्यनवसरः ॥

ननु चतुर्थेऽह्नि स्नायादिति विधिः । तत्पूर्वदिनत्रयं व्रताचरणस्य विधेयत्वात् अदृष्टादिसकलसामग्र्यां सत्यां अविलम्बेन कार्योत्पत्तेर्दृष्टत्वात् चतुर्थदिनपर्यन्तं निरीक्षणस्य च प्रयोजकत्वात् तावत्कालाभावस्य उत्पत्तिरूप-कार्याभावस्य हेतुमद्भावस्य दृष्टत्वात् चतुर्थेऽह्नि स्नानं कृत्वा पत्या साकं संसर्गकार्यस्य विधेयस्य बलत्वात् इत्यस्वरसादाह—प्रजेति ॥

प्रजाकामास्तावत्प्रयत्नं मिथुनं तावद्धेतुकम् ।। ६३ ।।

प्रजासम्पादनफलमवश्यं मे भूयादिति कामनया प्रवृत्तस्य पुंसः-चतुर्दशदिनपर्यन्तं निरीक्षणस्य को हेतुरित्याकाङ्क्षायां तत्र हेतुं ब्रूमः— रजस्वलादिनादारभ्य सप्त धातवः रक्तरूपेण स्रवन्ति । तदा स्त्रीणां सप्तमधातुप्रस्रावणं यतो लभ्यते पुन्निष्ठचरमधातुप्रस्रावणं एककाले योन्यां सन्निपातो यदि भवेत् तदानीमविलम्बेन कार्योत्पत्तिर्भविष्यतीत्यर्थः । पुंसस्तावत्कालनिरीक्षणं युक्तमिति चतुर्दशदिनपर्यन्तं सप्त धातवो रक्तरूपा भवन्ति तावत्कालयोग्यमिति । तथाहि चतुर्थे दिने चरमधातुप्रस्रावणस्य योग्यता । अहश्च रात्रिश्च एककालं एकैकधातुप्रस्रावणकालः यत्रोपलभ्यते तावत्कालो योग्यकाल इति । चतुर्थरात्रौ चरमधातुः स्त्रियः रक्तरूपेण स्रवति । तदानीमेव गर्भोत्पत्तिर्भवति यावत्कालं पुरुषधातुप्रस्रावणनियमो यत्रोपलभ्यते तत्र तावत्कालमुद्दिश्य त्रयोदशदिनपर्यन्तं योग्यं पक्षमात्रं गर्भाशयं प्रापयितुं योनिपद्मस्य विकसिताकारेण स्थितत्वात् । तत्रोभयो-स्सान्निपात्यपर्यन्तं विकसितं भवतीत्यर्थः । सान्निपात्ये मुकुळीभवतीत्यर्थः । पक्षमात्रमुन्मीलनीभवति । पक्षमात्रं निमीलनीभवति । पक्षद्वयं मास इति "मासिमासि रजः स्त्रीणां[1]" इति । अत्र स्त्रीणां पक्षमात्रं रक्तस्रावे सति स दोषाय भवतीत्यर्थः ॥ अत्र शारीरसूत्रवचनं—

ऋतुस्तु द्वादश निशाः पूर्वास्तिस्रश्च निन्दिताः ।
एकादशी च युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ॥

उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम्[2] ।

---

[1] अष्टाङ्ग. शारीर I—7. [2] अष्टाङ्ग. शारीर I—27-28.

इति शारीरसूत्रवचनानुसारेण युग्मदिनेषु पुत्रोत्पादकसामग्र्यां सत्यां पुत्रो भवति। तदन्यदिनेषु पुत्रिकाजनकसामग्र्यां सत्यां पुत्रिका भवतीत्यर्थ उपलभ्यते। तस्याश्चरमधातुरेव रक्तं भवति। तत्तच्छुक्लसान्निपात्यं यत्काले भवति स कालः पुत्रं पुत्रिकां च प्रयच्छति।

घृतमाक्षिकतैलाभं सद्गर्भायार्तवं पुनः।
लाक्षारसशशास्राभं धौतं यच्च विरज्यते।
शुद्धशुक्रार्तवं स्वच्छं सरक्तं मिथुनं मिथः[1]।

गर्भोत्पादश्च रक्तविशेषे वक्तव्यः। तद्विशेषस्तु शुक्लविकार एव, सप्तधात्वात्मकं शरीरमिति सर्वसिराणां सप्तधात्वावृतत्वात्। स्त्रीणां शुद्धधातुरेतादशरक्तरूपो भवतीत्यर्थः। पुरुषजननस्य हेतुः काल एव। किं स्त्रीजननस्यापि तदेवेत्यत आह—द्वीति।

**द्विचतुःषष्ठाष्टदशद्वादशेऽहनि जाताः पुत्राः तदितरेऽहनि जाताः पुत्रिकाः ॥ ६४ ॥**

ननु उत्पन्नपिण्डस्य पोषकत्वं वक्तव्यम्। तत्पोषकद्रव्यैर्भाव्यम्। तत्रापि कालविशेषो वक्तव्यः। स कालः पोषको भवतु। ननु शुक्लशोणितसन्निपाते जाते गर्भोऽपि भवति। तत्रैव मासे ऋतुमत्या च प्रदर्शितानि दृष्टानि गर्भचिह्नानि। तद्रक्षणार्थं प्रथमर्तौ पोषकद्रव्यं पाययेदित्यत आह—प्रथमेति।

**प्रथमर्तौ पोषकं निवर्तकम् ॥ ६५ ॥**

यदा गर्भलक्षणमपि जातं सैव च ऋतुमर्तिति दृष्टा चिकित्सा तत्र पोषकद्रव्यादनं तत्र विधिः। द्वितीयमासे पोषकद्रव्यादनं तत्र प्रतीकारो भवति। एवं च दशमासपर्यन्तं पोषकशोषकचिकित्सा विहिता। तया गर्भं संरक्ष्य सुखेन पुत्रं सूते इत्याह—तदिति।

---

[1] अष्टाङ्ग. शारीर I—18-19,

तदूर्ध्वे ऋतौ शोषकं तदनन्तरमपि शोषकरसाः
गर्भाभिवर्धका यावत्कालोपयोग्याः ॥ ६६ ॥

यथायथोपयोगयोग्यकरणसेवार्हाणि अनिन्दितानि आरोग्यकार्यहेतु-भूतानि आगामिरोगाभावकार्यकारणानि यावच्छक्तिदोषाकारकाणि विधिवद्विविच्य ज्ञाप्यते—प्रथमेति ।

प्रथमद्वित्रिमासेषु मधुररसाः पवनहरा
निवर्तकाः ॥ ६७ ॥

आम्ललवणरसोपलम्भकद्रव्याभ्यां विशिष्टं स्वादुरसवद्द्रव्यं अन्तर्वत्न्याः प्रथमद्वित्रिमासेषु प्रशस्तं भवति । एतदन्योन्यसंसर्गजातरसवद्द्रव्यं विरुद्धरसजातपवनप्रकोपरोगाङ्कुरहेतुकद्रव्यादनं पवनहरं सकलशरीरोपयोग्यं सकलजीवमात्रसाधारणम् । तत्तज्जातिविहितपदार्थास्सेव्या इत्यर्थः । तावत्कालमात्रं तावद्रसादनेन निवर्तकेन निवर्त्याः निवर्तयन्तीत्युक्तम् । तदितरकालेऽपि विरुद्धरसादनकार्यस्य सम्भावितत्वात् तत्रापि गर्भाभिवर्धकद्रव्यादनस्यावश्यकत्वात् यावत्कालोपयोग्यं यथायथं विधेयकार्यहेतुभूतान्यनिन्दितानि आगामिरोगाभावकार्यकारकाणि तावद्द्रव्याणि विविच्य प्रकाश्यन्ते—चतुरिति ।

चतुःपञ्चषट्सु मासेषु अम्लरसाः पित्तहरा
निवर्तकाः ॥ ६८ ॥

स्वादुलवणरसोपलम्भकद्रव्याभावविशिष्टाम्लरसवद्द्रव्यं गर्भिण्याः चतुःपञ्चषट्सु मासेषु पाययितव्यम् । एतदन्योन्याभावप्रतियोग्यभाव-

द्रव्यं अम्लरसवद्द्रव्यं विरुद्धरसाहारजन्यपित्तप्रकोपजातकार्यहेतुकद्रव्याभावात् अन्यद्रव्यादनं सकलपित्तप्रकोपशमनं सकलशरीरारोग्यकारकं सकलजनोपकारक-हेतुभूतं तत्तज्जातिविहिताम्लरसवद्द्रव्यं गर्भिणीं पाययेदित्यर्थः। तेनैव गर्भो वर्धते तत्तदङ्गप्रकोपकारणं भवतीत्यर्थः। अन्तर्वत्न्याः आरोग्यविषये यावत्साम्लरसवद्द्रव्याणां निवर्तकत्वं प्रतिपादितम्। तदितररसवद्द्रव्याणां प्रयोज्याभावेन तेषामप्रयोज्यत्वं भवेदित्यस्वरसादाह—षष्ठेति।

षष्ठाष्टनवमासेषूष्णरसाः कफशोषकाः
प्रवर्तकाः ॥ ६९ ॥

षष्ठाष्टनवमासेषु स्वाद्वम्लरसोपलम्भकद्रव्याभावविशिष्टोष्णरसवद्द्रव्यं अन्तर्वत्न्यामयविषये तत्तद्द्रव्यादनं विधेयम्। तत्तदन्योन्याभावप्रतियोग्य-भावद्रव्यं उष्णरसद्रव्यमिति। तद्विरुद्धा रसाहारजातकफकोपकार्यं द्रव्या-भावद्रव्यादनं सकलकफदोषजातरुक्प्रकोपशमनकार्यं सकलशरीरारोग्यकारकं सकलजीवनोपकारकहेतुभूतं तत्तज्जातिविधिविहितोष्णरसवद्द्रव्यं गर्भिण्याः पाययेदित्यलम् ॥

ननु वातपित्तकफदोषनिवर्तकत्वं षड्रसानामेव प्रतिपादितम्। उक्तरीत्या स्वाद्वम्ललवणरसवद्द्रव्याणां दोषत्रयस्थितविकारं निवर्तयितु-मशक्यत्वात् "तत्राद्या मारुतं घ्नन्ति" इति वचनानुसारेण उपपादित-विकारनिवर्तकत्वं स्वाद्वम्ललवणरसवद्द्रव्याणां प्रतिपादितं न तिक्तोषणरस-वद्द्रव्याणामिति चेत् न; रसपाके तथा त्रयाणामेव प्रयोजकत्वप्रतिपादनात् तिक्तोषणकषायरसानां तत्रैवान्तर्भावात्, किं च अनिमित्ते निवर्तकद्रव्यस्या-

प्रयोजकत्वात् । न च प्रागभावपरिपालनं निवर्तकं भवेदिति वक्तुं शक्यते, सर्वत्रापि तथात्वे अतिप्रसङ्गादित्यस्वरसादाह—निवर्त्य इति ।

## निवर्त्यो विकारः ।। ७० ।।

निवर्तयितुं योग्यो निवर्त्यः, स विकारः । निवर्तकस्य विकारहरणं विचारणीयम् । सर्वव्याधिप्रागभावस्य सर्वदा विद्यमानत्वात् । तस्येदमिदमिति प्रत्येकावच्छेदेन तत्तन्निवर्तकत्वस्य निर्णेतुमशक्यत्वात् । तस्मात्तदा विकारे जाते सति तत्तन्निवर्तकत्वस्य निर्णेतुमशक्यत्वात् निवर्त्यो विकार इति सूत्रे प्रतिपादित इत्यर्थः ॥

ननु विकारे सति स्वाद्वम्ललवणरसाः विकारप्रतिकारका इति पूर्वमेव प्रतिपादितम् । तच्चिन्त्य ' निवर्त्यो विकारः '' इत्यत्र रसाद्या निवर्तका न भवन्तीत्यस्वरसादाह—आमेति ।

## आमवृद्धिविकारस्सर्वरोगहेतुभूतः ।। ७१ ।।

अत एव यः पाचकपित्तेन तूत्पाद्यते सोऽनलः पक्वाशयगतार्थमेव पचति । तद्विरुद्धगजन्यामस्य मलाशयस्थितत्वात् । पार्थिवद्रव्यावयवोपाधिकरसोपलम्भकसुगन्धगुणभूयिष्ठपाकौपाधिकयोग्यस्वादुरसद्रव्यं पोषकद्रव्यं, अनलावयवाधिकलवणोष्णरसवद्द्रव्यलघुतूलिकावयवजातक्षारगुणकतदितररस-वद्द्रव्यातिरिक्तद्रव्यं अद्रव्याधिकावयवस्नेहवद्द्रव्यं स्वादुगुणभूयिष्ठपाके जठरानलप्रद तिक्तज्ञानविषयकं यत् तत्पार्थिवद्रव्यम् । तत्पत्रभेदद्रव्येषु त्रिविधोपकारकत्वं, पुष्पफलभेदद्रव्येषु त्रिविधदोषोपकारकत्वं, फलभेदद्रव्येषु त्रिविधोपकारकत्वम् । तत्तज्जातिविधिविहितद्रव्याणि तत्तद्विकारप्रतिकारकाणीति तत्तल्लक्षणेषु शरीरेषु योग्यानीति विशेषितव्यम् । न तत्र स्थानांतरतत्त-

ज्जातीयविकाराणां निवर्तकभावः । अन्वयव्यतिरेकसहचरगम्यत्वं यत्रोपलभ्यते तत्रायं नियमः । तदर्थं तत्तद्द्रव्यमित्युक्तम् । यावत्कालेषु तत्तत्कालोचितरसवद्द्रव्याणां निवर्तकत्वं नियमेन यत्रोपलभ्यते तत्रायं नियमः । तदर्थमुक्तं तत्तत्कालेति । यावन्तो रोगाः यावन्निवर्तककार्यविषयाः इति नियमेन कार्यकारणभावा यत्र दृश्यन्ते, 'यत्सत्वे यत्सत्वं यदभावे यदभावः' इति नियमेन व्याप्तिग्रहो यत्र तत्रायं नियमः । तदर्थमुक्तं तद्विषय इति । तत्तज्जातिविहितविकारेषु निवर्तका इति सूत्रार्थः । नानाजातिस्थरोगा निवर्त्या इत्युक्तम् । सर्वनिवर्तकज्ञाने सति तथा वक्तुं शक्यते । सर्वपदार्थस्वरूपस्य ज्ञातुमशक्यत्वादित्यत आह— निवर्त्य इति । निवर्त्यो विकारः । शोषकपोषकवार्धिकविषयकद्रव्यत्वावच्छेदकज्ञानगोचरज्ञानोपाय इति विज्ञाय सर्वपदार्थविषयकत्वात् पुष्पफलसारादिद्रव्यं तेषु अप्रयोजनम् । कषायचूर्णतैलघृतलेह्यरसायनयोगेषु तत्तद्विधिविहितद्रव्येषु तथोक्तत्वादिदं पथ्यापथ्यविधिविचारज्ञानविषयकद्रव्यादनयोग्यभोज्यक्रमं अग्रे प्रतिपादयिष्याम इत्यर्थः ।

ननु पत्रपुष्पफलादीनां फलवत्प्रवृत्तिविषयकं कषायतैलचूर्णघृतलेह्यरसायनादिषु भिन्नप्रकारकं पानभोज्यद्रव्येषु तद्भिन्नप्रकारकम् । सर्वद्रव्याणां द्विविधोपकारकत्वं तच्चिन्त्यम् । सर्वजातिषु सर्वकालेषु सर्वद्रव्येषु सर्वव्याधिषु अनुस्यूतप्रकारकतावच्छेदकं एकैकस्यैवेति वक्तव्यम् । अन्वयव्यतिरेकप्रमाणाभ्यां यस्य कस्य कार्यकारणभावो गृहीतः तत्रैवोचितमित्यस्वरसादाह- तत्तदिति ।

**तत्तद्द्रव्यं तत्तत्काले तत्तद्विषये तत्तन्निवर्त्येषु निवर्तकम् ।। ७२ ।।**

यावत्पदार्था यावत्कालेषु यावद्रोगविषयेषु निवर्तकत्वेन कार्यकारणत्वेन यावज्जातिषु सन्ति तेषु तत्तज्जातिविहितपदार्था इत्यर्थः ।

तदेव प्रतिपादयति—निवर्तकमिति ।

**निवर्तकं भेषजम् ।। ७३ ।।**

ननु निवर्त्यगुणविशेष्यत्वस्य विकारस्य निवर्तकत्वं ऊर्ध्वाधोविरेककरणमित्युक्तम् । तदनन्तरं यद्दोषहेतुकं भवति तज्जन्यदोषप्रकोपे सति तद्विरेचनकार्यमयोग्यं स्यादित्यस्वरसादाह—दोषेति ।

**दोषत्रयहेतुकः ।। ७४ ।।**

दोषत्रयकार्यस्य विरेचनकार्यस्य युक्तत्वात् तत्तन्निवर्तकत्वेन प्रतिपादयितुमशक्यमित्यर्थः ।

यत्प्रतिपादनेन आमवृद्धेर्दोषजन्यत्वं प्रतिपादितं भवेत् इत्यस्वरसादाह —सर्वेति ।

**सर्वजन्तूनामनामपालनं निवर्तकम् ।। ७५ ।।**

सर्वभूतानां अनामपालनं पुरुषार्थः । दोषे प्रथममामविरेचनं करणीयम् । तथाहि आमप्रकोपे सति तन्निवृत्तिकारणं जन्तूनामनामपालनं पुरुषार्थकं भवति ।

ननु अनामपालनं पार्थिवद्रव्यहेतुकं न भवति । तत् अल्पाहारादनं धातुपोषकं दोषोपकारकं च भवेदित्यस्वरसादाह—वह्नीति ।

**वह्निप्रवर्धकद्रव्यं यावच्छरीरोपबृंहणजठरानल-प्रवर्धकद्रव्यम् ॥ ७६ ॥**

धातुपोषकं वह्निप्रवर्धकत्वात् । येनैव अनामपालनमपि अभिवर्धते तेनैव तदेव पोषकं तदेव शोषकं च समशोषककरणपोषककरणम् । द्रव्यभेदे सति तद्वक्तुं शक्यते । वह्निप्रवर्धकद्रव्यादनमात्रेण चरितार्थत्वाभावात् । किं तु स्नेहवद्द्रव्यमिति वक्तव्यम्, तद्द्रव्यस्य शोषकार्यहेतुकत्वादित्याह—तत्तदिति ।

**तत्तदर्थास्स्नेहयोग्याः प्रवर्धकाः ॥ ७७ ॥**

स्नेहवद्द्रव्यं वह्निप्रवर्धकपदार्थतावच्छेदकत्वेन एकप्रकारकत्वेपि स्नेहवद्द्रव्यादने पदार्थभेदसंबंधादित्यर्थः ॥

निवर्तकपदार्था बहवस्सन्ति । तत्सर्वेषां प्रयोजकत्वं वक्तव्यं, तादृशसर्वद्रव्यादनस्य योग्यत्वात् । शुद्धद्रव्यं स्नेहेन साकं विपाच्य तत्पाचकस्नेहं शोषकपार्थिवकार्यं करोतीत्याह—विशुद्धेति ।

**विशुद्धस्नेहमयं निवर्तकम् ॥ ७८ ॥**

अभोज्यद्रव्याणि रोगप्रतिपादककारकाणि बहूनि सन्ति । भोज्यद्रव्याणि रोगनिवर्तकानि बहूनि सन्ति । कानिचिद्द्रव्याणि पाके रसान्तरं भूत्वा तत्तद्रोगोपशमनं कुर्वन्ति । द्रव्याणि द्रव्यान्तरसंयोगे सति तत्तत्संयोगजन्यफलं प्रयच्छन्ति । बहुद्रव्यसंयोगे बहुफलं प्रयच्छन्ति । विरुद्धद्रव्यसंयोगे सति विरुद्धद्रव्यफलं प्रयच्छन्ति । तत्सर्वमालोच्य तत्तज्जातीयबहुद्रव्ययोगकरणं शुद्धं भवति । यथा यवक्षारहरितद्रव्यसंयोगेन स्वस्वरूपं विहाय रक्तरूपं भाति । द्रव्यं द्रव्यान्तरसंयोगे सति तत्तद्द्रव्यविहिताधिकगुणं

विद्यते । यावद्द्रव्यसंयोगजन्यरसवद्द्रव्यं शुद्धमित्युक्तम् । तादृशशुद्धद्रव्यैस्साकं पाचितं स्नेहपानाभ्यां सुपाचितं स्नेहगुणं प्रयच्छति । स्वाद्वम्ललवण-विशिष्टयावद्द्रव्यसंयोगहेतुकं पवनदुष्कृतकारकशक्तिविशिष्टगुणप्रधानप्रतिभूत-करकर्मकारकं तावत्पाककर्मकरणाच्छुद्धं स्नेहं तावद्द्रव्यगुणदायकम् । अति-पाचितं सुपक्वपर्यन्तं पाचितम् । अतिपाचितस्नेहं निवर्तकमित्युक्तम् । पचनप्रकोपहेतुकयावद्रोगशोषकप्रतीकारहेतुकं निवर्तकम् । तत्तु शुद्धस्नेहम् । अपतर्पणं यत्र निवर्तकं भवति तत्रेदं वचनं—

जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे ।
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ।
शान्तिरामविकाराणां भवति त्वपतर्पणात् [1] ॥

एतद्वचनानुसारेण शोषकद्रव्यहेतुकं कार्यम् । एतेन शोषकद्रव्याणां प्रयोजकत्वं प्रतिपादितम् । इदानीं शोषकं कथ्यते । तिक्तोषणकषायरसविशिष्टयावद्द्रव्य-संयोगहेतुकं कफरोगप्रतिकारकशक्तिविशिष्टगुणप्रधानप्रतिभूतकर्मकारकं यत्त-त्कर्मणां यावद्गुणदायकं शुद्धस्नेहं भवति । अतिपाचितमत्यन्तपाचितं सुपाक-पर्यन्तम्, तत्तु स्नेहद्रव्यं कफप्रधानरोगजालनिवर्तकम् । पवनजन्यरोगेषु क्वचिन्निवर्तका शोषकाः, क्वचिन्निवर्तकाः पोषका इत्यर्थः ।

तस्य स्नेहस्य प्रयोजनमाह—अङ्गेति ।

**अङ्गाङ्गसङ्गोऽङ्गविलेपनादङ्गाङ्गविभजनं विभाति ॥ ७९ ॥**

अङ्गलग्नरोगाणां तत्तत्स्थलसंसर्गात् रोगो विनश्यति । अत्यन्तवेदना-भावादङ्गेषु लेपनमात्रादेव तन्निवर्तते । दोषसञ्चाराभावजास्थिकर्णनासादि-

[1] अष्टाङ्ग. सूत्र VIII—19-20.

सन्धिजीवनेषु विमर्दनपादघट्टनं सम्यक्कार्यम् । तेन सङ्कुचिताङ्गात्सम्यग्विकारो निवर्तते । गर्भाशयस्थपिण्डस्यसर्वाङ्गजनककार्यं मातुरङ्गहेतुकं तदन्याहेतुकत्वे सति तद्धेतुकत्वात् । पिण्डाङ्गं मातुरङ्गजन्यमिति प्रतिपादितम् । पिण्डस्थित-जठरानलकार्यस्य हेतोर्दृष्टत्वात्, तस्यापि मातुराहाररसजन्यत्वात् । पार्थि-वाधिक्यद्रव्यादनात्पार्थिवाङ्गं भवति । अब्द्रव्याङ्गकार्यस्य अब्द्रव्याधिक्य-द्रव्यादनं हेतुः । पिण्डस्थितजठरानलकार्यं तैजसद्रव्याधिक्यजन्यम् । तस्मा-दन्तर्वल्न्या घृतं पाययेदित्याह—अन्तर्वल्न्येति ।

**अन्तर्वत्नीजन्यजातवेदा अन्तर्वत्नीघृतादनजन्यः ॥ ८० ॥**

अन्तर्वत्नीजन्यजातवेदा एव जठरानलो भवतीत्यर्थः ।

पतत्रिणामङ्गाङ्गहेतुकत्वं अण्डानामङ्गजनकत्वं जठरानलस्यापि अण्ड-स्थितघृतमेव हेतुः । तत्तज्जातीयद्रव्यस्यापि गर्भाण्डजानां ईदृशकार्यकारण-भावः प्रतिपाद्यत इत्याह—खेचराणामिति ।

**खेचराणां जनयतस्सह सर्पिषा पक्षिशरीरे ॥ ८१ ॥**

तैजसद्रव्याधिक्याश्रिताः ऊर्ध्वमार्गगत्याश्रितत्वात्, अग्नेः प्रज्वलन-वत् । तैजसाधिक्यशरीरादेव ते जीवा अण्डस्था एवाभिवर्धन्ते । अण्डो-त्पत्तिहेतुभूतौ पवनानलाधिकद्रव्यशरीरात्मकौ तावेव पितरौ । तज्जातीय-पिण्डानि स्वयमेवाभिवर्धन्त इत्यर्थः ।

खगानां गगनवर्त्मारोहणं केन हेतुना प्राप्तम्? पञ्चभूतात्मकं शरीर-मिति लक्षणस्य सर्वसाधारणत्वात् । गमनागमनचलनात्मकं कर्म शरीर-सामान्यमित्यत आह—आरोहणमिति ।

## आरोहणं गगनवर्त्मसु व्रजताम् ॥ ८२ ॥

खगानामारोहणकर्म अनलानिलात्मकद्रव्यगुणाधिकशरीरत्वात् । खे गमनं सूक्ष्मार्थगोचरत्वं शीतोष्णसुखसहिष्णुत्वं च तेन लभ्यत इत्यर्थः ॥

भूचरशरीराणां तु पार्थिवाप्यवाधिक्यशरीरत्वात् भूमिसञ्चारसहिष्णुत्वं स्नेहद्रव्यादनजातायुस्तेजोरेतोधारणं भवतीत्याह—घृतेति ।

## घृतप्लुतान्नादनाद्वायुस्तेजोरेतांसि दधाति ॥ ८३ ॥

खेचराणां शरीराणां स्वतस्सिद्धधातुदार्ढ्यवत्त्वम् । भूचरशरीराणां तन्न रोचते धातुदार्ढ्यम् । तत्तद्रसवद्द्रव्यादनजातौपाधिकधातुदार्ढ्यं न स्वभावतः प्राप्तत्वादित्यर्थः ।

ननु घृतप्लुतान्नादनं आयुराद्यभिवर्धकमित्युक्तम् । तच्चिन्त्यं, अधिक-घृतप्लुतान्नादनस्य अजीर्णकार्यहेतुकत्वात्, आयुस्तेजोरेतसां क्षीणत्वकारणं च, गुरुत्वकार्यस्य च प्रतीतत्वात् । यानि द्रव्याण्यजीर्णकारकाणि तानि तु क्षीणत्वकारकाणि । एवमन्वयव्यतिरेकप्रमाणाभ्यां सिद्धत्वादित्यत आह—योग्येति ।

## योग्यद्रव्योपयोगैरभिवर्धते ॥ ८४ ॥

व्याधिनिवर्तकत्वं योग्यद्रव्याणां योगः, तन्निवर्तकरसवद्द्रव्यत्वं रोगा-भावकार्यस्य निवर्तकत्वं, यद्द्रव्योपयोगनिवर्तकत्वं नाम रोगाभावकार्यस्य हेतुत्वमेव । अभिवर्धन्तामवयवा इत्यर्थः ।

ननु इदमप्यनुपपन्नं, योग्यायोग्यद्रव्योपयोगकर्मकरणं यावद्रोगाभाव-कार्यहेतुकाप्रतियोगिकार्यफलप्रापकद्रव्यत्वात् यावद्रोगाभावकार्यस्य कारणत्व-

प्रतिपादनमात्रे पर्यवसितम् । तावद्रोगनिवर्तकं प्रति हेतुत्वं प्रतिपादितम् । न तद्गर्भसंरक्षणमात्रस्य हेतुत्वप्रतिपादकावस्थेयम् । अत्रेदं द्योत्यते—पिण्डाभिवर्धककर्ममात्रं प्रतिपादितमित्यस्वरसादाह—एधन्त इति ।

एधन्तेऽस्मा ऋतवः ।। ८५ ।।

अत्र ऋतव इत्युक्ते षड्तूनां वार्षिकत्वं प्रतिपादितम् । इदं तु ऋतुप्रतिपादकप्रकरणं न भवति, किं तु गर्भाशयस्यपिण्डाभिवर्धककार्यस्य हेतुत्वप्रतिपादकावस्थेयम् । अत्रेदं न द्योत्यते, पिण्डाभिवर्धककार्यमात्र-प्रतिपादकत्वात् । तथाहि—ऋतुकर्मोद्देश्यऋत्वभावकार्यहेतुत्वाभिवर्धक-कर्मादि विशिष्टकालज्ञापकत्वं ऋतुरिति । तादृशविशिष्टकालो गर्भाशयस्य पिण्डावयवाभिवर्धकद्रव्यादनादृत्वभावविशिष्टकार्या एधन्त इत्यर्थः ॥

ननु ऋत्वभावविशिष्टकालाभिवर्धनेन कथं पिण्डावयवाभिवृद्धिः ? तद्योग्याभावकालस्य अदृष्टत्वादित्यस्वरसादाह—अन्नेति ।

अन्नाद्भूतानि जायन्ते ।। ८६ ।।

पिण्डाङ्कुराविर्भावहेतुकयावद्द्रव्यादनं ऋत्वभावकार्यहेतुकं भवतीति सोऽर्थोऽत्र विवक्षित इत्यर्थः । सर्वरसद्रव्यादनस्य सर्वेषामपि सम्भावितत्वात्, सर्वत्रापि कार्यस्यादृष्टत्वादित्यस्वरसादाह—जातानीति ।

जातान्यन्नेन वर्धन्ते ।। ८७ ।।

जातपिण्डाशयः पूर्वोक्तरसद्रव्यादनहेतुरिति प्रतिपादितमित्यर्थः ॥

अन्नादनं शरीरदार्ढ्यकारकमिति अन्वयव्यतिरेकप्रमाणसिद्धत्वात् । 'यत्सत्त्वे यत्सत्त्वं यदभावे यदभावः' इति न्यायेन अन्नादने सति शरीरदार्ढ्यं तदभावे तदभाव इति न्यायनयसिद्धत्वात् । अन्यथासिद्धेश्च—दिवा अभुञ्जानस्य देवदत्तस्य सत्त्वं रात्रिभोजनमन्तरेण न संभवतीति, तस्यापि रात्रिभोजनमन्तरेण सत्त्वं नोपपद्यते, स्वावयवव्यतिरिक्तपिण्डावयवाभिवर्धकं न भवति, अन्यसाधनस्य अन्यावयवाहेतुकत्वात् इत्यस्वरसादाह—अद्यत इति ।

## अद्यतेऽत्ति च भूतानि ॥ ८८ ॥

त्रिविधभूतानि । सात्त्विकराजसतामसद्रव्यादनात्तत्तद्गुणभूयिष्ठशरीराभिवृद्धिकारणत्वात्त्रिगुणात्मकं शरीरम् । भूतानि तत्तदभिवर्धकद्रव्यादुत्पद्यन्त इत्यर्थः ।

उक्तार्थमुपसंहरति—तस्मादिति ।

## तस्मादन्नं तदुच्यत इति ॥ ८९ ॥

अन्नं धातुप्रदं पुष्टिदं अवयवाभिवर्धनकरं पदादशगुणं प्रयच्छति । इति शब्देन हेतुरुच्यते । रसवदन्नमवयवाभिवृद्धिं करोति । तस्मादन्नरसमयं उपसंहृतार्थं शुद्धरसवदन्नं प्राणमयं पिण्डावयवाभिवर्धकं तदुच्यत इत्यर्थः ॥

अन्नं तु स्वनिष्ठरसगुणं प्रयच्छति, अवयवाभिवृद्धिकरणे सामर्थ्याभावात् शुष्कान्नादनं विरुद्धफलं प्रयच्छति । कथमन्नं जीवातुरिति वक्तुं शक्यमित्यत आह—घृतेति ।

**घृतप्लुतान्नमन्तर्वत्न्याः प्रदापयेत् ॥ ९० ॥**

शुष्कान्नं विरुद्धफलं ददाति । घृतप्लुतान्नमेव कार्यकारकाम् । तस्मादन्तर्वत्न्याः घृतप्लुतान्नं दापयेदित्यर्थः ।

पुनरप्युक्तमर्थमुपसंहरति—तस्मादिति ।

**तस्मात्स्वावयवविभवं धातुवर्धनं कुर्वत्यः प्रजाः प्रजायन्ते ॥ ९१ ॥**

घृतप्लुतान्नादनं अवयवाभिवर्धकमित्युक्तम् । यत्किंचिद्विकारे सति तन्निवर्तकेन निवर्तनीयम् । तद्घृतप्लुतान्नमेव निवर्तकमिति वक्तुं न शक्यते, गुरुद्रव्यत्वात् । तस्मादसङ्गतमित्यस्वरसादाह—तदिति ।

**तच्छोषकपोषकद्रव्यं तत्र भेषजम् ॥ ९२ ॥**

विकारे सति शोषकपोषकद्रव्ये कार्यकारके भवतः । जातशिशोश्च प्रथमर्तौ प्रथमं शोषकद्रव्यजातरुजः शोषकद्रव्यं भेषजम् , पोषकद्रव्यजातरुजः पोषकद्रव्यं निवर्तकम् । एवं दशममासपर्यन्तं अन्योन्यं निवर्तकं भवति । गर्भस्थशिशोर्यावद्द्रव्यमभिवर्धकं भवति तावद्द्रव्यमात्रं भेषजमित्यर्थः ॥

ननु गर्भस्थशिशुवज्जातशिशुरपि भेषजद्रव्यैः पोष्यते । प्रथमोत्पन्न-शिशोः द्रव्यादनज्ञानं नैधते । मातुराहाररसाहारजन्यप्रतिकारकरसवद्द्रव्यादन-भेषजकर्मणः पोषकद्रव्यत्वात् । तद्वदत्रापि पोषकद्रव्याण्येव हेतुरिति वक्तुम-शक्यत्वादित्यस्वरसादाह—एवमिति ।

**एवमुत्तरोत्तराभिवृद्धिर्मासे मासे ॥ ९३ ॥**

यावद्योग्यरसादनं पक्षीकृत्य किंचित्किंचिदेधितव्यम् । अवयवाश्च

कालश्च देशश्चेति एतानुद्दिश्य तत्तद्योग्यद्रव्यं एषितं हितं निवर्तकं भवतीत्यर्थः। शोषकपोषकद्रव्यस्य इयं व्यवस्था कृता। एवं प्रतिमासं चिकित्साकरणं कर्तुमयोग्यम्। वर्धिष्णोः शरीरस्य वृद्धिकरणद्रव्यादनमेव योग्यमित्यस्वरसादाह—यावदिति।

**यावद्वार्धिकास्तत्र भेषजाः ॥ ९४ ॥**

वार्धिकद्रव्यमात्रं प्रशस्तं भवति। तथा चेदतिप्रसङ्गस्स्यात्। यावच्छब्दार्थमहिम्ना यावद्योग्यरसवद्द्रव्यादनं विवक्षितमित्यर्थात्। न केवलं यावद्वार्धिकद्रव्यं वृद्धिकारकं भवति, कालवशात् शोषककार्यगुणस्वभावत्वात् इत्यत आह—सर्पिषेति।

**सर्पिषा पोष्यपोषकाः ॥ ९५ ॥**

यावद्वार्धिकद्रव्यं सर्पिस्संयोगानलपाकजन्यं संस्कारविशिष्टपाकरसवद्द्रव्यं कार्यकारकं भवति, स्नेहवद्द्रव्यसंयोगजन्यवार्धिकगुणप्रापकद्रव्यत्वादित्यर्थः ॥

लङ्घनादिना दोषे क्षीणे सति धातुशोषे सति तत्र पोषकद्रव्यं कार्यकारकं "असौ पोषणकरो भवतीति"। तत्र शोषकद्रव्येण निवर्तककरणं अयोग्यमित्यत आह—नेति।

**न पोषककाले शोषकाः ॥ ९६ ॥**

पोषककार्यकरणयोग्यकाले शोषकद्रव्यकालोचितकरणं अयोग्यमित्यर्थः ॥

ननु पोषकाश्च शोषकाश्च लोके व्यवहारयोग्याः षड्रसा एव। एकैकरसवद्द्रव्यस्य एकैकधातुपोषकत्वप्रयोजकत्वमागतम्। तावत्पोषकत्वस्य स्वत एव सिद्धत्वात्। रसवद्द्रव्यातिरिक्तद्रव्याभावादित्यस्वरसादाह—षड्रसा इति।

षड्रसाः सप्तधातुपोषकाः ।। ९७ ।।

रसासृजोरेकैकवत्कषायरसवत्पोषकतया जनयिता च ! तस्मादेकर-सप्रधानत्वादित्याशयं मनसि निधाय षड्रसानां सप्तधातुपोषकत्वं वक्तुं सुकर-मित्यर्थः ।। तथाहि—सप्तधातुगुणकं तस्योपकारकं, तेषां षड्रसपोषकत्वस्य स्वत एव सिद्धत्वात् । तस्मादिदमसङ्गतमित्यस्वरसादाह—रस इति ।

रसो ह्यसृक् ।। ९८ ।।

रसो वै सः ।। ९९ ।।

रसधातुरसृग्भवति एकरसजन्यत्वात् । अन्तस्स्थितस्सन् रक्तमित्यभि-धीयते । स एव बहिर्गतश्चेत् स्वेदरूपेण स्रवति । तद्रसनेन्द्रियं ऊष्मणा बहिर्गतं भवति । रसो लालारूपः स एव रश्मिः । तज्ज्ञानवानात्मा । तद्विषयकज्ञानमानन्दहेतुकम् । रसनेन्द्रियज्ञानग्राहकज्ञानगोचरज्ञानं यस्यास्ति तस्यैवानन्दो भवतीत्यर्थः ।।

द्विरसार्थजङ्घयोः नासिकायाः गुह्याशयं मासि मासि प्रथमतौ वृद्धिस्सर्वजन्तूनां योऽप्रयोगो नव ।।

इत्यायुर्वेदस्य प्रथमप्रश्नस्य भाष्यं योगानन्दनाथकृतं
सुप्रसिद्धं महाजनसंमतं प्रतिसूत्रव्याख्यानपूर्वकं
आयुर्वेदभाष्यं लोकोपकारकं संपूर्णम्



# आयुर्वेदे तृतीयप्रश्नः

—o—

ननु रसज्ञानं लब्ध्वाऽऽनन्दी भवतीति सूत्रव्याख्यानं कृतम् । तच्चिन्त्यम् । जीवात्मनां आनन्दानुभववत्त्वं, बाह्येन्द्रियाणां बाह्यार्थविषयक-गोचरज्ञानं आनन्दहेतुकं न भवति, तद्विषयकज्ञानानुभवस्य इन्द्रियार्थसंयोग-कालमात्रं आनन्दहेतुकं, तद्विनाशे सति तन्नाशात् । बाह्येन्द्रियविषयानुभवस्य तत्संसर्गनाशे सति तन्नाशात् इत्यस्वरसादाह—अथेति ।

## अथ योगानुशासनम् ।। १ ।।

अथशब्देनानन्तर्यं सूच्यते । षड्रसवद्द्रव्यादनस्य शरीरदार्ढ्य-कार्यहेतुत्वं सम्प्रतिपादितम् । तस्माद्दृढतरधातव आत्ममनस्संयोगसम्पाद-नार्थं हेतुभूतास्ततः तद्विषयकज्ञानानुभवानन्दं अन्तरिन्द्रियात्मसंयोगजन्यं भवतीति मनसि निधायाह जीवात्मनः परमात्मानुसन्धानमानन्दहेतुकं भवतीति ।

ननु योगानुशासनमपि अजीर्णाभावसम्पादनार्थं कारणं भवतु । तथा सति आमनिवृत्तेरेव फलत्वात् अनिष्टपरिहारमात्रं फलं लभ्यत इत्यत आह—तस्मादिति ।

## तस्माद्योगः फलदः ।। २ ।।

विषयानुभवो विषयानन्दहेतुकः । आत्मानुभवोऽप्यात्मानन्दहेतुकः, आनन्दहेतुककार्यस्य उभयोरपि समानत्वात् । योगानुशासनेन किमधिकफलं

लभ्यत इत्याशङ्क्य अनित्यविषयकज्ञानगोचरज्ञानजन्यकार्यमनित्यं भवति । आत्मनो नित्यद्रव्यत्वात् नित्यद्रव्यविषयकज्ञानगोचरज्ञानमेव आनन्दो भवति । अन्तरिन्द्रियस्य मनसः आत्मगोचरस्वभावत्वेन सर्वकाले आनन्दानुभवो लभ्यत इति आत्ममनस्संयोगस्यैव योगत्वात् योगः शाश्वतं फलं प्रयच्छतीत्यर्थः ।

ननु परमात्मनो नित्यद्रव्यत्वाद्विभुत्वाच्च सर्वदा मनसः आत्मना समवेत्य स्थितत्वात् सर्वदा आनन्दानुभव एव भवेत् । इन्द्रियस्यार्थेन समवेत्य प्राप्यप्रकाशत्वनियमात् । तज्ज्ञानगोचरज्ञानं आत्मनो विषयीकृतं भवतीत्यत आह—प्रकृतीति ।

## प्रकृतिपुरुषान्तर्मुखज्ञानगोचरप्रत्ययप्रकृतिपरिणामो योगः ।। ३ ।।

प्रकृतिविशिष्टपुरुषं विषयीकृत्य अन्तरिन्द्रियेण मनसा गुणविशिष्टपरमात्मनि विषयीकृते सति बाह्येन्द्रियार्थविषयज्ञानविरामेण तादृशगुणविशिष्टपरमात्मानुभवस्य परमानन्दहेतुकत्वात् तद्विषयकज्ञानयोगः परिणामयोग इत्यर्थः । प्रकृतिपुरुषविशिष्टद्रव्यं यदा विषयो भवति तदा आनन्दानुभव इत्यर्थः । तथा सति विषयानन्दमुद्दिश्य प्रकृतिविशिष्टात्मविषयकज्ञानं परमानन्दहेतुकमिति सर्वदा अयमानन्दानुभवं विषयीकरोतु, किं बाह्येन्द्रियविषयगोचरज्ञानेन, अल्पानन्दानुभवहेतुकत्वादित्यत आह—रज इति ।

## रजउद्रेकादस्थिरं बहिर्मुखात्सुखदुःखहेतु ।। ४ ।।

परमात्मा कंचित्कालं राजसगुणविशिष्टो भवति । कंचित्कालं सात्त्विकगुणविशिष्टो भवति । कंचित्कालं तामसगुणविशिष्टो भवति ।

यदा जीवात्मनि राजसादिगुणाः आत्मभावा भवन्ति तद्गुणविशिष्ट आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, इन्द्रियाणां प्राप्यप्रकाशत्व-नियम इति न्यायस्य दृष्टत्वात् । राजसगुणसंसृष्टदोषवशात् आत्मानुभवं विधाय बाह्यविषयकसुखमनुभूयत इत्यर्थः । यदा सत्वो जीवः तामसगुण-विशिष्टो भवति तदा तामसगुणविशिष्टस्सन् दुःखानुषङ्गं सुखमनुभवतीत्याह— तम इति ।

[1] तमउद्रेकात्कृत्याकृत्याज्ञानात्क्रोधादिभिर्नियमितो मूढः ॥ ५ ॥

तामसगुणाधिक्यात् कार्यविवेकज्ञानराहित्येन मूढमनाः क्रोधद्वेषादिभिः तद्विषयकज्ञानमनुभवति । ईषणत्रयविशिष्टतद्विषयकसुखमनुभूयत इत्यर्थः । यदा सत्वस्य सात्विकगुणाविर्भावो भवति तदा धर्मप्रतिपादकवेदान्त-शास्त्रेष्वासक्तः स्वधर्मशास्त्रप्रतिपाद्यकर्माचरणेन सुकर्मजन्यसुखमनुभूयत इत्याह —सात्विकेति ।

सात्विकोदयात्सुखम् ॥ ६ ॥

[2] दुःखाभावसाधकशब्दादिप्रवर्तकं सात्विकम् । जीवः सात्विक-गुणाविर्भावे सति तद्धर्मप्रतिपादककार्यकरणेन स्वर्गविषयकसुखं भुङ्क्त इत्यर्थः ।

ननु जीवात्मनः कदाचिद्राजसगुणानुभवः, कदाचित्तामसगुणानुभवः, कदाचित्सात्विकगुणानुभवो दृश्यत इति प्रतिपादितम् । नियमेन त्रिगुणानु-भवस्य को हेतुरित्याकाङ्क्षायमाह—मधुरेति ।

[1] तम उद्रेकात्सत्याज्ञानात् क्रोधादिभिर्नियमितं मूढम् ॥

[2] दयाद्दुःखाभावसाधकशब्दादिप्रवर्तकं सात्विकम् ।

**मधुररसान्नादनादनुमात्त्विकगुणहेतुकम् ॥ ७ ॥**

मधुररसविशिष्टमन्नं यो भुङ्क्ते स सात्त्विकगुणवान्भवति । स जीव औपाधिकगुणं भुङ्क्ते ।

त्रिगुणा मधुराम्लकटुरसादनहेतुका इत्याह—अम्लीति ।

**अम्लीभूतान्नादनं राजसगुणकारकम् ॥ ८ ॥**

**कटुकास्तमोगुणहेतुकाः ॥ ९ ॥**

यस्य मधुररसे प्रीतिरास्ते स मुमुक्षुर्भवति । स इतररसान्नादनं विहाय मधुररसवद्द्रव्यं भुङ्क्त इत्याह—मुमुक्षोरिति ।

**मुमुक्षोर्माधुर्यम् ॥ १० ॥**

मधुररसवद्द्रव्यं मोक्षहेतुः राजसतामसजनकरसाभावत्वे सति सात्त्विकगुणहेतुकरसवद्द्रव्यत्वात् । यो रसः सत्त्विकगुणप्रदो न भवति स मोक्षदोऽपि न भवति, कटुरसवत् । सर्वदा मुमुक्षुभिः माधुर्यरसः पानयोग्यो भवति सात्त्विकगुणहेतुकमोक्षफलप्रदो भूत्वा सात्त्विकगुणकारकत्वात् । सात्त्विकगुणस्य मोक्षहेतुकत्वाच्च ।

ननु राजसगुणेन सुखानुभवे सति सुखहेतुभूतार्थतत्त्वज्ञाने सति सुखविषयकतारतम्यानुभवो भवति । नित्यानन्दानुभवं मोक्षहेतुकसुखं मधुररसजन्यम् । आम्लरसजन्यं राजसगुणविषयकसुखमनुभूयते । तस्माद्धेयोपादेयविवेकज्ञानं राजसगुणजन्यसुखानुभवव्यतिरेकेण मोक्षहेतुकज्ञानजन्यसुखं ज्ञातुमशक्यमित्यस्वरसादाह—आम्लेति ।

आम्लरसादनात्सुखमेकमनुभूयते ।। ११ ।।

आम्लरसजन्यसुखं दृष्टानुभवदेशदेहकालान्तरभाव्यमोक्षविषयकसुखं प्रत्यक्षानुभवमित्यर्थः । तस्मादिदमेव मुख्यमिति एकशब्देन ज्ञाप्यते ।

सुखदुःखाभावप्रयोजकत्वं तद्दुःखानुभवं विना ज्ञातुमशक्यमित्यत आह—उष्णेति ।

[1]उष्णरसो दुःखानुषङ्गात्सुखं जनयति ।। १२ ।।

सुखानुभवो दुःखानुभवाभावस्य सुखत्वादित्यर्थः । ननु दुःखकार्य-कारककरणजातदुःखं अनुभवैकनाश्यम् । सुखज्ञानं तु दुःखानुभवपूर्वकम् । सुखानुभवस्य दुःखाभावकार्यप्रतियोगिकाभावानुभवज्ञानपूर्वकत्वात् । दुःखानु-षङ्गवत्सुखमपि दुःखहेतुकमपि भवति । सुखदुःखहेतुकार्यहेतुकसामग्रीपरि-पालनमेव पुरुषार्थ एव फलं भवेदित्याशयं मनसि निधायाह—तदेति ।

[2]तदा द्रष्टुस्स्वरूपावस्थानम् ।। १३ ।।

द्रष्टुरीश्वरस्य स्वरूपावस्थानं जगत्स्वरूपं यस्यास्ति, स ईश्वरस्तु जगत्स्वरूपो भूत्वा तिष्ठति । तस्य सुखानुभवस्य दुःखाभावकार्यप्रतियोगिका-भावानुभवस्यैव पुरुषार्थत्वात् । द्रष्टुः स्वरूपावस्थानं सुखदुःखानुरूपं भवतीत्यर्थः तस्य जगत्स्वरूपशरीरं भोगायतनम् । सुखदुःखानुभवो भोग इत्यर्थः ।

---

[1] ऊषण.

[2] तदा द्रष्टुस्स्वरूपावस्थान वृत्त्यसारूप्यमित त्र —A } योग I–3.
तदा द्रष्टुस्स्वरूपावस्थानं । वृत्तिसारूप्यमितरत्र—B }

ननु परमात्मन ईश्वरस्य निर्लेपनत्वात् निर्गुणत्वात् नित्यानन्दानुभववत्त्वात् तस्य सुखदुःखादिवैचित्र्यं कथं संभवति, शरीराधिष्ठानत्वस्य जीवात्मपरमात्मनोः समानत्वादित्यत आह—सुखेति ।

[1]सुखदुःखमोहात्मिकाद्यास्त्रयःप्रादुर्भवन्ति ॥ १४ ॥

अहं सुखी अहं दुःखी कर्माधीनकर्मोपाधिकरूपः प्रकृत्यात्मकत्वात् । यदा जीवात्मनि आवृत्ते सति आत्मनः मायाशबलितत्वात् तावन्तो धर्मा उपलभ्यन्त इत्यर्थः । अत एव कर्माधिकारित्वं जीवात्मन उपलभ्यते । आत्मन एव मोक्षाधिकारित्वादुरसान्नादनं तस्यैव लभ्यते । तज्जन्यसात्त्विकगुणो मोक्षोपकारको भवति । यदा आम्लरसादनं उपलभ्यते तदा राजसगुणाविर्भावो भवति । तेन केवलं सुखं भुङ्क्ते । कटुरसद्रव्यादनं यदा भवति तदा दुःखानुषक्तसुखमनुभूयत इत्यत आह—तदिति ।

तद्रजस्तद्धेतुगुणभूतजातम् ॥ १५ ॥

तद्रज इति तच्छब्देन सत्त्वरजस्तमोगुणा विवक्षिताः । तेषां मध्ये प्रथमगुणरजोगुणकार्यं हि आम्लरसवद्द्रव्यम् । रजोगुणभूतस्य आम्लरसवद्द्रव्यं कारणं भवतीत्यर्थः । तत्तु सत्त्वगुणकार्यस्य स्वादुरसलवणरसजन्यत्वं तमस्सत्वगुणयोः हेतुभूतादित्यर्थः । सूत्रे हेतव इति बहुवचनयोगस्य विद्यमानत्वात् तमस्सत्त्वयोरपि ग्रहणम् ।

ननु उक्तरीत्या स्वाद्वम्ललवणरसानां योजकं सत्त्वरजस्तमोगुणजनकमात्रं प्रतिपादितम् । वातपित्तकफजन्यरोगाणां निवर्तकरसद्रव्यस्य अन्यथासिद्धत्वात् तन्निवर्तकद्रव्याद्धीनेन जन्यरोगाः कथं निवर्तन्न इत्यत आह—यथेति ।

---

[1] सुखदुःखमोहात्मिका निवृत्तयः प्रादुर्भवन्ति— C.

### यथारोगनिवर्तकाः शोषकपोषकाः ॥ १६ ॥

स्वादुरसवद्द्रव्यं सत्वगुणहेतुकम् । आम्लरसवद्द्रव्यं रजोगुणहेतुकम् । लवणोष्णरसवद्द्रव्यं तमोगुणहेतुकम् । न ते रोगनिवर्तकाः । किन्तु शोषकपोषकद्रव्यादनादेव अनेकद्रव्ययोगेन बहुरसवद्द्रव्यं रोगनिवर्तकं भवेदिति वक्तव्यम् । रोगस्तु यदा आविर्भूतो भवति तदा सः अनेकामयाननुजायते । तत्र तद्रोगनिवर्तकेन अनेकरसवद्द्रव्यबाहुळ्येन भाव्यमित्यर्थः ।

ननु अत्र सत्वरसवद्द्रव्यं वा रोगनिवर्तकम् ? यत्किंचिद्रसवद्द्रव्यं वा ? नाद्यः अतिप्रसङ्गात् । यत्किंचिद्द्रव्यादनमिति चेत् तदा एकरसवद्द्रव्यादनेनापि भाव्यम् । तथा सति अन्यथा सिद्धमिति अस्वरसादाह—योग्येति ।

### योग्ययोगो योगः ॥ १७ ॥

यावद्रोगानुसारिनिदानज्ञानं तत्तद्रसवद्द्रव्यनिदानज्ञानपूर्वकं अनेकरोगामगतरोगस्य बहुरसवद्द्रव्ययोगनिवृत्तिसामग्रीकत्वात् इति ।

ऋषिरेव हि जानाति द्रव्यसंयोगजं फलम् ।

भेषजकल्पवचनं तु—

देशकालानुगुण्येन सङ्गृहीतं यथाविधि ॥<br>स्थापितं भेषजं तैस्तैः कल्पनैरमृतायते ॥

यथारोगानुसारितत्तद्विधिचोदितरसबाहुळ्ययोगत्वं रोगनिवर्तकं भवतीत्यर्थः ॥

ननु "अधिकं नैव दूष्यते" इति न्यायेन अनेकस्वादुरसवद्द्रव्यं वायुनिवर्तकम् । अनेकाम्लरसवद्द्रव्यमेळनं पित्तरोगनिवर्तकम् । अनेक-

लवणोष्णरसवद्द्रव्यं कफनिवर्तकम् । एतादृशयोगकल्पनमेव योग्ययोगो भवे-दित्यस्वरसादाह चित्तेति ।

## चित्तविभ्रमो विपर्ययः ॥ १८ ॥

यावद्रोगपित्तरसवद्द्रव्यमेळनव्यतिरेकेण योगकरणं विरुद्धयोगो भवति । तत्तु चित्तविभ्रमो भवति । चित्तं मनः । तयोरैक्येन रजतत्वाभाववति शुक्तौ रजतं यत्र भासते तत्र चित्तविभ्रमो भवतीत्यर्थः ।

ननु रजतत्वप्रकारकज्ञानग्राहकसामग्रीविशिष्टपुरोवर्तिनं यदा विषयी-करोति रजतत्वप्रकारकज्ञानग्राहकसामग्र्या तद्विशिष्टमेव भासते हट्टपट्टणादौ तथा दृष्टत्वात् । यावज्ज्ञानगोचरसामग्र्या अभावात् चित्तविभ्रमः कथं स्यादित्यस्वरसादाह—अतदिति ।

## अतस्मिंस्तदिति प्रत्ययः ॥ १९ ॥

यत्र रजतत्वाभाववति शुक्तौ रजतत्वं भासते तत्तत् । अतस्मिन् अन्यस्मिन् तदिति भ्रमो जायते । तत्र विकल्पः, तद्विषयकज्ञानग्राहक-सामग्री तद्विशिष्टार्थमेव गोचरीकरोति पुरोवर्तिग्राहकसामग्र्यारसत्वादित्यत आह—पित्तेति ।

## पित्ताधिक्यजातात्पीतश्शङ्खः ॥ २० ॥

पित्तप्रकोपरसादनेन पित्तरोगोद्भवो भवति । तत्र काचकामालादि-रोगवशात् श्वैत्यगुणविशिष्टपुरोवर्तिनि पीतगुणविशिष्टोऽयमिति ज्ञानं जायते, तत्तद्दोषवशात् । तच्च तद्दोषविरुद्धादनाद्भवति । तदा पीतश्शङ्ख इति ज्ञानं जायते ।

ननु सर्वे व्याधयः दोषत्रयजन्याः । ते सर्वेऽपि तत्तद्रसादनजन्याः । अतः सूत्रे पित्तविरुद्धद्रव्यादनाच्चित्तविभ्रमो भवतीति यत्तच्चिन्त्यम् । श्वैत्यगुणविशिष्टे शङ्खे पीतोऽयमिति ज्ञानं भासते । तदयुक्तमित्यस्वरसादाह —सेति ।

## सा प्रतीतिः पित्तविरुद्धाहारजन्या[1] ॥ २१ ॥

भ्रमविषयकज्ञानं च पित्तजन्यम् । पीतश्शङ्ख इति ज्ञानं च शुद्धपित्तविरुद्धाहारजन्यम् । पवनपित्तरोगजनकविरुद्धरसजन्यत्वे सति तद्विरुद्धाहारजन्यत्वात्, यन्नैवं तन्नैवं यथा घटादिः ।

ननु शुक्तौ इदं रजतमिति भ्रमविषयकज्ञानं जायते । पीतश्शङ्ख इत्यत्रापि तथा प्रतीयते । तदुभयं यावद्द्रव्यरसवद्द्रव्यादनजन्यनिवर्त्यभावकार्यहेतुभूतद्रव्यं तद्विरुद्धरसवद्द्रव्यादनकार्यहेतुपूर्वकं रसविरसजन्यरोगाभावकारकद्रव्यत्वात्, यन्नैवं तन्नैवं यथा घटः ।

ननु यत्किंचिद्द्रव्यं विषयीकृत्य अत्यन्तनिरीक्षणात् पूर्वं प्रमाणत्वेनानुभूतमपि तत्रैव संशयो जायते । तत्र रसवद्द्रव्यादनं हेतुर्न भवति इत्यत आह—अतीति ।

## [2] अतिनिरीक्षणे दोषप्रमायां संशयो भवति ॥ २२ ॥

इन्द्रियार्थसन्निकर्षे सति तदर्थविषयकज्ञानं जायते । तद्विषये तत्रैव तत्काले अतिनिरीक्षणदोषवशाद्भ्रमो भवति । तत्रापि पूर्वजातरजतप्रमाविषयकज्ञानं अतिनिरीक्षणदोषजन्यं न संशयज्ञानस्य निवर्तकं भवतीत्यर्थः ।

---

[1] चक्षुर्दोषजाता च । तत्कालोचितकार्यकारणम् । इत्यधिकपाठः—A. B.

[2] अतिनिरीक्षणदोषात्प्रभूतायां संशयो भवति—A. B.

ननु यद्विरुद्धरसवद्द्रव्यादनं यावद्रोगहेतुकं तद्विरुद्धद्रव्यादनं तत्तद्रोगनिवर्तकमिति वक्तव्यम् । तथा सत्यमधुररसजन्यरोगाणां निवर्तको मधुररस एव भवति । यथा कदळीफलविरसजन्यरोगस्य अजीर्णस्य कदलीफलरसद्रव्यादनं निवर्तकमिति वक्तुमशक्यमित्यर्थः । किंतु आम्लरसाद्या निवर्तका भवेयुरिति तात्पर्यम् । यावद्द्रव्यादनज्ञानं यत्काले यथोपलब्धं तत्काल एव पूर्वदिनान्नापेक्षया घृतरान्नादनं पथ्यं भवतीति तत्कालयोग्यद्रव्येण प्रथमदिनजन्यरोगस्य तत्कालोचितरोगाभावकार्यस्य प्रागभावपरिपालनं पुरुषार्थ इत्यर्थः ।

ननु रसविरसान्नादनाज्जातप्रमाप्रतीतस्थले यथा घटज्ञानगोचरज्ञानानन्तरं तत्रैवातिनिरीक्षणेन चक्षुर्दोषवशात् तत्प्रतीतिविषयतद्विषयतात्कालिकसंशयः कथं स्यादित्यस्वरसादाह—अत्यन्तेति ।

## [1]अत्यन्तानिमिषदृष्ट्या चक्षुरिन्द्रियदोषस्सम्भवति ॥ २३ ॥

तद्दोषवशात् तत्प्रमा अनत्प्रतीतिविषयस्थले दोषग्रस्तेन्द्रियगोचरज्ञानजन्यप्रमायाः संशयज्ञानस्य अप्रतिबन्धकत्वात् तत्र संशयो भवतीत्यर्थः ।

न पीडयेदिन्द्रियाणि न च तान्यतिलालयेत् ।

एतद्वचनानुसारेण इन्द्रियातिलालनमेव अनिमिषदृष्टिरिति न संशयः । विरुद्धरसादनजन्यं न भवतीति विशेषदर्शनसामग्रीसंशयप्रतिबन्धकात् तन्निवर्तकरसादनसामग्री ! तस्य जनकत्वाभावात् । यदा यस्य भ्रमो

---

[1] A. B. कोषाद्वयेऽप्येतत्सूत्रं न दृश्यते.

भवति तस्य राजसतामसगुणप्रतिपादकसामग्र्या भिन्नत्वादित्यस्वरसादाह—रज इति ।

**रजस्तमोगुणहेतुकद्रव्यपरिणामकात् [1] पित्ताद्विभ्रमो भवति ॥ २४ ॥**

राजसगुणजनकाम्लरसविरसद्रव्यादनं तद्गुणप्रधानजनकभ्रमहेतुकम् । तामसगुणजनकलवणकटुरसविरसवद्रव्यादनं तद्गुणप्रधानजनकभ्रमहेतुकम् । तस्माद्भ्रमस्तु रसविरसजन्यः । संशयस्तु न तथाभूत इत्यर्थः ।

ननु यत्संशयव्यतिरेकनिश्चयौ यत्प्रवृत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितौ व्याप्तिरिवेति न्यायशास्त्रानुसारेण अनिमिषदृष्टिदोषवशादेव भ्रमज्ञानं सम्भवतीत्यत आह—तदिति ।

**तद्विषये चाक्षुषाण्यनुभूतार्थेषु ॥ २५ ॥**

अन्येषां प्रमात्वेनानुभूतार्थे स एव विषयो यस्य तस्मिन् तद्विषये भ्रमो यस्य भवतीति स भ्रमो निवर्तकेन निवर्त्यः ।

ननु इन्द्रियार्थसन्निकर्षानन्तरं अयं घट इति ज्ञानानुभूतार्थे जाते सति ममोत्पन्नं ज्ञानप्रमाणमिति यो मानसिकभ्रमो जायते तद्यावद्रसवद्रव्यादनजन्यरोगग्रस्तेन्द्रियज्ञानगोचरत्वाभावादित्यस्वरसादाह—यावदिति ।

**यावद्गर्भाशयस्थं पिण्डं तावद्द्रव्यपरिपालनम् ॥ २६ ॥**

यावद्गर्भाशयस्थं मन इत्यर्थः । अस्मिन्मनसि चक्षुरिन्द्रियज्ञानगोचरघटविषयकमनसि अन्योत्पन्नज्ञानं अतद्विषयकं तदर्थप्रवृत्तौ न समर्थं

---

[1] पित्ताद्भ्रमो भवति—A. B.

प्रवृत्तिजनकत्वाभावात् भ्रमविषयकप्रमावत् । यावद्भिरसद्द्रव्यादनजन्यरोगग्रस्तेन्द्रियगोचरभ्रमज्ञानं मनोविषयकं मानसिकभ्रमानुभवज्ञानगोचरसामग्रीविशिष्टत्वात् । तज्ज्ञानविषयकं पिण्डं तद्भ्रमनिवर्तकरसवद्द्रव्यादनपरिपालनम् । भ्रमविषयकं ज्ञानं तन्निवर्तकरसद्रव्येभ्यो [1] रक्षणीयमित्यर्थः ॥

ननु भ्रमोत्पादकविरसद्रव्यादनाभावकार्यहेतुभूतार्थादने सति अदोषास्सन्तः तत्तदिन्द्रियार्थसन्निकर्षे जाते सति तद्वति तत्प्रकारकत्वानुभवात् तत्र भ्रमो न जायते, संशयज्ञानजनकसामग्र्यभावात् । भ्रमप्रत्ययविषयगोचरार्थविषयकज्ञानगोचरज्ञानानुभवेन तस्य भ्रमाद्यभावविषयकत्वात् । तज्ज्ञानविषयकपिण्डस्य भ्रमसंशयज्ञानविषयकत्वेन यत्किंचिद्द्रव्यादनकार्यासंभव इत्याह—अदोषेति ।

**अदोषजातपिण्डं [2] क्वचिन्निवर्तयेत् ॥ २७ ॥**

आशया दुष्टास्सन्तः इन्द्रियार्थसन्निकर्षे सति भ्रमविषयकमेव गोचरीकुर्वन्ति । तत्साधारणज्ञानविषयकस्य अदोषग्रस्तेन्द्रियविषयकज्ञानगोचरत्वादित्यर्थः ॥

**निमित्ते हि पथ्यं भेषजम् ॥ २८ ॥**

ननु निमित्ते सति रोगो जायते । तत्रैव पथ्यं कार्यम् । तत्र लघ्वन्नादनं पथ्यम् । तथा च यदा आशया दोषदुष्टा भवन्ति तत्र हीनादने आशयानां रिक्तत्वमस्तीति वक्तव्यम् । 'रिक्ते वायुः प्रकुप्यते' इति सूत्रार्थानुसारेण तत्र वायोः प्रबलत्वात् सम्यग्गत्याशयाभावत्वाच्च इन्द्रियाणि सविकाराणि भवन्ति । तत्र पथ्यं भेषजमिति सूत्रं न सङ्गतमित्यस्वरसादाह—यावदिति ।

---

[1] निवर्तनीयमित्यर्थ—इति सुपाठः. [2] क्वचिन्निवर्तकैर्न निवर्तयति—B.

## यावदाहारपरिणामजाताः क्लिष्टाः ॥ २९ ॥

यावद्दिनभोजनमपि आशयानां क्लेशकारकम् । हीनभोजनमपि आशयानामतिक्लेशकारकम् । तदुभयमपि पथ्यं न भवतीति कृत्वा सूत्रमेव आक्षिपतीत्यर्थ ॥

## क्लिष्टाः क्लेशाः, अक्लिष्टा अक्लेशाः ॥ ३० ॥

क्लिष्टाः क्लेशा भवन्ति । अक्लिष्टा अक्लेशा भवन्तीत्यर्थः ॥

ननु हीनभोजनाज्जातरोगस्य अतिभोजनमपि पथ्यं न भवति । अतिभोजनाज्जातरोगस्य हीनभोजनमपि पथ्यं न भवति । उभयोरपि निवर्तकं वक्तुं न शक्यत इत्यस्वरसादाह—यावदिति ।

## यावत्प्रस्तुतमहरहर्भेषजम् ॥ ३१ ॥

अहरहर्भुक्तानामजीर्णभावकरणेन आशयानां भुक्तत्वं यत्र भाति । आशया निर्दुष्टास्सन्तः यत्रेन्द्रियाणामरोगत्वप्रतिपादनं तावद्गोचरज्ञानमेव तद्भवति तत्प्रकारकत्वं वक्तुं शक्यत इत्यर्थः ॥

ननु आशयेषु रिक्तेषु वातप्रकोपो भवतीति पूर्वं प्रतिपादितम् । इदानीमपि यावद्रोगाणां प्रस्तुतत्वं नाम आमाशयस्य भुक्तकरणत्वं वक्तव्यम् । तथा सति प्रत्यहं रिक्तकरणत्वं न योग्यमित्यस्वरसादाह—यावदिति ।

## यावदुद्भूतशोषकगुणजाता रुजः [1] तत्तदुद्भूतपोषकद्रव्यं तत्र भेषजम् ॥ ३२ ॥

यावत्कार्याणां कारणीभूतरसवद्द्रव्याविर्भूतशोषकद्रव्यजातरुजां निवर्तकीभूतनिष्ठपोषकद्रव्यं तावद्रोगाणां भेषजं निवर्तकं भवतीत्यर्थः ॥

---

[1] तत्तद्भूतहितगुणवत्पोषकद्रव्यम् .

पूर्वसूत्रस्यास्वारस्यं निस्सारयन् आह—आमेति ।

[1]आमनिस्सरणकार्यं कर्तव्यम् ॥ ३३ ॥

प्रत्यहं आमनिस्सरणकार्यं कर्तव्यमिति बोद्धव्यम् । "मम आमवृद्धिः जाता" इति ज्ञानानन्तरं आमनिस्सरणकार्यं विधिरिति ज्ञापनार्थं आमनिवृत्तिकरणमेव "प्रत्यहं मम आमवृद्धिर्जायते" इति यस्य ज्ञानमस्ति तादृशं प्रति इदं भेषजं भवतीत्यर्थः ।

ननु शोषकद्रव्यादनजातरोगाणां पोषकद्रव्यं तत्र भेषजमिति वक्तुं न शक्यते । शोषकद्रव्यादनं नाम शुष्कद्रव्यादनम् । तेन अजीर्णे जाते सति तन्निवृत्यर्थं लङ्घनमेव कर्तव्यम् । तत्र निवर्तकीभूतपोषकद्रव्यं भेषजं भवतीति रुक्प्रदर्शनानन्तरं लङ्घनेन दोषप्रकोपनिवृत्तिं कृत्वा धात्वभिवृद्ध्यर्थं पोषकद्रव्यं तत्र भेषजं भवतु, आदावेव रुक्प्रदर्शने जाते प्रथमत एव पोषकद्रव्यप्रदानेन दोषाः प्रकुपिता भवेयुरित्यस्वरसादाह—यावदिति ।

यावद्धात्वङ्कुराभिवर्धकद्रव्याभावजातरोगाः तत्पोषकसंस्कारयुक्तस्नेहादयो निवर्तकाः ॥ ३४ ॥

किंचिद्विरुद्धरसद्रव्यादनज्ञानेन रोगाविर्भावात्पूर्वमेव तन्निवर्तकेन निवर्तयितुं सुकरमेव । तद्द्रव्यात्यादनादेव निवर्तयितुं शक्यते । अन्यथा रोगाङ्कुरे जाते सति तन्निदानहेतुभूताङ्गाविर्भावपर्यंतं निवर्तकेन ते निवर्त्या भवेयुः । धातुषु व्याध्यङ्कुराविर्भावकार्याभावकारणाज्जातरुजः तत्र पोषकद्रव्ययुक्तस्नेहादयो निवर्तकाः । अन्यथा तत्पोषकद्रव्ययुक्तस्नेहाद्याः तद्द्रव्यैस्सहिताः तत्पानाभ्यङ्गावलेपनात् व्याधीन्निवर्तयन्तीत्यर्थः ।

---

[1] कोशान्तरे इदं सूत्रं न दृश्यते

ननु सर्वेषां सर्वपदार्थादनस्य प्रस्तुतत्वात् सर्वद्रव्यादनं रोगहेतुकं भवति । यावद्रोगाणां यावद्द्रव्याणां कार्यकारणभावे ज्ञाते सति इदं व्याधिहेतुकं द्रव्यं इदं व्याधिनिवर्तकं द्रव्यं इति तयोर्व्याप्तिग्रहे सति तथा वक्तुं शक्यते । सर्वत्रापि तथाप्यननुभवेन तयोर्व्याप्तेरभावादित्यस्वरसादाह— मातुरिति ।

**मातुराहाररसाहारजनितावयवस्थितरसाः प्रवर्तकाः ।। ३५ ।।**

तत्र शिशूनां स्तन्यपानादनेन यावद्धातुषु व्याधःकुणाविर्भावकार्याभाव-कारणाज्जातरोगाणां तन्निवर्तकीभूताः शोषकपोषकादयो मातुः रसाहार-परिणामेन सर्वरोगप्रागभावपरिपालनम् । स्तन्यपानेन अरोगास्सन्तः "शतायुः पुरुषश्शतेन्द्रियः" इति रोगकार्यप्रतिबन्धकस्य विद्यमानत्वात् निवर्तक-निवर्त्यानुमितौ व्याप्तिर्गृहीतुं शक्यत इत्यर्थः ।

ननु मातुराहाररसाहारजन्यावयवस्थितरसा वा आमयनिवर्तका इति प्रतिपाद्यन्ते । विरसादनेन मातुर्विकारे जाते सति तत्र पयस्स्थितरसाः अनिवर्तका भवन्ति प्रवृत्त्यादिहिता इत्यस्वरसादाह—अविकारमिति ।

**अविकारं निरीक्ष्यैनां मातृजं पाययेत् ।। ३६ ।।**

मातुस्स्तन्यपानं शिशोरामयनिवर्तकं न प्रवर्तकं यदा भवति तदा एनां मातरं रोगनिवर्तकद्रव्येभ्यः अविकारो यथा भवति तथा कुर्वन् तज्जन्यशिशून् मातृजं स्तन्यं पानयोग्यं पाययेदित्यर्थः ।

शिशोः पोषकशोषकद्रव्यमपि प्रवर्तकं भवति । केवलं स्तन्यपानमात्रं न प्रवर्तकमित्यत आह- योग्येति ।

## योग्यद्रव्येण च तान्पोषयेत् ।। ३७ ।।

योग्यद्रव्येणैव च तान् पोषयेत् । मातृस्तन्यपानादिना अजीर्णे जाते न स्नेहद्रव्यं तत्र प्रयोजकं भवति । तत्तद्रोगोपयोगयोग्ययोगयुक्तं घृतं च तैलं च निवर्तकं भवतीत्यर्थः । तदेव योग्यद्रव्यमिति तात्पर्यम् । तान् शिशून् प्रत्यहं पोषयेदित्यर्थः ।

ननु मातृस्तन्यपयः तज्जन्यशरीराणां रोगग्रस्तानां तत्वयो निवर्तकं भवतीत्युक्तम् । इतः पूर्वं षड्रसवद्द्रव्याणां निवर्तकत्वं प्रतिपादितम् । इदानीं मातृस्तन्यमेव सर्वव्याधीनां निवर्तकं भवतीत्युक्तम् । तथा चेत् षड्रसवद्द्रव्याणां निवर्तकत्वं न स्यादित्यस्वरसादाह—यावदिति ।

## यावत्स्तन्यपाः तावद्बालकाः स्तन्यपानम् ।। ३८ ।।

स्तन्यपानां शिशूनां धातुपोषकं अन्नादनाहेतुकत्वे सति रसवद्द्रव्य-पोषकहेतुकत्वात् । अन्नादनं तु न धातुपोषकं अन्नादनायोग्यधातुपोषकत्वात् पोषकद्रव्यजन्यत्वाच्च इत्यनुमानविधया मातृजन्यपयसां शिशोर्धातुपोषकत्वं अन्वयव्यतिरेकप्रमाणसिद्धम् । यावत्स्तन्यपानोपजीव्यं शिशोश्शरीरमिति । सर्वदा मातृपुत्रत्वमात्रं शिशुत्वज्ञापकं न भवतीत्यर्थः । मातुरजीर्णजाते सति तच्छिशोस्तदजीर्णवशात् तत्सदृशा आमयास्सम्भवन्ति । तत्प्रतीकारस्तु केन कारणेन भाव्यः । तेषां शिशूनां चूर्णघृततैलादीनामसंभावित्वात्, अयोग्यत्वाच्च । तत्तदामजन्यामयानां तत्तद्विधिविहितेन निवर्तयितुमशक्यत्वात् इत्यस्वरसादाह—बालेति ।

**बालयोग्यनिवर्तकं कुर्यात्** ।। ३९ ।।

स्तन्यपानाहारोपजीव्यकार्यविशिष्टबालामयानां निवर्तकं भ्रमः । तन्निवर्तकं रेचकप्रसाध्यम् । मातुराहारजातस्तन्यपानेन अमितत्वेन जातरूज उभयशरीरजन्यत्वात् । प्रायश आमप्रवृद्धया तत्तद्विरेचकं सुकुमारद्रव्ययोग्य-कर्मकरणात् तत्तद्व्याधीनां निवर्तकमित्यर्थः ।

ननु चाक्षुषप्रतीतिजन्यप्रमाप्रतिबन्धकलवणोष्णरसवद्द्रव्यसंशयीविभ्रमौ चक्षुरिन्द्रियदोषजन्यौ । तन्निवर्तकैस्तु कथं निवर्तत इत्यत आह—श्रोत्रेति ।

**श्रोत्रेन्द्रियाच्छब्दज्ञानम्** ।। ४० ।।

श्रोत्रेन्द्रियजन्यशाब्दप्रमाप्रतिबन्धकतिक्तरसवद्द्रव्यादनं तत्संशयव्यति-रेकान्वयौ यज्ज्ञानप्रमाप्रतिबन्धकौ । कषायतिक्तमधुररसाः परिशुद्धास्सन्तः निवर्तका भवेयुरिति वक्तव्यत्वात् । तथा सति रसनेन्द्रियविषयकरसज्ञानजन्य-प्रतीतिप्रतिबन्धकसंशयविभ्रमौ केन कारणेन निवर्तनीयावित्यत आह—रसनेति ।

**रसनेन्द्रियजन्यप्रमादामविरसदोषादिकैकरमात्संशय-विभ्रमौ भवतः** ।।४१ ।।

रसनेन्द्रियजन्यशुद्धरसज्ञानप्रतिबन्धकौ स्वादुरसवद्द्रव्यादनविभ्रमादि-हेतुकौ यत्संशयव्यतिरेकनिश्चयौ यावदिन्द्रियज्ञानगोचरप्रमाप्रतीतिप्रतिबन्धकौ तद्विरुद्धद्रव्यादनं तद्धेतुरित्यर्थः ।

घ्राणेन्द्रियविषयकगन्धज्ञानजन्यप्रमाप्रतिबन्धकसंशयविभ्रमौ केन हेतुना निवर्त्येते इत्यत आह—घ्राणेति ।

घ्राणेन्द्रियाद्गन्धप्रतीतिस्तथा ।। ४२ ।।

घ्राणेन्द्रियजन्यशुद्धगन्धज्ञानप्रमाप्रतिबन्धकाम्लरसवद्द्रव्यादनं भ्रमसंशयहेतुकम् । तन्निश्चयस्तद्धेतुरित्यर्थः ।।

श्रोत्रेन्द्रियविषयकशब्दज्ञानजन्यशाब्दप्रमाप्रतिबन्धकसंशयभ्रमौ कथं निवर्त्येते इत्यत आह—श्रोत्रेति ।

श्रोत्रेन्द्रियाच्छब्दज्ञानं तथा ।। ४३ ।।

श्रोत्रेन्द्रियजन्यशाब्दप्रमाप्रतीतिप्रतिबन्धककषायविरसद्रव्यादनं शाब्दिकसंशयभ्रमहेतुकं भवतीत्यर्थः ।

त्वगिन्द्रियविषयकस्पर्शज्ञानजन्यप्रमाप्रतीतिप्रतिबन्धकतिक्तरसवद्द्रव्यादनं तत्संशयभ्रमजनकम् । यत्संशयव्यतिरेकनिश्चयौ प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति न्यायेनैव निश्चय इत्यर्थः ।

त्वगिन्द्रियविषयकज्ञानप्रमाप्रतीतिप्रतिबन्धकदोषनिवृत्त्यर्थं पोषकाधिक्यशोषकद्रव्ययोग्यकारणं तन्निवर्तकं भवतु । पोषकद्रव्याणां निवर्तकत्वं स्वादुद्रव्ययुक्तयोगकरणं यस्य भेषजं निवर्तकं भवति तदेव त्वगिन्द्रियमित्यत आह—शोषकेति ।

शोषकद्रव्याधिक्यजातासृक्प्रतिबन्धकपवनानलगतिजातदोषविषयकविपर्ययज्ञानं प्रमाप्रतिबन्धकहेतुकम् ।। ४४ ।।

ननु पञ्चेन्द्रियविषयकज्ञानं प्रतिबन्धकरुङ्निवर्तकं भवतु । पोषकद्रव्ययोगार्थशोषकद्रव्ययोगकरणं कथं भवेदित्यस्वरसादाह—सार्द्रमिति ।

सार्द्रद्रव्यं तत्र भेषजम् ॥ ४५ ॥

सार्द्रद्रव्यं नाम अप्पयश्च मूत्रं च मधु च तैलं च घृतं च, इदं सार्द्रद्रव्यं भवति। एतद्योगकरणं विशिष्य ज्ञाप्यत इत्यर्थः।

ननु पोषकद्रव्ययुक्ताल्पशोषककल्पकद्रव्ययोगं भेषजं निवर्तकं भवेदिति प्रतीयते। इदानीं केवलं सार्द्रद्रव्ययोगकरणेन किं फलं भवेदित्यस्वरसादाह— सस्नेहमिति।

सस्नेहमार्द्रं कार्यम् ॥ ४६ ॥

स्नेहयुक्तद्रव्यं निवर्तकमिति यथोच्यते तथा पोषकद्रव्याधिक्यजात-पार्थिवद्रव्यं चूर्णीकृत्यावपेत्। तत्पाककरणेन निर्द्रवं यथा भवति तथा अग्नौ विपाच्य तत्पानलेपनाभ्यङ्गावगाहनात्तत्तज्जन्यपञ्चेन्द्रियविषयकप्रमाप्रतिबन्धकं निवर्तयितुं तदेव भेषजं भवतीति न वक्तव्यम्। तत्र प्रत्यक्षप्रमाणेन संशयभ्रमयोर्निवारणस्य शक्यत्वात्, इत्याशयं मनसि निधाय प्रत्यक्षप्रमाण-स्वरूपं विविच्यते—चाक्षुषेति।

[1] चाक्षुषप्रतीतीतरजन्यभिन्नंविषयकज्ञानप्रमा प्रमाणम् ॥ ४७ ॥

चक्षुरिन्द्रियविषयकज्ञानानुभवे सति तदभाववति तत्प्रकारकत्वं तज्ज्ञानस्य यथा विषयो भवति तथा चाक्षुषप्रतीतिजन्येतरत्वं तद्भिन्न-विषयकज्ञानं प्रमाणमिति तादृशप्रमाणेन भ्रमनिवृत्त्यां सत्यां तन्निवर्तकभेषजं विना तत्प्रमाणस्य ज्ञातुं शक्यत्वादित्यर्थः।

ननु कामिलारोगग्रस्तचक्षुषः अस्मिन् शङ्खे पीतविषयकज्ञाने जाते शङ्खः श्वेतः शङ्खत्वात् इत्यनुमानप्रमाणेन न पीतत्वभ्रमः निवर्तके

[1] चाक्षुषप्रतीतिजन्येतरभिन्नविषयकज्ञानं प्रमाणम्.

पुरोवर्तिनि पीतत्वानुभवस्य बलवत्त्वादिति तत्तद्दोषराहित्यमेव भ्रमसंशय-प्रतिबन्धकं भवेदित्यत आह—निर्दोषेति ।

निर्दोषचक्षुस्तत्र जनकम् ।। ४८ ।।

तद्वति तत्प्रकारकत्वं दोषरहितचक्षुषा गृह्यत इत्यर्थः ।

ननु भूयोदर्शनेन धूमाग्न्योर्व्याप्तिग्रहे सति धूलीपटलं दृष्ट्वा यत्र वह्निभ्रमो जायते तत्र पूर्वानुभवव्याप्तिग्रहस्य अदोषविषयकत्वात् बाह्यज्ञान-विषयकज्ञानगोचरसामग्रीविरहादेव भ्रमो जायते । तद्भ्रमस्य दोषजन्यत्वं न वक्तव्यमित्यस्वरसादाह—चक्षुरिति ।

चक्षुर्गृहीतलैङ्गिकज्ञानं प्रमाणम् ।। ४९ ।।

निर्दोषचक्षुषा भूयो भूयः धूमं दृष्ट्वा वह्निं पश्यति, यत्र धूमस्तत्राग्नि-रिति । तत्र दोषजनकत्वमदृष्टं न कारणम् । तदभावेऽपि भ्रम-दर्शनात् । बाह्येन्द्रियविषयज्ञानगोचरसामग्रीवैकल्यादेव भ्रमो जायते । तत्र रोगोत्पादकसामग्र्या अदृष्टत्वात् । भ्रमसंशयौ रोगोत्पादकसामग्रीजन्यौ भ्रमजनकसामग्रीजन्यत्वात् । तत्र विरसजन्यरोगोत्पादकसामग्र्या नियमेन दृष्टत्वात् । आगमप्रमाणेनापि भ्रमनिवृत्तेः भ्रमो निवर्त्य इत्याह—भ्रमेति ।

[1] भ्रमाभावजनकमाप्तवचनमागमः ।। ५० ।।

आप्तवचनजन्या प्रमा स्वदोषजन्यप्रमाप्रतिबन्धिका न भवति । आप्तवचनस्य भ्रमाभावप्रतीतिजनकत्वात् । तस्माद्रसविरसजन्यदोषहेतुना

---

[1] भ्रमाभावप्रतीतिकः,

इन्द्रियगोचरभ्रमविषयकज्ञानं प्रत्यक्षेण वा अनुमानेन प्रमाणेन वा आगम-प्रमाणेन वा दोषजन्यभ्रमज्ञानं निवर्तते । तत्र दोषाणामेव कारणत्व-प्रतिपादनादित्यर्थः ॥

ननु धूळीपटलं दृष्ट्वा धूमभ्रमो यत्र भवति तत्र दोष एव हि कारणम्, न तत्प्रमाजनकसामग्री तथा सति दोषोत्पन्नकाले दोषसामग्रीसत्वात् सर्वत्रापि भ्रम एव स्यादित्यत—आह दोषेति ।

## दोषजन्यज्ञानविषयको विपर्ययः ॥ ५१ ॥

विपर्ययज्ञानमात्रस्य दोषजन्यत्वात् पीतश्शङ्ख इति भ्रमस्थले श्वैत्यानु-मानं भ्रमनिवर्तकं भवतीत्यर्थ ननु शुक्तीन्द्रियविषयसंसर्गानन्तरं शुक्ति-विषयकज्ञाने जाते सति अहं शुक्तिविषयकज्ञानवानिति प्रतीतिर्भवति । तद-नन्तरं तत्रैव अन्यस्य भ्रमो जायते । अन्यपुंसः अतस्मिन् तदिति ज्ञानमुत्प-न्नमिति अन्येन वाक्ये प्रयुक्ते सति शुक्तिज्ञानानुभवाद्देवदत्तस्य च शब्द-ज्ञानानन्तरं ममोत्पन्नं शुक्तिज्ञानं प्रमाणं वा न वेति पूर्वानुभूतविषयिकाया देवदत्तस्य च शुक्तिज्ञानविषयकप्रतीतौ विकल्पो जायते । तद्भ्रमज्ञानं रस-विरसजन्यरोगहेतुजं न भवतीत्यस्वरसादाह—शब्देति ।

## [1] शब्दप्रयोगजनितज्ञानप्रतीतिविषयो विकल्पः ॥ ५२ ॥

यदिन्द्रियार्थगोचरयोग्यपुरोवर्तिद्रव्यं शुक्तित्वज्ञानविषयकज्ञानं भवितु-मर्हति समर्थप्रवर्तकत्वात् । अस्मिन्विषये तदुत्पन्नं ज्ञानं रजतविषयकं

[1] योग, I. 9.

संशयज्ञानग्राहकसामग्रीव्यतिरिक्तसामग्रीजन्यत्वात्, एतद्रजतविषयकज्ञानं अप्रमाणं असमर्थप्रवृत्तिजनकत्वात् इत्यनुमानविधया संशयनिवृत्तिः कर्तुं शक्यत्वात्। अत्र संशयभ्रमजनकत्सविरसद्रव्यादन्स्य अदृष्टत्वात् परप्रयुक्तवाक्यजन्यज्ञानं प्रमाविषयकं भवतीत्यर्थः ।

ननु इदं पुरोवर्तीन्द्रियविषयकं प्रमाप्रमागोचरोभयज्ञानग्राहकसामग्रीविषयकं शुक्तिरजतोभयविषयकज्ञानग्राहकसामग्रीजन्यत्वादित्यस्वरसादाह—सदिति ।

## सदसत्सम्बन्धविवेकविधिरहितज्ञानविषयकम् ।।

अस्मिन्विषये देवदत्तस्य ज्ञानं शुक्तिविषयकम् । यज्ञदत्तस्य ज्ञानं रजतविषयकम् । एतस्मिन्विषये सदसज्ज्ञानगोचरज्ञानमिदमिति निर्णेतुमशक्यात्वत् इदं ज्ञानं न रोगजन्यं, किं तु अन्यप्रयुक्तवाक्यजन्यं, तदन्यज्ञानस्य रोगजन्यत्वात् । ममोत्पन्नज्ञानस्य अरोगजन्यत्वादेव सदसद्विधिविरहितज्ञानविषयकः स एव संशयो भवतीत्यर्थः ।

इतः परं कैश्चिद्व्याख्यातं व्याचष्टे—सच्छब्दस्य पुरोवर्तिशुक्तिकाशकलं इन्द्रियविषयकमर्थो भवति । तत्पदार्थमुद्दिश्य हट्टपट्टणस्थितरजतसदृशचाकचक्यादिसामग्रीजातपुरोवर्तिज्ञानविषयकशुक्तौ अन्यस्य इदं रजतं इति ज्ञानं तदज्ञानविषयकं असद्विषयकं वा साध्यं तत्सम्बन्धविवेकज्ञानमित्युच्यते । तद्विरहितज्ञानस्य यः पदार्थो विषयो भवति स एवार्थो ज्ञानविषयक इत्यर्थः ।

ननु इतरपदार्थज्ञानरहितज्ञानविषयकं प्रमात्वमिति वक्तव्यम् । तथा सति अस्मिन् ज्ञानविषयकज्ञानकाले सर्वपदार्थसामग्र्यभावात् कथं पुरोवर्तिज्ञानं प्रमात्वेन ज्ञातुं शक्यत इत्यस्वरसादाह—अभावेति ।

[1]अभावप्रत्ययावलम्बना वृत्तिः निद्रा ।। ५४ ।।

नितरां पुरोवर्तिविषयकज्ञानगोचरज्ञानग्राहकसामग्रीकाले तदितरपदार्थ-ज्ञाने सति इतराभाववति प्रमाणत्वं ज्ञातुं शक्यत एवेत्यर्थः ।

सा प्रतीतिः तिक्तकटुरसवद्द्रव्यादनाद्भवति ।।

ननु सर्वपदार्थेन्द्रियसन्निकर्षसामग्र्यां सत्यां तत्तत्सामग्र्या तत्तदर्थो ग्रहीतुं शक्यते । तस्मात् सर्वपदार्थविषयकज्ञानग्राहकसामग्री यावज्ज्ञान-सामग्री शुक्तिविषयकज्ञानग्राहकसामग्री तावत्सामग्र्याः तदानीमसंभावितत्वात् काचित्सामग्री वक्तव्या । सा सामग्री तिक्तकटुरसद्रव्यादनसामग्री यस्यास्ति सा सामग्री सर्वपदार्थग्राहिका भवतीत्यर्थः ।

ननु सर्वपदार्थेतरत्वं शुक्तौ कथं सम्भवति सर्वपदार्थानां सान्निध्या-भावात् । उक्तरीत्या पुरोवर्तिनं ग्रहीतुं न शक्यत एवेत्यस्वरसादाह— प्रमाणेति ।

[2]प्रमाणेनानुभूतार्थासंप्रमोषः स्मृतिः ।। ५६ ।।

प्रमात्वेन पूर्वानुभूतार्थे पुरोवर्तिविषयकज्ञानग्राहककाले पदार्थत्वाव-च्छेदेन पूर्वानुभूतपदार्थे उपस्थिता भवन्तीत्यत्र न शङ्काविषया भवन्तीत्यर्थः । तावदर्थान् मनसि स्मृत्वा प्रमोषराहित्यं कर्तुं शक्यत एवेत्यर्थः । सात्त्विक-गुणोदयसामग्री मधुररसवद्द्रव्यादनसामग्री । तेन हेतुना मनसा पदार्थत्वाव-च्छेदेन सर्वपदार्थान्सङ्गृह्य स्मर्तुं शक्यत एवेत्याह—मधुरेति ।

---

[1] योग I, 10. [2] योग. I. 11.

**मधुररसपरिणामाज्जातसात्त्विकोदयात् सोऽयमिति व्यपदेशः ॥ ५७ ॥**

मधुररसवद्द्रव्यादनं यस्यास्ति तत्परिमाणवशात् सात्त्विकगुणोदयो भवति । तत्सात्त्विकगुणमहिम्ना सर्वपदार्थोपस्थितिं मनसा सङ्गृहीतुं शक्यत एवेत्यर्थः । तस्मात्सोऽयमिति व्यपदेशो भवतीति प्रतीयते ।

ननु शुद्धरसपरिणामेन सात्त्विकगुणोदयात् इन्द्रियार्थसंयोगे सति तद्वति तत्प्रकारकतया तन्निष्ठप्रामाण्यं ग्रहीतुं शक्यते । विरसान्नादनेन रोगी भवन् अतद्वति तत्प्रामाण्यं गृह्णाति, तत्र दोषसामग्र्या बलवत्त्वात् इति रसविरसद्रव्यादनं प्रामाण्याप्रमाण्यग्राहकसामग्री इत्युक्ते इदानीं योगाभ्यासवशात्प्रामाण्यं ग्रहीतुं शक्यत एवेत्यस्वरसादाह—इतरेति ।

**[1] इतरेन्द्रिययोगविरामोऽन्तर्नियमितोऽभ्यासः ॥ ५८ ॥**

स्वस्य इन्द्रियार्थसन्निकर्षे सति तज्ज्ञानविषयकज्ञाननिष्ठाप्रामाण्यज्ञानप्रतिबन्धकाः इतरपदार्थारोपणसामग्रीसंपादनविषयार्थाः इतरशब्देन प्रतिपादिताः । स्वेन्द्रियविषयज्ञानग्राहकसामग्र्यां सत्यां तद्विषयकज्ञानं तद्विषयकज्ञानाभावश्च । एवमितरेन्द्रिययोगविरामः । तद्विरामः अन्तरिन्द्रियेण मनसा अन्तरात्मनि अभ्यासवशात् नियमितः तस्य प्रत्ययेन नियमेन पुरोवर्तिनि प्रामाण्यं गृह्यत एवेत्यर्थः ॥

इदंत्वेन ज्ञातं वस्तु इतरभिन्नं भासते । ममोत्पन्नं ज्ञानं संशयभ्रमान्यविषयकं समर्थप्रवृत्तिजनकत्वात् , इत्यनुमानविधया प्रामाण्ये गृहीते विरसद्रव्यादनस्य अन्तस्स्थितदोषजन्यरोगस्य बलवत्त्वात् पुरोवर्तिनि संशयनिवृत्तिः कथं स्यादित्यस्वरसादाह— विषयेति ।

[1] योग. I. 13

[1] विषयविरागतः प्रवाहोत्साहात् पुनःपुनरभिनिवेशनं वैराग्यम् ॥ ५९ ॥

अस्यार्थः—स्वचक्षुरिन्द्रियगोचरविषयकज्ञानस्याविषयो रजतम् । अस्मिन् भ्रान्तिराहित्यं विरागत्वं, अन्तश्चित्तप्रवाहे शुक्तिरियमिति धारावाहिकज्ञानम् । तद्भयानाहितज्ञाने उत्साहः प्रीतिः, पुनः पुनरभिनिवेशनं पौनःपुन्यं भृशार्थो वा । इयं शुक्तिः नेदं रजतमिति (संशय) क्रियादिराहित्यं विरागसम्बन्धि वैराग्यम् । पुरोवर्तिविषयः शुक्तिर्भवितुमर्हति रजतविषयकज्ञानाविषयकत्वे सति सविषयकत्वात् । मनसि उत्पन्नशुक्तिविषयकज्ञानस्य अप्रामाण्याभावत्वं सिध्यतीत्यर्थः ।

ननु धारावाहिकज्ञानानां गृहीतग्राहित्वामपि पुरोवर्तिनीदन्त्वेन रजतत्वेन अप्रमाजनकवाक्यज्ञानेन शुक्तौ संशयभ्रमज्ञानविषयकं स्वत एव तद्भवतीत्यस्वरसादाह—दृष्टेति ।

[2] दृष्टानुश्राविक[3]विषयतृष्णावशीकरणसंज्ञास्तथा ॥ ६० ॥

पुरोवर्तिनीदन्त्वेन ज्ञानोत्पत्तिं विना इदं शुक्तिविषयकं शुक्तिविषयकज्ञानग्राहकसामग्रीजन्यत्वात् इत्यनुमानेन पुरोवर्तिशुक्तिकाशकले विगततृष्णा यस्यास्सापि विगततृष्णा, तस्या वशीकरणसंज्ञकं विषयो भवतीत्यर्थः ।

---

[1] विषयदोषविकारकान्तः प्रवाहोत्साहपुनःपुनरभिनिवेशनं वैराग्यम्—A. विषयदोषविकारगतः प्रवाहोत्साहासनः पुनःपुनरभिनिवेशनं वैराग्यम्—B.
[2] योगः—I. 1, 15. [3] 'विषयवितृष्णा' इति पाठान्तरम्.

ननु पुरोवर्तिनि शुक्तौ इन्द्रियार्थसकलसामग्र्यां सत्यां तद्वति तत्प्रकारकानुभवे सति सोऽनुभवो न भ्रमसंशयज्ञानप्रतिबन्धकः भ्रमजनक-भ्रमगोचरसामग्रीसत्वात् । तथा हि—भवदुत्पन्नं ज्ञानं न शुक्तिविषयकं, किन्तु तद्रजतविषयकं हट्टपट्टणस्थितरजतनिष्ठचाकचक्यादिरूपगुणवत्त्वस्य समानधर्मत्वात्, तस्मादित्यनुमानप्रमाणेन ममोत्पन्नं ज्ञानं भ्रमविषयकं इत्यनु-मानप्रमाणेनापि तद्वति तत्प्रकारकत्वस्य ज्ञातुमशक्यत्वात् । प्रत्यक्षजन्य-प्रमाणज्ञानस्य अनुमितिजन्यप्रमाप्रतिबन्धकत्वात् । तस्मादुभयत्रापि प्रामाण्या-ग्रहादित्यस्वरसादाह—ताभ्यामिति ।

## ताभ्यां चित्तवृत्तिनिरोधः ॥ ६१ ॥

चित्ते मनसि वर्तत इति चित्तवृत्तिः । ताभ्यां प्रमाणाभ्यां तद्वति तत्प्रकारकत्वाग्रहः रसविरसजन्यरोगहेतुकत्वादित्यर्थः ॥

ननु अयं शुद्धरसद्रव्यादनवान् भवति । सोऽप्रामाण्याभावज्ञानवान् भवति । एवमाकारेण उभयोर्व्याप्तिग्रहे सति अप्रमाज्ञानं वक्तुमशक्यम् । तथा हि—प्रमाप्रतीकारकसामग्री शुद्धरसवद्द्रव्यादनसामग्रीति वक्तुं न शक्यते । पुरोवर्तिनि तद्वति तत्प्रकारकज्ञानानन्तरं तस्मिन्विषये अन्यस्य दोषवशाद्भ्रमो जायते । तेन हेतुना वाक्यप्रयोगो जातः । एतदुत्पन्नज्ञानं अप्रमाणविषयकमिति वाक्यश्रवणानन्तरं एतस्यापि प्रामाण्यविषयज्ञाने सति संशयो भवति । विरसादनमपि अप्रामाण्यप्रतिपादकसामग्री भवति, इत्याशयं मनसि निधाय भ्रमोत्पादकसामग्र्यन्तरं प्रतिपादयति—यावदिति ।

**यावद्धातुसिरादिसञ्चरत्प्राणापानव्यानोदान[1]समानानिल-निरोधनं भ्रमहेतुकम् ॥ ६२ ॥**

प्राणादिपञ्चकानां निरोधनं यत्र दृश्यते तत्र रोगोत्पत्तिर्भवति । तत्पवननिरोधनेन आशया दुष्टा भवन्ति । धातवोऽपि दुष्टा भवन्ति । तज्जन्यकाचकामिलादिवशात् संशयविभ्रमौ भवत इत्यर्थः ।

ननु सर्वत्रापि संशयभ्रमजनकसामग्र्यां प्रामाण्यज्ञानोच्छेदस्स्यात् इत्यस्वरसादाह—आसन्नेति ।

**आसन्नविषयकज्ञानहेतुकान्तरात्माऽन्तःकरणयोगाभ्यासवशात् पवननिरोधनादरोगी स चिरायुर्भवति ॥ ६३ ॥**

ननु घटेन्द्रियसन्निकर्षानन्तरं तज्ज्ञानग्राहकसामग्र्यां सत्यां भ्रमज्ञानानुभवो भवेत् । तन्निष्ठप्रामाण्यमपि गृह्यतां नाम, इतरेन्द्रियविषयेषु तज्ज्ञानविषयकप्रामाण्यं कथं गृह्यते? पञ्चेन्द्रियविषयज्ञानेषु विरागो नाम विशेषेण रागो विराग इत्यर्थः । तस्मात्पञ्चेन्द्रियविषयज्ञानेषु विशेषेण रागो भवतीत्यर्थः । इन्द्रियार्थसन्निकर्षानन्तरं आत्ममनस्संयोगसकलसामग्र्यां सत्यां यावद्विषयकज्ञानमुत्पद्यते, तद्धेतुकं प्रामाण्यं अप्रामाण्यग्राहकसामग्रीव्यतिरिक्तसामग्रीजन्यत्वात्, मदुत्पन्नघटज्ञानविषयकप्रामाण्यवत् आत्मा जीवः । अन्तःकरणं चित्तम् । तस्य जीवात्मना योगः । तद्वशात् तत्कारणवशात् तद्विषयकज्ञानगोचरज्ञाननिष्ठप्रामाण्यप्रतिबन्धकं भ्रमजनकसामग्री पवननिरोधनं अरोगकारणं अप्रामाण्याभावसामग्रीजन्यत्वात् इत्यर्थः ।

---

[1] समानानिलेभ्यो निरोधनो योगः —A & B.

ननु विषयपञ्चकेषु विरागो नाम विशेषेण रागो विरागः। शास्त्रस्य विषयानुभवमात्रफलं लभ्यते। तेन मोक्षविरोधो भवति। प्रत्युत स व्याधिकारको भवति। एतेन चिरायुष्ट्वं कथं प्राप्यते? इत्यस्वरसादाह—तस्मादिति।

## तस्मात्प्राणादिपञ्चकफलीभूतं कार्यम् ॥६४॥

अस्यार्थः—शरीरं दोषधातुमलाशयात्मकम्, प्राणादिपञ्चकोपजीव्यप्रकृत्याधारकत्वात्, यन्नैवं तन्नैवं, यथा घटः। चेष्टाश्रयं शरीरमिति चेष्टाश्रयत्वं शरीरावच्छेदकम्। चेष्टा तु सा यद्धिताहितप्राप्तिपरिहारार्थं स्पन्दनरूपा। तस्मात् शरीरं प्राणादिपञ्चकं फलीभूतं भवति। सा चेष्टाश्रया प्रकृतिरिति। इदं सर्वं श्रुत्या प्रतिपादितम्। सा श्रुतिः—"प्राणापानव्यानोदानसमानसप्राणा इत्येतवर्णात्मिका सा त्रिपदा व्याहृतित्रयात्मिका"। तत्र श्रुतिवचनं प्रमाणम्—"भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। एतैर्महच्छिरो भवति। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते।" इति तस्मात् प्राणादिपञ्चकं संरक्षणीयं रोगाभावकार्यहेतुकं मोक्षहेतुः कथं भवेत्। यस्य प्राणादिपञ्चकं स्ववशं भवति, तस्य चिरायुष्ट्वमपि लभ्यते। तस्मात्प्राणादिपञ्चकं फलीभूतं कार्यमित्युक्तम्। तस्माच्छुद्धरसवद्द्रव्यादनं शरीरसंरक्षणं करोति, विरसवद्द्रव्यादनं प्राणघातं करोतीति पर्यवसितार्थः।

ननु प्राणादिपञ्चकस्य फलीभूतं नाम—प्राणवायुः देहचलनकर्म विधत्ते। स पवनः अविकृतस्सन् पादाभ्यां गतागतत्वं च कर्म निमेषोन्मेषादिकं च आपादमस्तकं कर्म कुर्वन् चलनात्मकं कर्म कुरुते। अपानवायोश्च प्रयोजनमस्ति—मेढ्रगुदप्रदेशेषु स्थितस्सन् स्वयमविकृतस्सन्

तथा विक्रियते । व्यानानिलस्य कार्यं च—पाचकपित्तेन स्वयमपि पञ्चधा भूत्वा पाचकपित्तमपि पञ्चधा कुर्वन् अन्नं गृह्णाति, पचति, विवेशयति। सारकिट्टतया भुक्तान्नं विभज्य मुञ्चति । आशयप्रवेशं करोति । स सर्वशरीरं व्याप्य तिष्ठति । उदानवायोश्च प्रयोजनं—नासादिपर्यन्तं सञ्चरन् वाक्प्रवृत्तिं करोति । बलवर्णयोश्च वृद्धिं विधत्ते । समानवायोश्च प्रयोजनं—जठरानिलस्य समीपे स्थितस्सन् भुक्तान्नरसं पक्वान्नं कार्यं प्रवेशयन् प्रतिमुञ्चति । एवं पञ्चवायूनां फलम् । तेषां मोक्षफलप्रदानस्य अनावश्यकत्वादित्यस्वरसादाह—अदृष्टेति ।

अदृष्टेनेन्द्रियेणात्मा मनसा संयुज्यते ।। ६५ ।।

अदृष्टः ईश्वरः, तेन प्रेरितस्सन् अर्थसंसर्गगोचरेन्द्रियेण तद्विषयकगोचरफलं विज्ञाय औपाधिकहेयोपादेयविधिफलं विज्ञाय मन इतरपदार्थविषयकविज्ञानं विसृज्य आत्मज्ञानगोचरज्ञानफलं आमुष्मिकफलं च जीवात्मनो विधत्ते । एवं मनः आत्मसंयोगजन्याधिकफलं जीवस्य प्रयच्छतीत्यर्थः ।

ननु आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, इन्द्रियाणां प्राप्यकारित्वनियमात् । तत आत्मा इन्द्रियविषयकज्ञानगोचरफलं भुङ्क्ते । न तत्फलमामुष्मिकं विषयसंयोगजन्यज्ञानफलस्य बलवत्त्वात्, इत्यस्वरसादाह—सर्वेति ।

सर्वधातवः सत्त्ववशं गताः ।। ६६ ।।

मनोनिरोधनेन श्वासोच्छ्वासनिरोधनेन च मुखमार्गेण बहिः पवननिरोधनेन च स्वोदरपूरणकर्मकरणेन च पृष्ठमार्गेणापि बहिः-पवनाप-

द्वारणम् । तत्पवनं नाभिप्रदेशेऽपि कृतकर्मकरणान्तरम् पवनेन कुक्षिस्थितसिरामार्गस्यानुबन्धनं निश्वासोच्छ्वासानां कण्ठप्रदेशनिरोधनं आपादमस्तकं सञ्चरतीत्यर्थः ।

ननु बाह्येन्द्रियविषयज्ञानगोचरज्ञाने वैराग्यं मनोविषयकं आत्मविषयज्ञानहेतुकं भवतीति तत्र बाह्येन्द्रियविषयज्ञाननिष्ठभ्रमाभावानुभवग्राहकसामग्र्येव भ्रमोत्पादकसामग्रीव्यतिरिक्तसामग्रीजन्येति वक्तव्यम् । तथाहि रोगाभावकार्यं पञ्चेन्द्रियनिरोधनजन्ययोगाभ्यासपवनवशात् भवति । तथा सति धातवो दृढतरास्सन्तः ? रोगाभावकार्यकारणवशात श्रुतिप्रतिपादितफलं लभ्यत इत्यस्वारसादाह—यत्कालेति ।

यत्काले यद्योगे [1] यथाविधि फलप्रदाः प्रजाः प्रजायन्ते ॥ ६७ ॥

तत्संयोगजातधातवः प्रवर्तकाः ॥ ६८ ॥

(यां कामयेत दुहितरं प्रिया स्यदिति ।
[2]तां निष्ठाया दद्यात् । प्रियैव भवति ।
स न तु पुनरागच्छति । )

अत्र तु अरोगत्वसम्पादनवशात् शतायुः पुरुषः शतेन्द्रियत्वं च लभते ।

ननु मातापित्रोः दौहित्रजननं मोक्षकरम् । तयोर्धातुदार्ढ्यकारणस्य आवश्यकत्वेन रोगाभावकार्यकरणद्वारा मोक्षप्राप्तिर्भवतीति दुहितृशिशुत्साक्षात्सामग्री स्त्रीप्रयुक्तप्रक्तापिक्रयसामग्र्या भवतीत्यस्वरसादाह—स्त्रीपुंसाविति ।

---

[1] यथाविधि फलप्रदानुप्रजाः A & B [2] कुण्डलान्तर्गतसूत्राणि A.B. कोशयोरनैव पठितानि । व्याख्याना तु पृथक्कृत्योपरत्र 132 पुटे व्याचष्टे ।

**स्त्रीपुंसावात्मभागौ भिन्नमूर्तेस्सिसृक्षया ॥ ६९॥**

स्त्रीपुंसोर्मध्ये पुत्रोत्पादकहेतुभूतरेतस आधिक्यं पुत्रजननहेतुकम् । पुत्रिकोत्पादनहेतुभूतं रक्ताधिक्यं पुत्रिकाजननहेतुकम् । स्वस्माद्भिन्नमूर्तेरेव पुत्रादिरिति स्मृतौ । मोक्षार्थिनः प्रवृत्तिः पुत्रिकाजननसामग्रीसंपादनपूर्विका दानयोग्यकन्याजननसामग्र्या एव हेतुत्वात् । यन्नैवं तन्नैवं यथा घटः । पुत्रिकाजननसामग्री सम्पन्नपुत्रिकाजननसामग्री स्वसुखहेतुकमिथुनानुभव-कार्योपकार्यकत्वात् । प्रजाजननसामग्री लौकिकसामग्रीसंपादनं विना कथं लभ्यत इत्यस्वरसादाह—प्रकृतीति ।

**प्रकृतिपुरुषौ पितराविति स्मृतौ ॥ ७० ॥**

तथा सति गुणविशिष्टपुरुषत्वात् मायाशबलित ईश्वरः आमुष्मिकफलं दत्त इत्यस्वरसादाह—वृत्तीति ।

**[1] वृत्तिव्यवहितस्वरूपनिष्ठमनउत्साहात्पुनःपुनरभिनिवेशनं योगाभ्यासः ॥ ७१ ॥**

वृत्तिव्यवहितपुरुषः औपाधिकसंसर्गजातः प्रजाजनकसंसर्गहेतु-भूतत्वात् । स्वभावतः तस्य गुणप्रोतद्रव्यत्वादेव वृत्तिव्यवहितत्वं भवति । तदेव तत्स्वरूपम् । तस्मिन् निहितं मनः । तस्य मनस उत्साहः प्रीतिः । प्रीतेरेव हृदयेऽभिनिवेशनम् । इतरपदार्थेषु विरागस्सन् य आत्मानं ध्यायति स तं ध्यातारं संसारसागरनिमग्नं तारयति । तदेवोत्तमफलम् । तदर्थमेवायुर्वेदप्रवृत्तेः प्रयोजनम् । इदमेव बहुपुरुषार्थप्रदानहेतुकं भवती-त्यर्थः यस्य मनस उत्साहो जायते तस्य मनसः पुनरभिनिवेशनं तृप्तिकारकम् । सर्वदा अभ्यासपाटववशात् सर्वस्मिन्विषये अध्यात्मनिष्ठा मनः प्रसाद्य मोक्षप्रदा भवति ।

---

[1] वृत्तिर्व्यवहित — A & B.

**आदरातिशयोद्भूतभूयोभूयोनिरीक्षायोगादिषु भूमिः ॥ ७२ ॥**

तत्र भूयो निरीक्षणात् स्वरूपं च प्रतिपद्यते । परमानन्दहेतुकत्वात् इह लोके परमसुखप्रदानत्वात् भूयोनिरीक्षणयोगादिषु भूमिः अपरिमितानन्दस्य भूरित्यर्थः ।

ननु आत्मविषये यावद्विषयनाशे सति तन्नाशादित्यस्वरसादाह—तामिति ।

**तां निष्ठाय दद्यात् ॥ ७३ ॥**

सालङ्काररूपादिविशिष्टां कन्यां यो दद्यात् सत्कुलप्रसूताय श्रोत्रियाय. कन्यादाने यः प्रवर्तते तस्य सुखं मोक्षफलं लभ्यते, ऐहिकसुखमपि भुङ्क्त इत्यर्थः ।

कन्यादानफलमाह प्रियेति ।

**प्रियैव भवति ॥ ७४ ॥**

कन्यादानफलप्रदानस्य प्रतिभूः ईश्वरो भवतीत्यर्थः । ईश्वरप्रीत्यर्थं यः कन्यादानं करोति तस्य ऐहिकफलमामुष्मिकफलं च दीयत इत्यर्थः ।

ननु कन्याजननमेव कामयन् स्वकर्मक्लेशचोदितस्सन् ईश्वरप्रीत्यर्थं दानं करोति । तेन ईश्वरस्सुप्रीतो भूत्वा स्वयमेव प्रतिभूस्सन् फलं ददातीत्युक्तम् । तत्र कन्यादानकर्मणः ईश्वरप्रीतिरेव फलं भवति । तेनापि तस्य किं फलमासीदित्यस्वरसादाह—नेहेति ।

**नेह पुनरागच्छति ॥ ७५ ॥**

यत्तस्य इहलोकसुखदुःखादिकं तदीश्वरो नाददीत, ईश्वरकैवल्यं पुनराददीत । इहलोकं प्रति स पुनर्नागच्छति गर्भदुःखादिकं न भुङ्क्ते ।

तस्माद्योगाभ्यासवशात् सप्तधातुमयं शरीरमिति शरीरस्य ऐहिकफलं मोक्षफलं च तयोर्वैराग्यमेव उभयफलं विधत्त इत्याह— ऐहिकेति ।

**ऐहिकामुष्मिकविषयानुभाव्यभोगैकनाश्यमिति ज्ञानं वैराग्यम् ॥ ७६ ॥**

**अविषयानन्दात्मकनैरन्तर्यज्ञानानन्दहेतुकं वैराग्यम् ॥ ७७ ॥**

ऐहिकामुष्मिकफलजन्येतरपदार्थविषयकफलान्युद्दिश्य आत्मा अनुभवविषयकमनोजन्यत्वात् तद्वैराग्यनैरन्तर्यज्ञानानन्दजन्यं विषयानन्दानुभवं विहाय आत्मज्ञानानुभवः परमपुरुषार्थ इति इतरविषयकज्ञानानुभवं निरस्यति । ऐहिकामुष्मिकफले नाश्ये इति ज्ञानं वैराग्यम् । ऐहिकामुष्मिकफलं विषयानुभाव्यं तत्तुच्छं कर्म प्रयासादनुभवे सति तन्नाशात् । तस्मादविकफलदं वैराग्यमेव हि मोक्षफलहेतुकं भवतीत्यर्थः ।

ननु परमात्मनोऽतीन्द्रियत्वेन इन्द्रियार्थसन्निकर्षाभावात् आत्मविषयकज्ञानाभावात् तज्ज्ञानविषयकानुभवानन्दस्सुतरामप्रसिद्ध एव, किन्तु इन्द्रियार्थसन्निकर्षाद्यादृशार्थोपलब्धिः सैव सुखविषयकज्ञानानुभवोपलब्धिश्चेत् तज्ज्ञानमेव आनन्दानुभवहेतुकम् । तदेव कार्यं यावद्धात्विन्द्रियदार्ढ्यापादकशुद्धरसास्वादनजन्यज्ञानं आनन्दहेतुकमिति प्रमाणत्रयोपलब्धिरित्यत आह— तस्मादिति ।

**तस्माद्धातवस्तद्योगभूम्यावष्टम्भाः ॥ ७८ ॥**

इन्द्रियार्थसन्निकर्षजन्यज्ञानं आनन्दहेतुकमिति उक्तम् । तस्मादिति—तत्कारणवशात् धातवः पञ्चेन्द्रियाणि तद्योगकार्यकारकाणीत्यर्थः ।

ननु भोगायतनं शरीरमिति प्रसिद्धम् । तथा सति विषयमात्रफलोद्देश्यकार्यकारणविषयनाश्यैकनाश्यं इति तन्निषेद्धुमशक्यम् । यावद्विषयानुभवकाल एव भोगकाल इत्याशयं मनसि निधायाह—भोगेति ।

भोगायतनं शरीरम् ॥ ७९ ॥

सर्वार्थविषयकभोग्ययोग्यानां द्रव्याणां आयतनम् । सुखदुःखानुभवो भोग इति दुःखस्यापि भोगयोग्यविषयकामनात्मकद्रव्योपलम्भकत्वात् । तस्माद्भोगायतनं शरीरमिति । शरीरत्वस्य भोगायतनत्वावच्छेदकत्वादिति वक्तुं शक्यत्वात् ।

ननु सुखविषयकप्रवृत्तिकमनोविषयकसुखानुभवज्ञानविषयकप्रवृत्तिमुद्दिश्य प्रवृत्तेस्तद्विषयानुभवजानन्दः मत्कामनाविषयकः दुःखविषयकज्ञानस्य मत्कामनाविषयकत्वाभावात् । तदर्थमेव भोगोपकार्यजनकसंपादनसामग्र्यैव फलितार्थत्वात् ।

ननु सुखस्यापि दुःखानुषङ्गत्वात् सुखमपि दुःखमेव । विषयदुःखानुभवस्तु दुःखजनककर्मव्यतिरिक्तकर्मणा साध्यः । तस्मादुक्तरीत्या आनन्दहेतुकं बाह्येन्द्रियविषयोपलब्धिज्ञानानुभवकार्यं न भवेदित्यस्वरसादाह—तदिति ।

[1] तत्परमपुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ ८० ॥

तदेव परमपुरुषार्थः, यन्नित्यद्रव्यजन्यज्ञानविषयकज्ञानं आनन्दहेतुकं भवति, सा ख्यातिः सच्चिदानन्दात्मिका । आनन्दविषयकज्ञानं यस्यास्ति स एव जीवन्मुक्त इत्यभिधीयते । स सर्वदाऽऽनन्दानुभववान् भवति । मत्प्रवृत्तिस्तु दुःखव्यतिरिक्ता, कामनाप्रयुक्तत्वात्, सुखात्मिका कामना

[1] तत्परं पुरुष. योग I, 16,

परमपुरुषार्थिका । गुणवैतृष्ण्यं नाम मधुररसादनप्रयुक्तपुरुषविषयकज्ञानजन्य-ज्ञानं आनन्दहेतुकमिति विवक्षितमित्यर्थः । पुरुषख्यातिः परमपुरुषज्ञान-विषयकख्यातिः । विषयज्ञानानन्दहेतुकवैराग्यं बाह्येन्द्रियविषयकज्ञानं परम-पुरुषगोचरं न भवति, इन्द्रियार्थसन्निकर्षाभावात्, किं तु अन्तरिन्द्रिय गोचरज्ञानविषयकं यावद्विषयकज्ञानं यावदनुभवहेतुकं भवेदित्यस्वरसादाह— यावदिति ।

**[1] यावदिन्द्रियविषयज्ञानानां यदार्थोल्लेखिभावना क्रियते स वितर्कः ॥ ८१ ॥**

तर्को विचार इत्यर्थः । यावदिन्द्रियविषयज्ञानानां यावद्विषयानुभव आनन्दहेतुक इति विचारः, तर्कसहकृतज्ञानकार्यकर्मेत्यर्थः । यदार्थोल्लेखि-भावनाकमस्तर्कज्ञानेन भाव्यः तद्भावनायाः यथायथं यावदिन्द्रियविषकज्ञानानां यावद्विषयानुभव आनन्दहेतुको भवतीत्यर्थः ।

ननु यावद्विषयानुभवज्ञानं यावदानन्दहेतुकम् परमात्मानुभवज्ञानं परमानन्दहेतुकं, शरीरस्य उभयोरप्यायतनत्वात् । तत्र विषयानुभवस्य विषयैकनाश्यत्वेन परमात्मानुभवस्य परमात्मविषयकत्वेन अयं नित्यानन्दानु-भव इत्याशयं मनसि निधायाह – पूर्वेति ।

**पूर्वापरानुसन्धानशब्दार्थोल्लेखभावना निर्विकल्पः ॥ ८२ ॥**

बाह्येन्द्रियज्ञानानुभववान् सवितर्कः । सवितर्को नाम सविकल्पः । सविकल्पज्ञानानुसन्धानमेव परमात्मानुसन्धानम् । तदनिर्वाच्यज्ञानविषयकम् । शब्दार्थोल्लेखभावनाशून्यत्वम् । तदेव निर्विकल्पकर्म । देवदत्तो जीवन्मुक्तो

[1] योग. 1. 32.

भवितुमर्हति परमात्मविषयकज्ञानानुभवात् । नित्यनैमित्तिककर्मद्वारा परमात्मानुभवज्ञानमुपलभ्यते । तस्यापि शरीरदार्ढ्यकरणहेतुत्वेन तदेव आरोग्यकार्यकरणमावश्यकं भवति । अत एव भोगायतनं शरीरमिति यथार्थं भवतीत्यर्थः । तत्र स्मृतिवचनं—

नित्यनैमित्तिकं कर्म दुरितक्षयकारकम् ।
ज्ञानं च विमलीकुर्वन् अभ्यासेन तु वेदवित् ।
अभ्यासपक्वविज्ञानः कैवल्यं लभते नरः ।

तत्र सूत्रस्थानवचनं –

[1]अन्नपानं विषाद्रक्षेत् विशेषेण महीपतेः ।
योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः ।

इति । तस्माच्छरीरदार्ढ्यकरणहेतुकं भवतीत्यर्थः ॥

ननु परमात्मा मनोविषयको न भवति, निर्गुणत्वात् निरवयवद्रव्यत्वात् निष्कायकत्वात् कालवत्, मनस आत्मगोचरत्वस्य वक्तुमशक्यत्वादित्यस्वरसादाह—अन्तरिति ।

**[2]अन्तःकरणधर्मावच्छिन्नविषयावलम्बितदेशकालभावनायोगः सविचारः ॥ ८३ ॥**

परमात्मा विचारणीयः अत एव सवितर्कः तर्कसहकृतप्रमाणेन ज्ञातव्यः । तथाहि—अङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत्, इति तर्कसहकृतानुमानेन ज्ञातव्यः । अन्तःकरणधर्मावच्छिन्नविषयावलम्बितत्वं मनोविषयकधर्मत्वं सर्वदा आत्मानुभवत्वात् । तस्य अवच्छेदकं शरीरं सत्

[1] अष्टाङ्ग. सूत्र VII. 2.

[2] अन्तःकरणविषयावलम्बितदेशकालधर्मावच्छिन्नभावना सविचारः A & B.

विषयानुभवार्हं भवति । तस्यापि शरीरदार्ढ्यकरणमावश्यकमित्यर्थः । मनःआत्मानं विषयीकरोति । तस्य स्वरूपमानन्दस्वरूपम् । एवं गुणविशिष्ट-परमात्मानं विषयीकृत्य अवलम्बते । एवं विचाररूपतर्कस्य रोगाभावकार्य-जनकप्रयोजनप्रयतनं फलं भवति । तस्माद्देशकालभावना योगस्य विचार इत्युक्तम् । देशस्तु द्रव्योपाधिना त्रिधा भवति । कश्चिद्देशविशेषजन्यद्रव्या-दनेन तद्देशीयानां वाताधिक्यं भवति । कश्चिद्देशविशेषजातद्रव्यादनात्पित्त-प्रकोपो भवति । कश्चिद्देशविशेषजन्यद्रव्यादनेन कफप्रकोपो भवति । तत्तद्रोगनिवर्तकद्रव्याणां तत्तद्देशस्थितानां शरीरदार्ढ्यकरणं विचारयेदित्यर्थः । तत्तत्कालद्रव्यादनमपि पित्तरोगनिवर्तकमिति तत्तत्प्रयोजनानि विचारहेतुकानि संपाद्य कालं प्रापयेदित्यर्थः ॥

ननु मनस आत्मप्रकाशार्थं आत्मव्यतिरिक्तसर्वपदार्थज्ञानस्यावश्य-कत्वात् तर्कसहकृतज्ञानमावश्यकं भवति । स तर्क आत्मज्ञानार्थं परंपरया हेतुर्भवति । सविचार इत्युक्तम् । तर्हि निर्विचारोऽपि मोक्षप्रपादको भवतीत्युच्यमाने सति विचाराभावो निर्विचारः कथं भवतीत्यस्वरसादाह —अस्मिन्निति ।

**अस्मिन्देशकालधर्मावच्छिन्नधर्ममात्रावभासनं निर्विचारः ॥ ८४ ॥**

अस्मिन् ब्रह्मणि देशतः कालतः वस्तुतश्च परिच्छेदराहित्यं तस्मिन्नारोपितधर्ममात्रं इदं भासते । तत्र इतरपदार्थविषयकज्ञानराहित्यस्य उपस्थितत्वात्, तत्रेतरपदार्थविचाराभावो निर्विचार इत्यर्थः ॥

ननु सर्वविषयज्ञाने जाते सति आनन्दो भवति । एतदभावो निर्विचारः, तर्ह्यानन्दानुभवोपलब्धिः कथं स्यादित्यस्वरसदाह—सुखेति ।

**[1] सुखप्रकाशोद्रेकाच्चिच्छक्तिविषयकस्स आनन्दः ॥ ८५ ॥ [2]**

सुखानन्दानुभवार्थोऽपि यत्सुखे सति प्रकाश्यते स एवानन्दो भवति। निर्विचारभाव्यमनोद्रेकस्य हेतुर्भवति। तस्माच्चिच्छक्तिविषयकः चित्स्वरूपज्ञानशक्तिविषयकः आनन्दो भवतीत्यर्थः।

ननु परब्रह्मणः निर्गुणत्वेऽपि स एव गुणवान्भवति। निर्गुणत्वं नाम निरवयवत्वस्य अवच्छेदकत्वम्। आत्मनोऽपि निर्गुणत्वात मनसस्त द्गोचरत्वं वक्तुं न शक्यते। निर्गुणत्वस्य निरवयवद्रव्यत्वात्, मनसोऽपि निर्गुणत्वात्, इन्द्रियत्वेन आत्मविषयकज्ञानग्राहकत्वं वक्तुमशक्यत्वात्, इति आत्मनः अगोचरत्वादेव इन्द्रियाणामपि तत्प्राप्यत्वासंभवेन मनसोऽप्यप्रयोजकत्वापत्तिरित्यत आह—अस्मिन्निति।

**अस्मिन्ग्राह्यसत्यसत्तामात्रविषयकत्वेन समाधिः सा स्मृता ॥ ८६ ॥**

अस्मिन्ब्रह्मणि गृहीतुं योग्यो जीवः तस्य परमात्मविषयकत्वेन ब्रह्मसत्ता स्वयं जगत्स्वरूपकारणत्वेन प्रकाश्यत इति सत्यं ब्रह्म मनसोऽप्यविषयी भवति। गुणरहितब्रह्मणः मनोग्राह्यत्वस्य वक्तुमशक्यत्वात्। सचेति सत्तामात्रविषयकं ज्ञानमुपलभ्यते। आत्मना सह मनस्समाधीयत इति समाधिः सा स्मृता।

---

[1] सुखप्रकाशमानभाव्यमनोद्रेका—A & B. [2] एतदुपरि 'रजस्तमोवैशारद्यान्तःकरणसत्त्वमनोद्रेकात्सानन्दः' इत्याधिकं सूत्रं A B. कांशयोः दृश्यते. तच्च न व्याख्यातं भाष्यकृता.

ननु निर्गुणब्रह्मणः जगत्कारकत्वं वक्तुमयोग्यमिति चेत्, न, निर्गुणब्रह्मणः करचरणाद्यवयवाभावात् न जगत्स्वरूपत्वं वक्तुं शक्यते। तथा श्रुतौ तत्स्वरूपं प्रतिपाद्यते—

एतं मनोमयमात्मानमुपसङ्क्रामति।

एतं विज्ञानमयमात्मानमुपसङ्क्रामति।

एतच्छ्रुत्यनुसारेण जगत्स्वरूपत्वं ब्रह्मणः प्रतिपाद्यते, परब्रह्मणः निर्गुणत्वं प्रतिपाद्यते। शुद्धनिर्गुणपक्षे योगिनामप्यगोचरत्वेन समाधिरेव न स्यात्। किं च मनसः आत्मगोचरत्वानुपपत्तिश्च। जगतोऽनित्यत्वेन तस्याप्यनित्यत्वप्रसङ्गात्, इति नाशङ्कनीयम्, जीवात्मनो मायाशबलितत्वेन तथा प्रतीतेः। अतस्तु मायानिवृत्तिपर्यन्तं वस्तुभेदोऽस्ति। सर्वथा यस्य समाधिना माया न निवर्तते तावत्पर्यन्तं वस्तुभेदो नास्ति, तत्समाधिना मायानिवृत्तेः। यदा मनसः आत्मसाक्षात्कारोऽस्ति तदा आत्मनो मनोविषयकत्वस्य वक्तुं शक्यत्वादित्यर्थः। यदा जीवात्मनि मायानिवृत्तिरुपलभ्यते तस्य परब्रह्म जगदाकारेण परिणमति। अयं घट इत्यत्र घटज्ञानविषयकत्वमिव निर्गुणब्रह्म मनोविषयकं भवति। सैव प्रमा भवति। अत एवोक्तं "सा स्मृता" इति। प्रकृतिरेव स्मृतेत्यर्थः। सर्वेषां मोक्षहेतुस्समाधिः। तस्य सर्वेषामसम्भावितत्वात् तत्प्रमाफलकसामग्र्या अभावाच्च। तेषां मधुररसवद्द्रव्यादन्यस्य सात्विकगुणप्रदायकत्वात् सात्विकगुणस्समाधिहेतुः, राजसतामसगुणजनकश्लेष्मणस्मव्यतिरिक्तसात्विकगुणहेतुमधुररसजन्यत्वात्। तस्मान्मधुररस एव समाधिहेतुरित्यत आह— मधुरेति।

**मधुररसो रसासृग्गतपवनाविकृतमधुप्रवोहात्साहोदयः पूरयन् अङ्गुष्ठं च समाश्रितः ॥ ८७ ॥**

मधुररसस्तु रसासृग्धातुचरपवनस्य अविकारं कुर्वन् कुण्डलीस्थितः श्वासोच्छ्वासाभ्यां शिरःकमलस्थामृतमाहृत्य आपादमस्तकं तर्पयन् इडामार्गगमनेन पवनेन कुम्भकं कृत्वा अङ्गुष्ठपर्यन्तं सञ्चार्य तत्तदङ्गं प्रसिञ्चेदित्यर्थः ।

ननु कला प्रबला सती मधुरसजन्यपवनस्य श्वासोच्छ्वासानिलाभ्यां शिरस्स्थितामृतमाहृत्य शिरस्सन्तर्पणं विधत्त इति वक्तव्यम् । कला अबला सती तेन आपादमस्तकसन्तर्पणेन धातुपोषणं कथं विधत्त इत्यस्वरसादाह—तत्रेति ।

**तत्र स्थितकला दशदलकमलं विकासयन्ती प्रचलति ॥ ८८ ॥**

कुण्डल्युद्भवपित्तकलाधारदशदळपद्मं विकासयन्ती अमृतं विमृजतीत्यर्थः ।

ननु पवनस्तु शिरःकमलस्थामृतमाहृत्य धातुसन्तर्पणं करोतीत्युक्तम् । इदं तु समाधिसामग्रीसम्पादनप्रकरणम् । समाधिफलं तु आत्मसाक्षात्कारानुभवरूपम् । तत्सामग्री शरीरविकाराभावकार्यं सम्पादयति । तेन आत्मसाक्षात्कारो लभ्यत इत्यस्वरसं ज्ञापयन् अवतारान्तरमाह—अङ्गुष्ठेति ।

**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ॥ ८९ ॥**

**ईश्वरस्सर्वस्य जगतश्शरीरं वहति ॥ ९० ॥**[1]

अमृतेनापादमस्तकं सन्तर्पणं रोगाभावकार्यसम्पादकसामग्रीप्रतिपादितशरीरदार्ढ्यजन्यं समाधिकार्यहेतुकत्वात् , यन्नैवं तन्नैवं यथा घटः, इत्यनुमान-

---

[1] ईश्वरस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभु । शरीरं वहति । A & B.

विधया शरीरदार्ढ्ययुक्तयोगसम्पादनेन मोक्षप्राप्तिर्भवति । "अङ्गुष्ठमात्रः पुरुषः" इत्यत्र लिङ्गशरीरं पादमात्रम् । तत्र श्रुतिः—

"पादोऽस्य विश्वा भूतानि त्रिपाद-
स्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः"

इति । एषा श्रुतिः अङ्गुष्ठमात्रं प्रतिपाद्य तिष्ठति । स एवेश्वरो भवति । सोऽर्पाश्वरः त्रिपादेन दिवि स्थितामृतमाहृत्य स्वशरीरं सन्तर्प्य जगच्छरीरमपि वहति । विराड्रूपेश्वरगोचरज्ञानसाधक अन्तरिन्द्रियात्मगोचरज्ञानसामग्रीसम्पादनापेक्षया जगच्छरीरात्मविषयकज्ञानगोचरज्ञानग्राहकसामग्र्या आत्मसाक्षात्कारो भवेदित्यर्थः ॥

ननु योगिनामपि मूलाधारमादिभूतं सकलधातुपोषकं श्वासोच्छ्वासाभ्यां शिरस्स्थितममृतमाहृत्य शरीरसन्तर्पणं विधत्ते तस्य सर्वधारणत्वात् । योगं विनापि तत्कर्म कर्तुं शक्यत एवेत्यस्वरसान्तरमाह—मूलेति ।

## मूलाधारमादिभूतं सकलधातुपोषकम् ॥ ९१ ॥

मूलाधारस्य कुण्डलिनीरूपस्य अनिलानलचक्रात्मकस्य तन्निष्ठश्वासोच्छ्वासाभ्यां धातूनाममृतादनम् । योगाभ्यासजन्यपवनेन मूलाधारमादिभूतं यावत्कालं धातुदार्ढ्यकरणं जठरानिलप्रदं चिरायुःप्रापकं यावदिन्द्रियाणां अर्थविषयकज्ञानानुभवसार्थकरणं च लभ्यत इत्यर्थः ।

ननु शरीरपादपः अमृतजलपोष्योपकारकः । अमृतातिरिक्तव्यानपवनस्य शरीरव्यापकतावच्छेदकत्वात् । ननु मूलाधारपद्मस्य कमलधातुपोषकसकलशरीरव्याप्यपवनसंयोगे सति तत्पोषकत्वं वक्तु शक्यते, तस्य

कुण्डल्याधारमात्रोपयोगिकत्वात् , सर्वशरीरव्यापकत्वाभावेन तत्पोषकत्वमपि न रोचत इत्यस्वरसादाह—सिरेति ।

**सिरापथगतपवनश्शिरःकमलस्थामृतमाहरन्निसश्चति ।। ९२ ।।**

सिरामार्गेषु सर्वदा सञ्चारभूः पवनो व्यानपवनस्य मूलाधारस्थितत्वेन तत्र स्थितामृतमाहरन् शरीरशाखिवीजोत्पादकपादपद्ममूले पूर्वरसासृग्धातुषु चरन् प्रभवतीत्यर्थः ।

ननु सकलामृतात्मकानलानिलचक्रात्मककुण्डल्युद्भवप्रकाशमानप्रथमप्रयाणाधिगतश्वासानिलोष्मणो जातामृतमाहृत्य उच्छ्वासानिलेन तत्सर्वं सङ्गृह्य धातुसन्तर्पणं करोतीति यत्तदेव शरीरदार्ढ्योपकारकं भवतीति व्यानवायुना पादपद्मपूरकेन किं फलं भवेदित्यस्वरसादाह—शरीरेति ।

**शरीराङ्करशाखानामादिभूतं [1] तथा ।। ९३ ।।**

पञ्चशाखं शरीरमिति शरीरमेव अङ्कुरं पञ्चशाखान्वितं मूलाधिष्ठानपद्माधारभूतम् । तस्य शाखा एव अवयवा इत्यर्थः ।

ननु मूलाधारपद्ममेव शरीराङ्कुरस्य आलवालमित्युक्तम् । तत् तदङ्गस्थितवर्णानां तत्तदधिष्ठानदेवतानां अमृतपोषकत्वभावनचलनात्मककर्मोपकारकं नोपपद्यत इत्यत आह—तत्तदिति ।

**तत्तदधिष्ठानवर्णदेवतानां सिरामार्गगतामृतं पोषकम् ।। ९४ ।।**

तत्तद्देवतात्मकं अकारादिक्षकारान्तं तत्तदङ्गाधिष्ठानाधिष्ठितम् । तस्य तत्तत्सिरामार्गगतामृतं पोषकं भवति । तस्य आपादमस्तकं सञ्चारितव्यान-

---

[1] तथा । 'पञ्चशाखाः पञ्चाङ्गुलाः' इत्यधिक पाठः—A & B.

पवनोऽपि पोषको भवति । भवर्णोत्पादकपादपद्मं शाखावेलारूपम् । तावत्पर्यन्तं सहस्रारपद्मगतामृतं रक्षकं भवतीत्याह—तदिति ।

**तत्पादपद्माधारे सरित्प्रवहति ।। ९५ ।।**

पादपद्मपर्यन्तं सिरासन्धानमनुसृत्य अमृतप्रवाहो भवतीत्यर्थः ।

ननु कुण्डलिनीगतश्वासोच्छ्वासमहिम्ना आगतामृतस्य आधारपद्मालयालपर्यन्तं प्रवाहकरणस्योचितत्वात् कथं ह्याधारपद्मपर्यन्तं प्रवाहकरणं नोपपद्यत इत्यत आह—मांसेति ।

**मांसानुसृतसिरामार्गगतपवनेन कलाः पूरयन्**
**अमृतं सेचयेत् ।। ९६ ।।**

तन्मार्गमनुसृत्य इडापवनेन पादपद्मपर्यन्तं सेचयेदित्यर्थः । तेन तदाधिष्ठानस्थितवर्णदेवताः सन्तोष्य पालयेदित्यर्थः । ननु रसासृग्धातुपवनेन अमृतपोषकत्वं तद्धातून्नामेवेति वक्तव्यम् । तदितररक्तधातोरमृतपोषकत्वाभावेन जीवनं नोपपद्यत इत्यस्वरसादाह— मांसेति ।

**मांसानुसृतसिराभावास्सन्ति[1] ।। ९७ ।।**

इडामार्गगतश्वासपवनः सहस्रारकमलस्थामृतमाहरन् मांसधातुं सन्तर्प्य शरीरपोषको भवतीत्यर्थः । रसासृग्धातुपवनस्य शरीराङ्गविभागकार्यकारकनियमस्थापकत्वात् मांसधातुगतसिराणां अप्रयोजकत्वेन रक्तधातुपोषकत्वं पवनस्य कथं सङ्गच्छते । पवनसिरासृग्धातुमात्रप्रदानं चरन् तत्पोषकत्वमात्रस्यैवोचितत्वात् न रक्तधातुपोषको भवतीत्यस्वरसादाह—द्वीति ।

---

[1] A. B. कोशेषु एतन्न दृश्यते.

द्विसहस्रसिराशाखावत् पादपद्ममूलकम् ।। ९८ ।।

द्विसहस्रसिराशाखिनः पादपद्मालवालं सिराङ्कुराणामाधारकं पादपद्म-प्ररोहाङ्कुराणामेव अमृतमाहरत् धातुपोषकं भवतीत्यर्थः । द्विसहस्रसिरो-द्भवाङ्कुराणां सप्तधातुपोषकत्वेन शरीराधारकत्वं कथं स्यादित्यस्वरसादाह— सप्तेति ।

सप्तधातुमयं शरीरम् ।। ९९ ।।

षड्सा इत्यत्र स्वाद्वम्ललवणतिक्तोष्णकषायकाः । ततः षट्सङ्ख्या-द्रव्यमाश्रित्य तिष्ठतो गुणवत्पोषकत्वस्य सुप्रसिद्धत्वात् । धातुर्नाम 'रसा-सृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः' इति । ततो धातुमयं शरीरमित्युक्तम् ॥

इदानीं प्रतिपादितप्रश्नो योगशास्त्रं भवति । तन्मध्ये सप्तधातुमयं शरीरमिति प्रतिपादनं योगाभ्यासस्यापि धातुपोषकत्वमेव फलमिति द्योतनार्थं तथा प्रतिपादितम्—आयुर्भवतीत्यर्थः । धातवः रसादिपोषिताः शुद्धरस-द्रव्योपजीवकत्वात् । तस्माद्धातूनां रसादिपोषितत्वं सुप्रसिद्धमिति भावः ॥

इत्यायुर्वेदस्य तृतीयप्रश्नस्य भाष्यं योगानन्दनाथकृतं
सुप्रसिद्धं महाजनसंमतं प्रतिसूत्रव्याख्यानपूर्वकं
आयुर्वेदभाष्यं लोकोपकारकं संपूर्णम्



## आयुर्वेदे चतुर्थप्रश्नः

—o—

ननु रसादीनां धातुपोषकत्वं वक्तुमशक्यम् । कुण्डलिनीस्थितश्वासोच्छ्वासपवनस्यैव अमृतप्रदत्वेन प्रतिपादितत्वात् । रसादीनां धातुपोषकत्वं कथं स्यादित्यस्वरसादाह—गतेति ।

**गतागतामृतवशादागतसमाधिक्रियया योगसान्निध्यम्[1] ॥ १ ॥**

कुण्डलिन्याः अनिलानलचक्रात्मकत्वादेव श्वासपवनस्य अनिलचक्रात्मकस्य प्रथमप्रयाणगतस्य ऊष्मरूपत्वादेव शिरःकमलस्यामृतमाहर्तुं शक्यत्वादित्यर्थः । तस्मादमृतवशाद्धातुपोषकत्वं समाधिहेतुकमिति कृत्वा तत्क्रियया योगानां सान्निध्यं भवतीत्यर्थः । तस्माद्योगस्य धातुपोषकत्वं परम्परया प्रतिपादितमिति भावः ।

धातूनां पोषणं प्रति रसादि हेतुर्भवतीति रसादीनां हेतुत्वप्रतिपादनं रसवद्द्रव्यादनेन भाव्यम्, तदन्नाद्यदनस्य अन्वयव्यतिरेकाभ्यां धातुपोषणं प्रति हेतुत्वप्रतिपादनात् । समाधयो धातुपोषका इति कथं प्रतिपद्यत इत्यस्वरसादाह—तीव्रेति ।

**तीव्रसंयोगाख्यामासन्नः समाधिः[2] ॥ २ ॥**

मनस आत्मनिदिध्यासनस्य तीव्रसंयोगत्वं नाम इतरार्थज्ञानज्ञापकसामग्र्यसमर्थितत्वे सति आत्मसमवेतत्वम् । तेषामात्मविषयकविपर्येतरज्ञानं प्रति

[1] गतागतानिलवशा—A & B [2] योग, I. 1, 21

हेतुरेव समाधिरित्यर्थः । ननु परमात्मनो विभुत्वेन मनस आत्मना साकं धृढतरसंस्कारस्य स्वत एव सिद्धत्वादित्यस्वरसादाह—संवेग इति ।

**संवेगः क्रियाहेतुर्दृढतरसंस्कारः ॥ ३ ॥**

संवेगो नाम कारणम् । तस्य लक्षणं क्रियाविशेषमात्रवैलक्षण्यं तदवच्छेदकम् । स एव क्रियाहेतुर्भवति दृढतरसंस्कारोऽपि भवतीत्यर्थः । तरशब्देन सुतरां हेतुरिति भावः ।

ननु एतत्समाधानमनुपपन्नं, तथा च श्रुतिः—

"अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति । अन्नममृतं तमु जीवातुमाहुः" इति श्रुतेः विद्यमानत्वात् । एतत्प्रमाणप्रतिपादितसमाधेरदृष्टत्वादित्यस्वरसादाह—गतेति ।

**गतागतोपायभेदवतां समाधिफलं चासन्नम् ॥ ४ ॥**

अत्र गतागतविषयकज्ञानमात्रं न विवक्षितम् । अन्नादनाभावे सति धातुपोषकशरीरपुष्टिर्यस्यास्ति तस्येदं विवक्षितम् । ते तु परमयोगिनो भवन्ति । तेषामवच्छेदकं गतागतोपायभेदज्ञातवत्त्वम् । गतागतरूपश्वासोच्छ्वासाभ्यां शरीरदार्ढ्योपायं, भिद्यत इति भेदः अन्नादनाज्जातजनकयोगजन्यभेद इत्यर्थः । समाधेः फलं शरीरदार्ढ्यकारणम् । शरीरेण सर्वकर्माधिकारी भवति । शरीरं सत्कर्मादिमोक्षहेतुकं भवतीति भावः ।

ननु श्वासोच्छ्वासानिलयोर्गतागतत्वस्य शरीरिणां स्वत एव सिद्धत्वात् स्वतस्सिद्धकर्मणः विशेषविधिं विना कथं शरीरदार्ढ्यकारकत्वं कथं वा मोक्षोपयोगिकत्वं भवतीत्य शङ्क्याह—मृद्विति ।

मृदुमध्यातिमात्रत्वात्ततो विशेषः [1] ।। ५ ।।

श्वासानिलः इडामार्गे गत्वा मन्दं मन्दं सञ्चरन् शरीरं नीरोगं करोति । स एव मोक्षहेतुको भवति । तदनन्तरं मध्यमार्गे गत्वा नाभिप्रदेशपर्यन्तं मन्दं मन्दं सञ्चरन् शरीरदार्ढ्यकारको मोक्षहेतुकश्च भवति । अतिमात्रगमनेन सुषुम्नामार्गे गत्वा अत्यन्तमुदरमापूर्यते चेत् तस्य शरीर-पिङ्गलामार्गे गत्वा शरीरस्य निरतिशयमोक्षहेतुको भवति । तेभ्यो विशेषा-दभ्यासवशात् प्रयत्नाभावेऽपि सर्वदा यः कुंभकं करोति सः अरोगी भूत्वा राजयोगमार्गसम्पादनेन सर्वकर्मपरित्यागवान् भवति । तेनैव मोक्षफलमश्नुते । तत्र श्रुतिः—

' संन्यासयोगाद्यतयः शुद्धसत्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे '' इति श्रुतिप्रमाणेन असंशयज्ञानगोचरवान्भूत्वा शरीरदार्ढ्यकर्मकरणद्वारेण सर्वविषयभोगानुपभुज्य तद्भोगविषयकपदार्था-न्नश्वरानिति विज्ञाय सर्वदा आत्मविषयकज्ञानं इहलोकेऽपि सर्वदा परमा-नन्दानुभवहेतुकम् । स एव ततो विशेष इत्यर्थः । राजयोगोऽपि भवति । तस्य उपायेभ्यो मृद्वादिभेदभिन्नस्य उपायवतां विशेषो भवतीत्याह— मृद्विति ।

मृदुमध्यातिमात्रा इत्युपायभेदाः ।। ६ ।।

पूर्वोक्तरीत्या मृदुमध्यातिमात्रगमनं रोगनिवर्तकद्रव्यानिवृत्तरोग-निवृत्त्यर्थम् । अयमेवोपायः शरीरदार्ढ्यकर्मकरणद्वारा मोक्षफलप्रापको भवतीत्यर्थः ।

ननु यत्तु त्रयाणां मार्गाणां शरीरदार्ढ्यकर्मकरणपर्यन्तमपि उपायो भवतीत्युक्तं ततोऽधिकमार्गपर्यन्तगमनमपि उपायो भवतीत्याह—मृद्विति ।

[1] योग. I. 22.

मृदुसंयोगो मध्यमसंयोगस्तीव्रसंयोगश्च ॥ ७ ॥

इडामार्गगमनमन्दानिलेनापि कुण्डल्युद्बोधकरणं उपायो भवति । एवं सुषुम्नामार्गगमनपवनेन कुण्डलीसंसर्गजातकुण्डल्युद्बोधकर्मणा च मोक्षोपायो भवति । तच्छरीरदार्ढ्यसम्पादनसामग्री उपायो भवतीत्यर्थः । तत्त्रिगुणहेतुकानिलानां शरीरदार्ढ्यकरणमात्रस्याप्रयोजकत्वात् तद्गुणोपायव्यतिरिक्तकर्मणा योगाग्निसन्धुक्षणेन बहुजन्मार्जितपापसङ्घातं भस्मीकृत्य मोक्षहेतुर्भवतीत्याह—त्रिधेति ।

त्रिधा भेदनेन वायोर्नवयोगिनो भवन्ति ॥ ८ ॥

पवनस्य त्रिविधविकारत्वफलं क्रियते । मृदुपवनस्य संयोग मृदुपवनकुण्डलीसंयोगः । मध्यमवेगपवनस्य कुण्डलीसंयोगः । तीव्रगतिमार्गानिलस्य कुण्डलीसंयोगः तीव्रसंयोगः । मध्यमानिलस्य संयोगः नाभेरूर्ध्वप्रदेशस्थं हृत्कमलपर्यन्तं आगत्य तत्रस्थस्य निरुद्धपवनस्य अन्तःपदमार्गमवलम्ब्य गच्छतः आत्मनि समवस्थानम् । स एव समाधिः । आत्मज्ञानसम्भवाल्लभ्यते । स एव मध्यमसंयोगः । तीव्रसंयोगः तदुपरि शिरःकमलपर्यन्तम् । तदुपरि सुषुम्नामार्गादागतपवनगतिहेतुकं सिरामार्गपूरणं सकलशरीराणामायुष्कारकम्, तत्कर्मणः सकलशरीरोपकारकत्वात् । शरीरारोग्यकरणार्थं नवप्रकारो भूत्वा शरीरं संरक्षतीत्यर्थः ।

ननु बहिःपवनः इडापिङ्गलासुषुम्नामार्गमावृत्य उदरमापूर्य शरीरारोग्यमात्रोपकारकः समाधि तस्य चलनस्य प्रधानाङ्गोपकारकत्वाभावात् । चलनात्मकपवनस्य सिरापूरणमात्रप्रयोजकत्वेन "एते जङ्गमाः" इति कथं वक्तुं शक्यत इत्यस्वरसादाह—पञ्चेति ।

पञ्चदशकमलं जङ्घादेशगतं सहस्रसिराधारकं
पञ्चाशन्मर्मगतम् ॥ ९ ॥

गतागतसंस्कारोपकारकपवनयोगस्समाधिः । कुण्डल्याधारभूतपञ्चदशकमलं जङ्घाप्रदेशस्थं सहस्रसिरावृतं सत् मर्मस्थानानुसन्धानकारकं जङ्घाभ्यां चलनोपकारकमिति वक्तुं शक्यत्वादिति । तस्मादेते जङ्गमा इति प्रदर्शिताः। जङ्घापद्मप्रदेशस्थपञ्चदशदलपद्मवच्छरीराङ्गं चलनात्मककर्मोपकारकं, जङ्गमशरीराङ्गकत्वात् यन्नैवं तन्नैवं यथा स्थाणुः । तत्पञ्चदशात्मकं पादसहस्रावलम्बक-सहस्रसिरावृतं द्विशतपञ्चाशत्सिरावृतैकाङ्गत्वात्, यन्नैवं तन्नैवं स्थाणुशरीराङ्गम्। पञ्चाशन्मर्मगतं पञ्चाशद्वर्णात्मकं तत्तद्वर्णबोधकाभिनयचलनात्मकाङ्गाधार-भूतत्वात्, यन्नैवं तन्नैवं यथा घटः ॥

गतागतसंस्कारोपकारकपवनयोगस्समाधिः ॥ १० ॥

सामविरिति—समाधिश्चलनकर्मविशिष्टकर्मा, पवनाश्रितज्ञानेच्छा-प्रयत्नजन्यहेतुज्ञापकद्रव्याश्रितत्वात्, यथा घट इति ।

ताल्वोष्ठपुटव्यापारजातशब्दानाह—हस्तेति । [1] हस्तविन्यासानु-सृताज्ञाबोधकः तच्छब्दज्ञापकाभिनयकर्मविशिष्टविषयकज्ञानाश्रितत्वात् । एवमनुमानप्रमाणेन आयुर्वेदसूत्रार्थव्याख्यानं कृतम् ॥

ननु चैतन्याधिष्ठितं शरीरं चेष्टाश्रयं चेष्टाश्रयजन्यफलानुभवा-नन्दात्मकत्वात्, यन्नैवं तन्नैवं चैतन्यरहितशरीरवत् । जीवच्छरीरं सात्मकं, प्राणादिमत्त्वात् । यज्जीवच्छरीरं न भवति तत्प्राणादिमन्न भवति,

---

[1] A & B कोशेषु हस्तादिसूत्रं नदृश्यते.

शवशरीरवत् । ईश्वरेच्छाधीना चेष्टा ईश्वरप्रेरितकार्याधीना भवतीत्यत आह—ईश्वरेति ।

ईश्वरप्रेरितचेष्टाश्रयं हिताहितकार्योद्देश्यविषयप्रवर्तक-
चेष्टाश्रयं शरीरम् ॥ ११ ॥

ईश्वरप्रेरितचेष्टाश्रयं कीदृशं चैतन्यं? चक्षुर्वद्रूपग्राहकत्वाभावात्, श्रोत्रेन्द्रियवच्छब्दग्राहकत्वाभावात् । तस्माच्चैतन्यस्वरूपं गृहीतुमशक्यमित्याशयं मनसि निधायाह—ईश्वरेति ।

जन्यशब्दज्ञानं चेतनसद्भावे प्रमाणम् । तथा हि—तत्तदङ्गाधिष्ठितवर्णाः ताल्वोष्ठपुटव्यापारादिना वर्णात्मकाश्शब्दाः ईश्वरप्रेरितशब्दाः शरीराद्यजन्यत्वे सति जन्यव्यापारहेतुकत्वात् । अङ्कुरादिवत् ।

अङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत् । इति ईश्वरसद्भावेऽनुमानं प्रमाणमिति तेन हेतुनोपलभ्यते । बीजभूमिजीवनसामग्र्यां सत्यां कार्यमुत्पद्यत इति न तेनापीश्वरसिद्धिः । अन्वयव्यतिरेकाभ्यां अङ्कुराद्युत्पादकदृष्टसामग्रीसत्त्वात् घटवत् । अङ्कुरादिवद्दृष्टान्तसद्भावे प्रमाणम् । शरीरावच्छेदकं चेष्टाश्रयम् । चेष्टाश्रययोग्याङ्गानि बहूनि सन्ति । सर्वदा चलनप्रसङ्गस्यैवोपस्थितत्वात् । तथा सति अतिप्रसङ्ग एव स्यादित्यस्वरसादाह—ईश्वरेति ।

चेष्टास्वरूपं हिताहितप्राप्तिपरिहारार्थस्पन्दनम् । न तु स्पन्दनमात्रम् । तत्सर्वं ईश्वरप्रेरितचेष्टाश्रयम्, तथा सति नातिप्रसङ्गः । यस्य यावत्कर्मानुगुणभाग्यं यदधिष्ठानाधीनं तत्सर्वं अनुभवयोग्यं कर्तुं प्रतिभूर्भवतीत्यर्थः । प्रयोजकत्वात् चेष्टारूपेण ईश्वरसद्भावस्य प्रेरितत्वादित्यर्थः ।

ननु शरीरावच्छेदकं चेष्टाश्रयमित्युक्तम् । तथा सति सर्वदा चेष्टाकरणप्रसङ्गात्, ईश्वरस्य सर्वशरीराङ्गव्यापकत्वेन सिद्धत्वात् तस्य चेष्टाकरणमेव प्रयोजकं भवतीत्यस्वरसादाह—हिताहितेति ।

हितप्राप्त्यर्थं अहितपरिहारार्थमेव स्पन्दनकरणं ईश्वरप्रेरितम् । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, इन्द्रियाणां प्राप्यकारित्व-नियमात् । ईश्वरः यदर्थकर्मकरणमिच्छति तावदर्थानुभवज्ञानेन आनन्दानु-भववान् भवतीत्यर्थः ।

ननु परिशुद्धरसादनं यस्यास्ति तस्येन्द्रियादयः सुप्रसन्ना भवन्ति । रसवद्द्रव्यादनं चेष्टाश्रयहेतुकं शरीराङ्गस्य रसादनपोषितत्वात् । तस्माच्छुद्ध-रसवद्द्रव्यादनस्य चलनात्मकशरीरस्य च हेतुहेतुमद्भावयोरेव वक्तुं शक्यत्वात् इत्यस्वरसादाह—शुद्धेति ।

**शुद्धरसाहारजन्यधातुप्रेरितसिरागतपवनवशा-**
**चलनात्मकम् ॥ १२ ॥**

तत्र वचनं—

आहारं पचति शिखी दोषानाहारवर्जितः पचति ।
दोषक्षये च धातून्पचति च धातुक्षयेऽपि च प्राणान् ॥

एतद्वचनानुसारेण शरीरदार्ढ्यकरणं अङ्गप्रचलनं च रसादनादेव भवतीत्यर्थः ॥

ननु शुद्धरसादनं धातुपोषणमात्रं करोति । तेन रोगाभावात् पञ्चेन्द्रियाण्यपि स्वविषयविषयकविषयज्ञानस्य शुद्धरसवद्द्रव्यादनेन लाभात् तद्वति तत्प्रकारकत्वमपि गृह्णन्ति । तेन चलनात्मककर्मोपकारकत्वं न स्यादित्य-स्वरसादाह—जडेति ।

जङ्घापद्मपोषकामृतप्रवाहपरिणामयोगवशाच्चलति ॥ १३ ॥

जङ्घाप्रदेशस्थितपञ्चदशदळपद्मं येन वशादागतामृतप्रवाहात् तत्पद्मं पोषयत् तच्चलनात्मककर्मोपकारकं भवतीत्यर्थः ।

ननु ईश्वरसद्भावे किं मानं? स्वहितफलप्रापकविषये चलनात्मककर्मप्रवृत्तिः । अहितफलनिवृत्तिविषये चलनात्मककर्मप्रवृत्तिश्च । तदुभयमपि शुद्धरसाहारजन्यं धातुदार्ढ्यकारणप्रयोजकम् । सकलकर्मविषयकचलनात्मकक्रिया पवनेन सिरागतामृतप्रवाहप्रेरणावशात् चलति । पूर्वोक्तरीत्या ईश्वरेण विनापि शरीराङ्गचलनक्रियां कर्तुं कर्मकारणेनैव सिद्धत्वात्—

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति । तस्मादीश्वरो न सिद्ध्यतीत्यस्वरसादाह—लवणेति ।

लवणरसजन्यपवनयोगरसप्रवर्तकक्लेशकर्मविपाकाशयापरामृष्टः पुरुषविशेष ईश्वरः[1] ॥ १४ ॥

लवणरसजन्यः तामसगुणविशिष्ट ईश्वर एकः शरीरे स्थितः । स ईश्वरः नित्योऽपि तामसगुणस्य अनित्यत्वात् तद्गुणविशिष्टत्वात् तज्जन्य इत्युक्तः । पवनजनकस्वादुरसवद्द्रव्यादनजन्यसात्त्विकगुणविशिष्ट ईश्वरः तद्गुणविशिष्टे शरीरे स्थितः अजः । क्लेशगुणविपाकाशय अजः । तस्मादपरामृष्टः आशयरहितः ईश्वरः पुरुषविशेषः । तावुभावपि शरीरस्थितौ । तयोरेकः अजरस्सर्वस्वतन्त्रोऽपि सर्वशरीरं व्याप्य सर्वकर्मोपकारकः ।

---

[1] विशेषः जीवः A & B

स्वानन्दानुभवहेतुकपदार्थज्ञानेन इच्छा जायते । तच्चलनात्मकं कर्म प्रवृत्तिः । तत्स्वत्वज्ञापितात्तदितर ईश्वरः मायाव्यतिरिक्तः निष्कळङ्कः निर्गुणः निरवयवः नित्यानन्दात्मकः योगिनामप्यगोचरः । तावुभौ पतत्रिणौ शरीरवृक्षं परिष्वज्य स्थिताविल्यर्थः । क्लेशकर्मविपाकाशयो जीवः । क्लिश्यन्त इति क्लेशाः अविद्यादयः । वक्ष्यमाणानि अविहितानि निषिद्धद्रव्याणि नश्वररूपाणि कर्माणि । वक्ष्यमाणानि—विपच्यन्त इति विपाकाः कर्मफलानि जात्यायुम्सुखदुःखभोगात्मकानि फलानि । तानि तामसगुणहेतुकलवणकटुरसद्रव्यादनहेतुकजातानि । तेषामाशयो निदानस्थानात्मकः मायाशबलितो जीवः । साशयस्थितनड्डापद्मस्थितसहस्रसिराभिः आत्मेच्छायाः प्रयत्नज्ञानात् गतागतप्रेरकपवनवशात् ।

" नड्डाभ्यां पद्भ्यां धर्मोऽस्मि । विशि राजा प्रतिष्ठितः । प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् । प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे । प्रतिद्यावापृथिव्योः प्रतितिष्ठामि यज्ञे[1] " ।

इति श्रुतिप्रतिपादितशरीरेषु विशन् कर्म करोमीत्यर्थः ।

ननु शरीराङ्गगतचेष्टादिकं आत्माधीनं, तेन परमात्मा सिद्ध्यति । परमात्मन इच्छ विषयकज्ञानकार्यं आत्मेच्छाविषयकज्ञानपूर्वकं, शुद्धचैतन्यप्रेरितकर्मकार्यहेतुभूतत्वात् । यन्नैवं तन्नैवं यथा घटः । इत्यनुमानविधया परमात्मसिद्धिः ।

स्रोतोमार्गस्थितसिराप्रेरितसर्ववर्णज्ञापकाधारदेशस्थितकरप्रभवा द्वादशदळ द्यावलम्बकपल्वोष्ठपुटव्यापारादिकं सकर्तृकं कार्यत्वात् घटवत् इत्यनुमानेन आत्मसिद्धिः । तदर्थं शरीराङ्गचेष्टां व्याचष्टे—स्रोत इति ।

---

[1] तै ब्रा अष्टक II. प्रपा 6, 5, 2९.

**स्रोतोमार्गसिरात्रिशतधराष्टादशदळ[1]पद्मं प्रतीतिगमनागमन-चेष्टाश्रयं भवति ॥ १५ ॥**

तास्सिरा मर्मशः स्रोतोमार्गसञ्चरितास्त्रिशतसङ्ख्याकाः । एतादृश-चेष्टाश्रयस्य शरीरस्य आत्माधिष्ठितत्वात् तास्सिराः स्रोतोमार्गप्रवाहस्य वेलारूपा भवन्ति । कण्ठप्रदेशस्थिताष्टदळपद्मं सर्ववर्णोच्चारणहेतुभूतपवन-प्रवर्तकं तत्प्राणदेवताधारं तस्मिन्नेव कार्यहेतुभूतज्ञाने सति चलनात्मककर्म-करणात् आत्मा ज्ञातुं शक्यत एवेत्यर्थः ।

ननु चलनात्मकं कर्म ईश्वरप्रेरणाजन्यम् । एतत्कर्म सकर्तृकं कार्यत्वात् इत्यनुमानेन परमात्मा अन्तस्स्थितस्सन् कर्म कुरुते । अत्र ईश्वरप्रयत्नजन्यभावः चलनात्मककर्मभावः । तथा सति अन्वयव्यतिरेकाभ्यां कार्यकारणभावस्य तयोरेव दृष्टत्वात् । इत्यनुमानेन ईश्वरसिद्धिरित्यर्थः । गुणत्रयजनकस्वाद्वम्ललवणरसादनेन पवनप्रकोपो निवर्त्यते । तदन्नादनेन शरीरमविकारं सत् चलनात्मकं कर्म कुरुते । तद्विकारे सति तत्तत्कर्म कुरुते । कर्मप्रवर्तकं च गुणत्रयम् । प्रतिपादकस्वाद्वम्लरसविरसादनेन सुष्ठु कर्म कर्तुं न शक्यते । तत्र इडामार्गेण बहिःपवनस्तत्र भेषजं भवति, साध्यरोगाणामपि तन्निवर्तकत्वात् ।

स्वाद्वम्ललवणरसविरसादनेन उदरामयो जायते । तस्यापि इदमेव भेषजं भवति । पवनदोषे अप्रकोपे सति शरीराङ्गकर्मकरणं सूच्यते । तत्प्रकोपे सति शरीरजन्यकार्याभावो दृश्यते । शरीरादिविकारहेतुभूता-न्नादनं तत्तत्कर्महेतुकम् । तस्माद्व्याधिप्रागभावपरिपालनमेव फलीभूतं कार्य-मित्यर्थः ।

---

[1] अष्टदळ—इति व्याख्यानात् प्रतीयते.

ईश्वरस्तु करचरणाद्यवयवी भूत्वा प्रपञ्चोत्पादकं कर्म कुरुते । तथाच श्रुतिः—

"ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत । चन्द्रमा मनसो जातः । चक्षोस्सूर्योऽजायत । मुखादिन्द्रश्चाग्निश्च" इति शरीरान्तरगत्मव्यतिरिक्तेश्वरसद्भावे प्रमाणम् ।

अन्तःस्थितस्सन् कर्म कुरुते तस्मात्प्रत्यहं पथ्यादनेन भाव्यम् । अन्यथा रोगास्सम्भवन्ति । तेन शरीरिणः करणसामर्थ्याभावात् असाध्य उदरामयः । सिरामार्गेषु बहिःपवनपूरणं उदररोगनिवर्तकं तदुपयोग्यनिवर्तकानिवृत्ते सति पवनपूरणयोगस्य करणस्य निवर्तकत्वात् । आत्ममनस्संयोगो योगः योगार्जकत्वात् । स एव जठरानलप्रदो भवति । उदरामयविषये अग्निप्रज्वलनद्रव्यं निवर्तकम्, योगाग्निजनकसामग्र्यास्तत्र भेषजत्वात् । अजीर्णाज्जातोदरामयनिदानं व्याचष्टे—स्वाद्विति ।

**स्वाद्वम्ललवणरसजन्यानिलसिरया पूरयन् जघनपद्मविषयं प्रचलति**[1] ॥ १६ ॥

**स्वादुरसविरसद्रव्यादनादजीर्णादामाम्बुवृद्धिरुदरं जायते** ॥ १७ ॥

स्वादुरसविरसद्रव्यादनं उदरामयहेतुकम्, तदनलेनाजीर्णे जाते सति तेन अम्बुभूताधिक्यप्रवृत्तेर्जातत्वात् तेन मन्दानलो भवति । अधिकानलदोषो भवति । तत्र निदानवचनम्—

"रोगास्सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि तु ।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥

[1] A & B. कोशेषु इद दृश्यते, न व्याख्यातमत्र.

ऊर्ध्वाधो धातवो रुद्ध्वा वाहिनीरम्बुवाहिनीः ।
प्राणाग्न्यपानान्सन्दूष्य कुर्युस्त्वङ्मांससन्धिगाः ॥
आध्माप्य कुक्षिमुदरमष्टधा तच्च भिद्यते[1] ।

रसविरसादनजाताजीर्णेन जातरोगः तन्निवर्तकाभावसामग्र्या आमादि-वृद्धिं जनयति । तेन मन्दानिलोऽपि भवति । शरीरस्य पञ्चभूतात्मकत्वेन स्वादुरसादनात्पवनप्रकोपो निवर्तते । तद्विरसद्रव्यादनात्पवनप्रकोपो दृश्यते । तस्मादुद्भूताभिवृद्धितया सरन्ध्रकाभ्यन्तरधरसिराणामपि परिपीडनात् पवन-सञ्चाराभावत्वेन आपस्स्रवन्ति आ कुक्षिपरिपूरणात् । रसासृङ्मांसधातुषु सिरा दृश्यते । तस्मात्कुक्षिजलं तत्तु धातुवत न जीर्यते । स उदरामयो भवति । स एवाष्टधा भिद्यते इत्यर्थः ।

ननु उद्भूतरसविरसद्रव्यं पवनप्रकोपहेतुकं उद्भूतग्रहणस्वादुरस-विरसद्रव्यत्वात् । कथं तर्हि फलरसविरसद्रव्यजन्यरोगस्य स्वादुरसद्रव्यं न भेषजानिवृत्तनिवर्तकम् । पवनप्रकोपाप्रवर्तकद्रव्यत्वात् । यन्नैवं तन्नैवं यथा घटः । आमनिवृत्तिद्वारा उदरामयोऽपि न जायते । तत्प्रागभावपरिपालन-कार्यस्य तदुपयोगिकत्वात् इत्याह—स्वाद्विति ।

## स्वादुरसवद्विरेचनद्रव्यं तत्र भेषजम् ॥ १८ ॥

उदरामयनिवर्तकद्रव्याणि क्वाथकल्कावलेहभेषजद्रव्याणीत्यर्थः । तत्र वातकृतोदरामये ते पदार्थाः । सर्वेषामपि सम्भावितत्वात इति तन्निवर्तकस्य रेचनोपयोगिद्रव्यत्वेन तत्तद्द्रव्ययोग्यकालं विज्ञाय चिकित्सा कार्येति व्यपदिशति —शनैरिति ।

---

[1] अष्टाङ्ग. निदान. XII 1-3.

शनैश्शनैरेव रेचयेत् ।। १९ ।।

सर्वजन्तूनामप्युदरं जलाधारकमिति, तेजश्च बलं च आयुश्चेत्येतान्य-नलाधारकाणीति मत्वा शनैश्शनैरेव रेचयेत् । शरीरान्तस्स्थितसिराजा-ताङ्कार्यमुदरामयं, तन्निवृत्तिकार्यं अन्तस्स्थितजलविरेचनकार्यं कुर्वीत । तत्र निदानवचनम्-

"सर्वेषु तन्द्रा सदनं मलसङ्गोऽल्पवह्निता ।
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवः ॥
सर्वं ह्यतोयमरणमशोफं नातिभारिकम् ।
गवाक्षितं सिराजालैः सदा गुडगुडायते ।
नाभियन्त्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति ।।"[1]

एतद्वचनानुसारेण सिराविकारजन्यजलनिवर्तकं यत्तद्विरेचनकार्यं, तेनोदरामयो निवर्तते सिराविकारजन्योदरामयहेतुकजलद्रव्यत्वात् तद्विरेचन-योग्यार्थः निवर्तक इत्यर्थः ।

ननु गजाश्वादीनामपि उदरामयः प्राचुर्येण द्योतते । स्वादुरसवद्द्रव्यं तत्र भेषजमिति ते पदार्थास्तत्र नोपयुक्ताः तेषामपि योग्यद्रव्याणां विवक्षितत्वात् । तदुदरामयानां आध्माननिदानस्य सर्वजनसाधारणत्वात् । यावद्व्याध्युपयुक्तभोगयोग्यद्रव्याणि पवनप्रकोपनिवर्तकानि । तत्तज्जातिविहित-पदार्थानां स्वादुरसवद्द्रव्यत्वं यावत्पदार्थेषु भासते । तत्रायं नियमः— स्वादुरसवद्द्रव्यत्वस्य सर्वेषामपि सम्भावितत्वात् आदाननिदानादेः सर्वजन्तूनां समानद्रव्यत्वात् स्वादुरसवद्द्रव्यं तत्र भेषजमिति आयुर्वेदप्रतिपादितार्थः ॥ सर्वजन्तूनां धातुपोषकत्वं च समानमिति घण्टाघोषेण नराणामुदरामयानां

[1] अष्टाङ्गनिदान. XII. 8—10.

स्वादुरसद्रव्याणि चाविरसद्रव्याणि च आरोग्यकारकाणीति प्रतिपादिता-नीत्यर्थः ॥

मूलाधारो बलं पुंसां शुक्रं यत्तद्धि जीवितम् ।

इति वचनानुसारेणापि नियामको ज्ञायते । सर्वजन्तूनां शनैश्शनैरेव रेचयदिति सूत्रात्सम्यक्प्रतिपादितमित्यर्थः ।

ननु एकैकरसद्रव्येण विरेचनकार्यकरणं कर्तव्यं वा, उत अल्पमल्पं वा दातव्यं वा सर्वमेलनं वा आमनिवृत्तिकरणं किंचिर्किंचित्करणं वा ? नाद्यः—एकैकद्रव्येण विरेचनं कार्यमिति चेत् उक्तविरेचनपदार्थानुद्दिश्य यावत्करणविधिरप्रयोजकं स्यात् । न द्वितीयः—अल्पाल्पकरणेन केवल-मामनिवृत्तेरेवाभावात् । शुद्धमनिवृत्तिकरणं, उदरामयनिवृत्तिकर्मनिवर्तकत्वस्य चरितार्थत्वात् । न तृतीयः—सर्वपदार्थानां समीकृत्य योगकरणमिति चेत् अतिविरेचनं स्यात्—धातवःस्रावयन्ति । तत्स्रावणेन अतिरिक्ततया दोषप्रकोपस्स्यात् । तस्मादेतावन्मात्रं व्यर्थं स्यात् इत्यस्वरसादाह—पवनेति ।

**पवनाद्यप्रकोपादग्नेर्बलं पोषयन्क्रियाक्रमः ॥ २० ॥**

पवनाद्यप्रकोपादिति । आदिशब्देन वातपित्तकफदोषाः प्रतिपादिताः । तेषामप्रकोपकरणं फलीभूतार्थस्स्यात् । तस्य अग्निबलदूषकत्वात् येन केन प्रकारेण जठराग्निप्रवर्धकसामग्रीकार्यस्य फलीभूतार्थत्वात् सर्वोदरामयानां जठराग्निप्रवृद्धिकरणं क्रियाक्रमः ॥

पवनादीनां प्रकोपरूपाभावकार्यस्य प्रायोगिकत्वेन शुद्धदोषविज्ञानं शुद्धरसादनजन्यमिति तयोर्व्याप्तिं गृहीत्वा भूयोदर्शनेन कार्यकारणभावः

गृहीतुं शक्यते । तद्विरसद्रव्यादनं उदरामयहेतुकमिति कार्यकारणभावो ग्राह्यः । तस्मात्पवनाद्यप्रकोपकार्यसम्पादनार्थं तत्रैव क्रियाक्रमज्ञानं विवक्षितम् । तथा हि—उदरामयहेतुकामनिवृत्तिकरणद्रव्यं न केवलं भवति । वाताप्रकोपकामययोगः कार्यः । स एव क्रियाक्रमः । तस्मात्सेयमविपत्तिरिति दोषत्रयेण अविपत्कार्यं ज्ञाप्यते । एतद्विरेचनकरणं जठराग्निवर्धकम् । मन्दानलहेतुकद्रव्यजातामयनिवर्तकत्वे सति अनलप्रवर्धकद्रव्यत्वात् । दोषनिवर्तकत्वात्प्रकृते उदरामयचिकित्सायां तदेव प्रतिपादितम्—

> व्याघ्राश्वगन्धा च पुनर्नवा स्यात् पिण्याकशिग्रूणि रसोनपित्सु ? ।
> सवज्रवल्लीकरिकर्णकुण्डलं रुजाघ्नं सूरणतिक्तपत्रम् ॥

अस्मिन्योगे केवलविरेचनद्रव्याणि स्वादुरसवद्विरेचनद्रव्याणि प्रतिपादितानि । पवनाद्यप्रकोपकारकविरेचनगुणाभावकार्यद्रव्याणि प्रतिपादितानि । न केवलविरेचनकरणस्य पवनप्रकोपकारकत्वमिति पूर्वसूत्रे प्रतिपादितम् । तच्चिन्त्यम् । तेन पित्तप्रकोपो भवति । तन्निदानभूतलिङ्गानि भ्रममूर्च्छाविदाहारत्यरुच्यादीनि ज्ञातव्यानि । पित्तोद्रेकजातोदरामयस्य लक्षणानीत्यर्थः । कषायतिक्तस्वादुरसद्रव्यादनात् प्रकोपहेतुकपवनः सिरामार्गस्थितपवनविगत्या रसासृग्धातुसारं स्रावयति । तत्सार एव पित्तमिति विज्ञेयम् । अयं पित्तोदरामयज्ञापक इति वक्तव्यम् । सरन्ध्रकाभ्यन्तरधरैस्तु अन्तरालमार्गेषु विरुद्धपित्तं पूर्यते । अनिलविगत्या रसासृग्धातुसारेण उदराभ्यन्तरपूरणात् धातुपचनवत् । जठरानलस्य अजीर्णद्रव्यत्वात् कुक्षौ विपक्षाद्वर्द्धते स एव पित्तोदरामय इत्याह—विरसेति ।

विरसद्रव्यादनाजीर्णजन्यसिरामार्गस्थितपवनविगत्या सिरारसातिप्रस्रवणादजीर्णादामाम्बुवृद्धेरुदरं जायते ॥ २१ ॥

विरसद्रव्यादनजन्यपित्तोदरस्य हेतवो वक्तव्याः । कषायरसविरस-द्रव्यादनेन वा तिक्तरसविरसद्रव्यादनेन वा पित्तप्रकोपो भवति । अनला जीर्णद्रव्यत्वात् । तन्निवर्तनं लङ्घनादेव भाव्यम् । यत्र कषायतिक्तस्वादुरस-विरसद्रव्यादनमुपलभ्यते तत्र पित्तोदरामयोत्पत्तिः । तत्र सूत्रवचनं—

कषायतिक्तमधुराः पित्तमन्येषु कुप्यते । इति ।

अन्येष्विति कषायतिक्तस्वादुरसवत् पित्तप्रकोपनिवर्तकम् । तद्विरसाः पित्तप्रकोपकारकाः । एतत्त्रयाणां मध्ये एकरसद्रव्यादनजन्यपित्तप्रकोपस्य निवर्तकं तद्विरसान्यरसादनम् । न तद्व्यतिरिक्तशुद्धरसाः उदरामयहेतुकाः पित्तप्रकोपनिवर्तकरसविरसा इति " पित्तमन्येषु कुप्यते " इत्येतद्वचनस्य तात्पर्यम् ।

कषायतिक्तव्यतिरिक्तस्वादुरसवद्व्यतिरिक्तरसविरसद्रव्यादनं उदरामय-हेतुकं जठरानलाजीर्णद्रव्यादनत्वात् यन्नैवं तन्नैवं यथा घटः । एकरस-विरसद्रव्यादनं नोदरामयहेतुकं जठरानलजीर्णद्रव्यादनत्वात् इत्यनुमानप्रमाणेन कषायतिक्तस्वादुरसविरसद्रव्यादनमेलनस्य उदरामयहेतुकत्वं सुप्रसिद्धमिति भावः ।

ननु अष्टविधोदरामयानां कारणीभूतद्रव्याणि षड्रसविरसद्रव्याणि । लोके एतद्व्यतिरिक्तानामभावेन इतररोगाणां कारणीभूतद्रव्याभावात् सर्वे-षामप्युदरामयप्रसङ्ग एव स्यादित्यस्वरसादाह—तावदिति ।

तावत्सिरागतप्रदेशभेदात् श्वयथुबोधकम् ॥ २२ ॥

वातप्रदेशावलम्बकसिराविकारे सति उक्तरीत्या वातोदरामयो जायते। तथा पित्तप्रदेशावलम्बकसिराविकारे सति पित्तोदरं जायते। कफप्रदेशावलम्बकसिराविकारे सति कफोदरं जायते। तत्तद्दोषहेतुकसिराणां कार्य एव द्वन्द्वदोष इति दोषद्वयजन्यास्त्रयः—पवनपित्तदोषजन्योदरामय एकः। कफपवनदोषजन्योदरामय एकः। पित्तकफजन्योदरामय एकः। त्रिदोषजन्योदरामय एकः। सर्वे मिळित्वाऽष्टविधरोगा जाताः।

तावत्सिरागतेति—तत्तद्विरुद्धरसविरसजातसिरामार्गगतपवनगतितिरोधानादनले मन्दे सति तेनाजीर्णत्वं तदवच्छेदकम्। तत्तत्प्रदेशभेददोषत्रयाश्रयादुदररोगस्य हेतुबोधकत्वमेव तत्तदवच्छेदकं भवतीत्यर्थः। पित्तप्रदेशभेदस्थितसिराविकारः कथं ज्ञातुं शक्यते पित्तोदरामयज्ञाने सति तस्य निवर्तकेन निवर्तयितुं शक्यत्वादित्याशयं मनसि निधायाह—पवनेति।

पवनप्रकोपहेतुकरूक्षातिशीतलल्घ्वतिवेदनारुचिविवर्णविरसास्यतन्द्रामूर्छादाहभ्रमतृष्णाज्वरातिसाराङ्गपीतत्वं पित्तप्रकोपोदरामयहेतुकम् ॥ २३ ॥

रूक्षगुणत्वं—सिरामार्गरन्ध्रेषु पवनातिगत्या तत्तदङ्गेषु उष्णोपलब्धिरुत्पद्यते। तत्र तस्य पवनविकारस्य रूक्षत्वमवच्छेदकम्। यत्र पवनस्य अल्पगत्या सिरामार्गरन्ध्रेषु पवनगतिरोधनं दृश्यते तत्रातिवेदना जायते।

तद्वदेव विरसास्यत्वं विवर्णत्वं च लक्षणं भवतीत्यर्थः । सर्वशरीरव्याप्य-पवनस्य विकारग्रस्तत्वात् । सर्वशरीराङ्गवेदनाभावात् कथमेकदेशवेदना इत्याकांक्षायां यावद्विरसादनजन्यसारः यावत्सिराप्रदेशेषूपलभ्यते तत्रायं नियमः । शङ्कासमाधानं च कृतं—सर्वशरीरसञ्चारितपवनस्य विकारस्य सर्वशरीरवेदनाभावज्ञानमेव सिराप्रदेशपञ्चारात् तत्तदङ्गे नीरोगत्वं प्रतीयते । चिकित्साकार्यं तत्तदङ्गेष्वेव तत्प्रतीकारद्रव्यादनेन तद्विरुद्धरसादनजन्यदोष-निवृत्तेः न दोषप्रकोपं निराकृत्य सुखं भूयादित्यर्थः ।

केचिद्विरुद्धरसजन्यद्भिः सिराभ्यन्तररन्ध्रमार्गेषु पूर्णप्रदेशत्वात् वि-वर्णित्वं विरसास्यत्वं च ज्ञाप्यते । तेन पवनप्रकोपनिवर्तकरसविरसादनजन्य-मुदरामयमिति ज्ञातुं शक्यत एवेत्यर्थः । पित्तोदरामयहेतुकनिदानद्रव्यजन्य-लक्षणानि निरूप्यन्ते—

मूर्छादाहभ्रमतृष्णारुचिज्वराङ्गपीतत्वं पित्तप्रकोपोदरामयहेतुकम् । प्रकोपनिवर्तककषायतिक्तस्वादुरसविरसद्रव्यादनं पित्तप्रदेशव्याप्यसिरारन्ध्रमार्ग-गतपवनगतिविकारकमांसधातुशोषकं, पवनदोषप्रकोपजनकरसविरसातिरिक्त-मांसधातुशोषकविरसद्रव्यादनजन्यत्वात् । यन्नैवं तन्नैवं यथा घटः । इत्यनुमानविधया मांसधातुशोषकजन्यमांससारः पित्तोदरामयहेतुकः जठरा-नलाजीर्णधातुसारद्रव्यत्वात् । तेन मूर्छाऽपि जायते । तद्धातुशोषवशात् दाहो भवति । धातुसारस्य इतरपदार्थस्पर्शनाद्भ्रमो भवति । तेन जठरा-नलस्थलनिरसनात् बहिःप्रज्वलनात् ज्वरो भवति । तत्सारातिप्रदर्शनात् तेन रागो भवति । मांसधातोश्च निर्गतरसत्वात् पैत्यं प्रतीयते एतादृशलक्षण-लक्षितः पित्तोदरामयोऽयमिति व्याख्यातम् ।

इतःपरं अष्टविधोदरामयस्य सङ्ख्या—

**श्वासखासभ्रमविदाहतिमिरत्वक्पलिततनुरेतोधातुसिराजातरसः कफः कफं करोति ॥ २४ ॥**

मांसधातोश्च मेदोधातुजनकत्वात् तद्विकारे सति श्वासखासभ्रमविदाहत्वक्तनुतत्सिराजातसारकफः कफं करोति । कफदोषप्रकोपनिवर्तकं तिक्तोष्णकषायरसविरसद्रव्यादनम् । कफोद्गमहेतुकं कफप्रदेशस्थानव्याप्यसिरारन्ध्रमार्गगतपवनगतिविकारमेदोधातुशोषकं, पवनपित्तकोपजनकरसविरसातिरिक्तमेदोधातुजनकशोषकरसविरसद्रव्यादनजन्यत्वात् । यन्नैवं तन्नैवं यथा घटः ।

ननु कषायतिक्तमधुररसः पित्तप्रकोपनिवर्तकाः । तद्भिरसः पित्तप्रकोपकारकाः स्वाद्वम्ललवणरसा पवनप्रकोपनिवर्तकाः । तद्भिरसाः पवनप्रकोपकारकाः । वातपित्तयोः स्वादुरसविरसद्रव्यं वातपित्तप्रकोपकारकम् । रसावरसजन्यपवनप्रकोपे सति तद्विषयरोगे द्वन्द्वप्रकोपो भवति । स्वादुरसविरसस्य वातपित्तप्रकोपहेतुकत्वात् । द्वित्रिविधरसजन्यरोगप्रसक्तिर्यत्र दृश्यते तत्र स्वादुरसविरसद्रव्यादनं द्वन्द्वरूपकोत्पादकमित्याह—पवनेति ।

**पवनपित्तप्रकोपजनकद्वित्रिरसजातानुसरित उक्तोभयलक्षणग्रस्तवातपित्तोदरामयो ज्ञेयः ॥ २५ ॥**

अस्यार्थः—

पवनपित्तप्रकोपकारकद्रव्यं तद्रसविरसादनजन्यं तदन्यरसाजन्यत्वे सति तद्रसजन्यत्वात् यन्नैवं तन्नैवं यथा घटः । पवनरोगस्तु स्वाद्वम्लविरसजन्यः

तदन्यरोगकार्यहेतुकत्वे सति तद्रोगकार्यजनकद्रव्यात् इति व्यतिरेकानुमानेन निर्णेतु शक्यत्वात् । पवनप्रकोपनिवर्तकः स्वाद्वम्ललवणरसः । तद्विरसजन्य उदरामयः । पित्तप्रकोपनिवर्तकः कषायतिक्तस्वादुरसः । तद्विरसः पित्त-प्रकोपकारकः । तस्मादुभयदोषप्रकोपजनकस्य स्वादुरसविरसद्रव्यादनत्वात् स एव द्विदोषप्रकोपको भवति । द्वित्रिविरसजातरोगौ पवनपित्तप्रकोप-जातोदरामयौ । तन्निदानं तत्तल्लक्षणलक्षितादज्ञातव्यमित्यर्थः ।

ननु स्वाद्वम्ललवणरसादीनां विरसत्वं सूत्रे प्रतीयते । स विरसः पवनपित्तप्रकोपकारक इत्युक्तम् । एवं सति कषायतिक्तस्वादुरसानां विरसत्वं अस्मिन्सूत्रे प्रतीयते । स विरसः पित्तप्रकोपकारको भवतीत्युक्तम् । इदं नोपपद्यते । विरसत्वं नाम दोषप्रकोपकविरुद्धरसवद्द्रव्यं भवति । तद्रसद्रव्यादनं कथं दोषत्रयोपकारकं कालवशाज्जाततद्व्यतिरिक्तरसस्य गुणाति-रिक्तगुणवत्परिपूर्णद्रव्येष्वेव तथा प्रतीतत्वात् । तत्र सूत्रवचनं—

मधुरं श्लेष्मलं प्रायः जीर्णाच्छालियवादृते ।
मुद्गाद्गोधूमतः क्षौद्रात्सिताया जाङ्गलामिषात् ॥

प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।
अपथ्यं लवणं प्रायः चक्षुषोऽन्यत्र सैन्धवात् ॥

तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ।
कषायं प्रायशश्शीतं स्तम्भनं चाभयामृते ॥ ''[1]

---

[1] अष्टाङ्ग सूत्र. X. 33-35.

एवं प्रकारेण षड्रसानां रोगप्रकोपहेतुकत्वं प्रतिपादितम् । न ते रोगहारकाः । तथा सति तद्विरसद्रव्यादीनां रोगप्रतिपादकत्वं वक्तुं शक्यत्वादिति न वाच्यं, मधुररसस्य बहुगुणवद्द्रव्यत्वेन तच्छ्लेष्मलमिति वक्तुं शक्यत्वात् "मधुरं श्लेष्मलं प्रायः" इति वचनं नाशङ्कनीयम् । तद्विरसद्रव्यं सकलदोषकारकं षड्रसानामपि तथा वक्तुं शक्यत्वादित्यर्थः । एवं पवनकफोदरामयस्य सूत्रप्रतिपादितार्थः पूर्वोक्तप्रकारेण योजनीयः एवं पित्तकफोदरामयस्यापि एतावदर्थो योजनीयः । एवमाकारेण सप्तसङ्ख्योदरामया जाताः । तदुपरि सूत्रत्रयं व्याचष्टे—कफेति ।

**कफपित्तप्रकोपजनकद्वित्रिरसजातानुसरिततत्तल्लक्षणलक्षितकफपित्तोदरामयो ज्ञेयः । कफपित्तोदरामयं द्वित्रिरसजातानुसरितोभयलक्षणज्ञानजन्यकफपित्तामयं विद्यात् । रसासृङ्मांसमेदोविकारजनकद्वित्रिरसानुसरिततत्तल्लक्षणज्ञानगोचरपवनपित्तकफोदरामयो दुस्साध्यः ॥ २६ ॥**

ननु दोषत्रयजनकरसत्रिरसादनहेतुकोदरामयसद्भावे किं मानं ? तज्जनकहेतोरेवाभावात् । तत्रैकदोषजन्यास्त्रयः । द्वन्द्वजातास्त्रयः । त्रिदोषजन्य एकः । एवं सप्तविध उदरामयः । इतःपरमष्टसङ्ख्यापूरणार्थं उदरामये तद्भिन्नभूतदोषस्यैवाभावात् वातादीनां प्रयोजकत्वस्य तद्धेतोपाधिवशात् सप्तविधप्रकारस्य पूर्वमेव प्रतिपादितत्वात् तदितरोदरामयस्य हेत्वभावेन ज्ञातुमशक्यत्वात् कारणाभावे कार्यानुदयादित्याशङ्क्य समाधत्ते—किलमीति ।

**क्रिमिजनकप्लीहोदरामयस्तथा [1] ॥ २७ ॥**

अस्यार्थः—क्रिमयस्तु विरसजातामयजन्याः । तेभ्यो जातप्लीहोदरामयास्सम्भवन्ति, क्रिमेस्सारजन्यमांसग्रन्थिरूपत्वात् । तस्य जठरानलकार्यस्य प्रयोजकत्वात् तद्वदेव दोषप्रयुक्तो भवति । तस्मादष्टविधोदरामयस्सङ्गच्छत इत्यर्थः ।

पाण्डुशोफविसर्परोगाणां प्रतिपादनस्यावसरत्वात् उदरामयजनकसिरमार्गगतपवनगत्या उदरामयकार्यधातुत्रयदोषैकजन्यत्वस्य एतेषामपि समानत्वात् उदरामयनिरूपणानन्तरमेतन्निरूपणस्य प्रस्तुतत्वादाह—कट्विति ।

**कट्वम्ललवणरसवद्द्रव्यादनजातमल [2] मार्गावरोधनात्**
**तत्सिरारन्ध्रमार्गगतोर्ध्वहृत्परिपूरणपवनप्रकोपनात्**
**पाण्डुशोफविसर्परुक्प्रदो भवति ॥ २८ ॥**

---

[1] A B. कोशयोरेतन्न दृश्यते.

'कफं करोति' इत्यन्तसूत्रादनन्तरं कट्वम्ललवणादिसूत्रात् प्राक् अधो लिखितः अधिकपाठः A. B. कोशेषु दृश्यते—

" त्रिदोषप्रकोपजनकमन्दानलसन्धुक्षणकार पवनयोगजन्यजठरानलप्रवर्धकसिरामार्गपूरितानिलानलदोषजन्यरोगहारकः । वज्रारवह्निपरा विश्वा वधूवरा वर्णाङ्गो वर्षाभूवर्धमानः । तत्तत्क्रियोपकारकक्वाथकल्कतैलघृतलेह्यादयो निवर्तकाः । पवनप्रकोपकार्योदरामयनिवर्तकाः । निवर्त्यो रोगः । पवनपूरणकार्यं दुस्साध्योदरामयविनाशकम् । पर्जन्या पांशुपर्णी तारा नेता वीता धावनी सुवृता । मूर्तिका तुद्रिका कामुकः किरातकः । कटुकः । कशेरुकः । क्रोष्टुकः । त्रिकण्टकः । बर्बुरकः । कुरण्टकः । कशेरुकाः । सरसासृङ्मांससरिरप्रभवति " । A

वज्रीदधिवह्निनरा विश्ववधूधरवर्णा वर्षाभूवर्धमानः .......... घृतपङ्कादयः इति पाठभेदः—B.

[2] जातामलमार्गा A B

कट्वम्ललवणरसाः तद्विरसाश्च पित्तप्रकोपकारकाः । तद्विरसाः तज्जन्यपाण्डुशोभविसर्पकारकाः । तद्विरसादन्नजन्यामदोषः पाण्डुशोभविसर्परोगकारकाः । तद्विकारः आमाशयं प्राप्य सिरारन्ध्रादूर्ध्वमार्गमवगम्य हृद्गतः पवनगतिविकारकारकत्वात् तद्व्याप्यसिराविकारकारकत्वात् तद्गतरक्तप्रदूषणात् तद्व्याप्य स्थितस्सन् पाण्डुरूपं लभते । रक्तविकारे सति शोभो भवति मांसविकारकारकत्वात् विसर्पो भवति । तद्गताममेव पित्तं भवति । तद्रोगस्थानस्थितत्वात् विकारप्रदो भवति । तस्य विषरूपत्वात् धातवः प्रदूष्यन्ते । तज्जन्यलक्षणानि तत्र तत्र प्रकाश्यन्ते । तदामरूपत्वात्पित्तं हृदयस्थितामपित्तमारं सिरारन्ध्रमार्गमापूर्य पक्वाशये स्रावितत्वात् तत्पक्वसारस्यैव मूत्रत्वात् हृत्कमलं प्रविश्य तत्रैव स्थितं हृदि स्पन्दनं करोति । द्विसिरावृतपद्माधारजिह्वाप्रवेशनात्पित्तस्य तत्सिरारन्ध्रप्रवेशनात् जिह्वायामरुचिर्दृश्यते । हृदयस्थितामपित्तसारं सिरारन्ध्रभागमापूर्य पक्वाशये स्रावितत्वात् तत्पक्वसारस्यैव मूत्रत्वात् पाचकपित्ताभावो भासते । तद्धातुप्रवेशनमपि तदात्मत्वेन तत्पूर्ववर्णं विहाय पीतवर्णं भासते । तत्पश्चाच्छतसिरारन्ध्रधमनीं सम्पूर्य अक्षिपद्मं प्रविशति । तत्र पीतत्वं प्रतीयते । शतसिरारन्ध्रधमनीषु पित्तसारप्रवेशनात् तच्छाखाङ्गुलीषु कृष्णारुणकनकपीतदत्वेन तत्पूर्ववर्णं विहाय पीतवर्णं भासते । तत्रस्थरक्तं बहुवर्णं भासते । नाभ्यावृत्तचक्राधारकुण्डल्याधारभूतानीलात्मकनाभ्यावृत्तपद्महृद्गतामपित्तसारः नाभ्यावृत्तचक्राधारत्रिंशत्सिराभ्यन्तरमार्गेषु प्रविशन् तावद्विकारान् जनयतीत्याह—भ्रमेति ।

**भ्रमवमिपिपासाछर्दितृष्णामूर्छान्तर्विदाहाङ्गस्पन्दनारुचिपाण्डुता पित्तपाण्डुशोभलक्षणम् । पादजानुजङ्घोरुकटिपृष्ठबीजपार्श्वाति व्यथातिसाररूक्षतातिशीतसर्वाङ्गस्पन्दनं पवनशोभपाण्डुलक्षणम् ॥ २९ ॥**

वातपाण्डुलक्षणान्युच्यन्ते—पादेति ।

अवर्णादिभूतपादपद्मस्य चतुस्त्रिंशत्सिरावृतालवालं तदामपित्तातिसारं शिरःकमलादागतामृतनिरोधनादामपित्तातिसारप्रदर्शनात् शोभपाण्डुविसर्पामय-चिह्नज्ञापकं भवति । विरसादनविकारवत्पवनो रसासृग्धातुगतश्चेत् पाण्डु-रूपविकारं भजते । स एव पवनो मांसधातुगतश्चेत् श्वयथुर्भवति । स एव धातुगतश्चेत् विसर्पामयो जायते । यस्य पादे विकारो जायते तत्प्रदेशस्थावर्णोच्चारणं स्वग्रोच्चारणवदश्राव्यम् । तत्प्रदेशे श्वयथुदर्शनं वा पाण्डुशोभविसर्पामया वा ज्ञातव्याः ।

अवर्णस्थानभूतजानुपद्माधारकं चतुस्त्रिंशत्सिरावृतजानुपद्मालवालं श्वासो-च्छ्वासाभ्यां शिरःकमलस्थामृतोपहरणमार्गे रसविरसजन्यामपित्तसारसंस्कारं तत्सिरामार्गगतपवनविवृत्या पूर्ववत्पाण्डुशोभविसर्पामयाः । रसासृग्धातु-दूषणात्पाण्डुत्वम् । मांसधातुदूषणाच्छ्वयथुदर्शनम् । मेदोधातुदूषणाद्विसर्प-रोगाः प्रादुर्भवतीत्यर्थः ।

ये तद्वर्णाधारतत्तद्देशीयपद्मावृतसिरामार्गगतपवनप्रचारणाभावकार्य-जनकपाण्डुशोभविसर्पामयाः पूर्ववद्धातून्दूषयन्ति अचां वर्णानामुच्चारणसकल-सामग्र्यां सत्यां अश्राव्यत्वं, ते पवनप्रकोपजाता इति ज्ञातुं शक्यत्वादेव पित्तप्रदेशकमलाधारशिरःकमलस्थ मृतप्रवाहवशात् तद्विरुद्धरसजन्यामपित्तसार-

संयोगकार्यं सिराणामेव तद्रोगलक्षणज्ञानज्ञापकत्वात् । यावत्कालं यावत्सिरा-संस्पर्शनं तत्तलक्षणलक्षितरोगाभावस्य तत्तन्निदानज्ञापकत्वात् । पृष्ठदेशमारभ्य बीजपार्श्वमेढ्राधःप्रदेशपद्ममारभ्य कचटतपवर्गाणां तत्तद्बीजजनकपवनादेव एतदधिष्ठितपद्मानि पञ्चदशसङ्ख्याकानि पित्तप्रकोपविकारभावकार्यकारकपित्ता-धारकपद्मानि । पित्तप्रकोपमार्ग्यां सत्यां तत्तद्वर्णविकारज्ञापकलक्षणलक्षितानि तत्तन्निदानज्ञापकानि । ओष्ठप्रदेशपर्यन्तं पञ्चदशाधारभूतपद्मस्थानाधि-ष्ठितपित्त तत्तलक्षणानि तत्रैवाविर्भूतानीत्यर्थः ।

इतःपरं कफपाण्डुशोभविसर्पामयचिन्हानि प्रकाश्यन्ते—श्वासेति ।

श्वासश्रामनासाक्षि[1]पक्ष्मकर्णकपोलदन्तार्ति[2] पीनसशिरस्तोदनं पाण्डुशोभवि[3]सर्पामयलक्षणम् ॥ ३० ॥

कफप्रदेशो हृदि आमपित्तातिसारस्य विंशत्सिरावृतहृत्कमलस्थितत्वात् तत्सिरागतपवनविगत्या श्वासभ्रमौ भवेताम् । अक्षिपक्ष्मकर्णकपोलदन्तानां मलाधिवयं वेदनातिप्रतीतत्वात् । एतल्लक्षणानि कफप्रकोपजन्यामयरूप-पाण्डुशोभविसर्पामयलक्षणानि तत्तन्निदानेन ज्ञाप्यन्ते ।

ननु पवनपित्तकफप्रकोपेन पवनपित्तकफरोगा इति प्रतिपाद्यते । तच्चिन्त्यम् । रसत्रिरसान्नादनं वा शुद्धरसवद्द्रव्याधिक्यान्नादनं वा तदाशयस्थपवनवेग-

---

[1] श्वासकामाक्षि—A & B [2] दन्तातिमिर—A & B

[3] विसर्प्यामयलक्षणम्— B

निरोधनं वा रोगहेतुकमिति वक्तव्यम् । तथा सति सर्वशरीरसंचरितपवनप्रकोपा: विरसविषसंपर्कदोषजा: तत्पवनस्य शरीरव्याप्यसंचारकर्मगुणवद्द्रव्यत्वात् । तद्विरसविषसंपर्कवशात् पवनप्रकोपो भवतु । कफपित्तयो: पङ्गुत्वादेव तयोर्विरसविषसंसर्गस्य वक्तुमशक्यत्वात् । तद्वत् अयं कफरोग:, अयं पित्तरोग: इति कथं ज्ञायत इत्यस्वरसादाह—बाह्येति ।

**बाह्यविषग्रस्तवद्धातुदूषका:**[1] ।। ३१ ।।

सर्पादिना दष्टस्य विषग्रस्तस्य दष्टत्वात् । तयो: पङ्गुत्वादेव तद्विषसंसर्गाभावेऽपि सर्वशरीरव्याप्यपवनवच्छरीरस्य पित्तकफयो: शरीरान्त:पातित्वेन विषसंस्पृष्टपवनसंसर्गवशात् दोषत्रयप्रकोपो भविष्यति । तद्वदत्रापि पवनव्याप्यविषरसदुष्टपवनसंयोगस्य तयोर्विद्यमानत्वात् अयं पित्तदोष अयं कफदोष इति वक्तुं शक्यते । तर्हि रोगमात्रस्य पवनप्रकोपजन्यत्वात् सर्वरोगाणां पवनप्रकोपाधीनत्वात् सर्वे रोगा: पवनजन्या एव स्यु: । तस्मात्कफपित्तयो: पृथक्तयाऽवच्छेदकतासंभवात् तथा सूत्रस्थाने प्रतिपादितं—

विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् ।
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधे: प्राधान्यमादिशेत् ॥

एतद्वचनानुसारेण पवनस्यैव सर्वरोगप्राधान्यं प्रतीतमिति चेत् न । तत्सर्वशरीरव्याप्यत्वेऽपि धातुपोषकं न भवति । मन्दानिलसन्धुक्षणकर्मगुणवद्द्रव्यत्वात् । अनलमन्दत्वनिवर्तकसन्धुक्षणगुणवद्द्रव्यस्य धातुपोषकत्वाभावात् । पित्तकलाया एव जठरानलत्वात् पित्तप्रकोपे सति अनलो मन्दो

[1] A. B. कोशयोरेतन्न दृश्यते

भवति । तेन कफप्रकोप एव स्यात् । पित्तकफप्रकोपो यावच्छरीरनाशकः सिरामार्गगतधातुपोषकपवनमार्गनिरोधकद्रव्यत्वात् । व्याध्यवच्छेदकं शरीरविनाशकत्वं पित्तकफव्यतिरेकेण शरीरनाशकत्वाभावात् । वायोस्तु तत्संसर्गद्वारा रोगहेतुकत्वप्रतिपादनम् । तस्मान्मुख्यत्वेन प्राधान्यं पित्तस्यापि संभवतीत्यर्थः । पवनस्य व्याधेः प्राधान्यप्रतिपादनं सर्वशरीरव्यापकपवनमन्तरेण रोगकार्यहेतुकत्वं वक्तुं न शक्यत एवेति तात्पर्यम् ।

ननु पाण्डुशोफविसर्परोगाः तत्तद्भिन्नज्ञानविषयकसामग्रीजन्याः । नत्वेकपदार्थज्ञानग्राहकसामग्री बहुपदार्थग्राहिका भवति । बहुपदार्थविषयकज्ञानं नैकपदार्थविषयकज्ञानग्राहकसामग्रीजन्यं एकपदार्थविषयकज्ञानग्राहकसाम्ग्रीजन्यत्वात् । तथ हि घटेन्द्रियविषयकसामग्र्यां सत्यां घटविषयकज्ञानं जायते पटपदार्थविषयकज्ञानं नोदेति । तद्वदेवात्रापि । एकरोगजनकसामग्री कथं रोगत्रयप्रतिपादककार्यजनकसामग्री बहुकार्यज्ञानग्राहिकाया अदृष्टत्वात् । अन्यथा एकपदार्थग्राहकसामग्र्यां सत्यां सर्वपदार्थविषयकज्ञानोत्पत्तिरेव स्यादित्यस्वरसादाह—वातेति ।

**वातपित्तरसविरसद्रव्यसंसर्ग[1]जातवातगतिरोधनाद्रमासृग्धातु-विदूषणात्त्वक्पालित्यं पाण्डुरोगहेतुकम् ॥ ३२ ॥**

अस्यार्थः—वातपित्तप्रकोपरोगाः रसविरसद्रव्यसंस्कारजाताः, तेन पवनगतिरोधनद्वारा रसासृग्धातुं विदूष्य त्वक्पालित्यं यत्र दृश्यते तत्र पाण्डुरोगोऽस्तीति निदानं ज्ञातव्यम् । स एव पाण्डुरोग इत्यर्थः ।

---

[1] जातसिरागतपवनातिरोधनाद्—A & B.

ननु वातपित्तप्रकोपसामग्र्या वातप्रकोपो जायते। पित्तप्रकोपसामग्र्या पित्तरोगो जायते। पाण्डुरागज्ञापकत्वक्पालित्यं कथं स्यादित्यस्वरसादाह— हृदिति।

**हृदि स्थितामपित्तविषसारं पादपद्मशोषकं अवर्णबोधक-चतुस्त्रिंशत्सिरासंसर्गवशादमृतप्रवाहरोधनात्पवनजन्यामयाः प्रवर्धन्ते ॥ ३३ ॥**

रसविरसद्रव्यादनजातामाशयव्यापकपवनविगत्या आमपित्तविषसारः अवर्णोद्बोधकतत्पादपद्मपोषकसिरारन्ध्रमार्गगतामृतप्रवाहं निरुध्य वातविकार-जन्यपाण्डुरोगः हृदिस्थितामपित्तसारः परंपराहेतुर्भवतीत्यर्थः। स एव वातोदरस्यापि हेतुर्भवति। वातपित्तपाण्डुरोगस्यापि परंपरया हेतुर्भवति। अनिलजन्यवातामयस्यापि हेतुर्भवति। अत एव उदरामयनिरूपणानन्तरं पाण्डुशोफविसर्पामयानामवसर इति प्रतिपादितम्। एतत्प्रतिपादितामयानां जनकीभूतामपित्तरसविषद्रव्यस्यैकत्वात्। एककारणजन्यस्य नानाकार्यप्रतीतिः उपाधिभेदाद्भवति। सुवर्णस्यैकत्वेऽपि तज्जन्यकार्यं तत्तद्रूपभेदेन बहुविधं प्रतीयते, तत्र कारणबाहुल्यस्य दृष्टत्वात्।

ननु अयं वातपाण्डुरोगः, अयं पित्तपाण्डुरोगः, अयं कफपाण्डुरोगः इति तादृशप्रतीतेर्विद्यमानत्वात् तत्कार्यहेतुभूतार्थाः दोषा एव भवेयुः। विरसजन्यामपित्तविषरूपद्रव्यस्य विरसजनकत्वात् तत्पाण्डुशोफविसर्पामयानां तत्तज्जनकीभूता दोषा एव हेतवो भवन्तीत्यस्वरसादाह—अमृतेति।

**अमृतप्रवाहालवालोपजीव्यावर्णोद्बोधक सरन्ध्रकाभ्यन्तरधर-षट्सिरामपित्तविषसारग्रसनं पवनप्रकोपहेतुकम् ॥३४॥**

शिरःकमलस्थामृताहरणयोग्यश्वासोच्छ्वासानिलाभ्यामाहृततद्वर्णबोधकारिकार्योत्पादकतत्पद्मान्येव आलवालानि तेष्वमृतपूरणं कर्तुं सरन्ध्रकाभ्यन्तरधरषट्सिरा एव हेतुभूता भवन्तीत्यर्थः ।

ननु सिरामार्गगतामृतप्रवाहप्रतिबन्धकजन्यामयकारणं आमपित्तविषसारं भवितुमर्हति तत्सिरासंसर्गसंस्कारजातरोगहेतुकत्वात्, हेतुत्वप्रसंगादित्यस्वरसादाह—सिरे इति ।

**सिरामार्गगतपवनमांसधात्वनुसृतजानुजङ्घोरुबीजपार्श्वपद्मगत इ, उ, ऋ, ए, ओ, ऐ वर्णोद्बोधकसरन्ध्रकाभ्यन्तर-धरसिरामार्गगतपवनगतिनिरोधानादनिलप्रकोपो भवति ॥**

आमपित्तरससारं जानुजङ्घोरुबीजपार्श्वस्थितपद्माधारकसिरामार्गसंस्पर्शनान्मांसधातुदूषणात् इवर्णबोधकसिरास्पर्शनं पवनगतिरोधनं जानुपद्मद्वयहेतुकं उवर्णबोधकसिरासंस्पर्शनं पवनगतिरोधकारकं जङ्घोरुपद्मद्वयहेतुकं ऋवर्णबोधकसिरासंस्पर्शनं पवनगतिनिरोधनवत्सिराभ्य उत्पन्नं ज्ञानं सिरामार्गगतपवनगतिजन्यविस्वरोद्बोधकहेतुको भवति । यावद्रोगजनकसामग्री तत्तद्रोगनिदानहेतुभूतविस्वरोद्बोधककार्यकारिणी भवति । उदरपाण्डुशोफविसर्पकुष्ठरक्तवातपवनकार्याणां एकसामग्रीजन्यत्वात् तत्सिरागतपवनकार्यभेदादेव तद्रोगभेदं जनयतीत्यर्थः । तत्तद्रोगनिदानं तत्तत्स्थस्वरविशेषावर्णात्मकपदोच्चारणं तत्तद्व्याधिविज्ञानहेतुकं भवतीत्यर्थः ।

ननु पवनविकारा बहवस्सन्ति । तथाहि नेत्रवायुः, कर्णवायुः, शिरोवायुः, पक्षाघातवायुः, धनुर्वायुः, अर्दितवायुः, गुल्मवायुः, प्लीहवायुः कटिवायुः, इति । तत्तल्लक्षणलक्षितानि तत्तदङ्गज्ञापकान्यपि बहूनि सन्ति । सिरासंचरितपवनगतिविकारभेदात् तत्तदङ्गस्थितानि तत्तद्विकारभूतानि । एक एव पवनस्सन् तत्तदङ्गगतोपाधिभेदात् तत्तन्नामाभिधेयाः तत्तदङ्गोपद्रवकारकाः प्राणघातुकाश्च भवन्तीत्यस्वरसादाह—तदिति ।

**तत्सिरामार्गगतपवनप्रकोपभेदाधिष्ठानोपाधिभेदात्पवन-विकारभेदाः । [1]आमपित्तविषरसविरोधिद्रव्यं भेषजम् ॥ ३६ ॥**

आमपित्तरसविरसजातरोगास्तच्छब्दार्थः । तत्सिरारन्ध्रमार्गेषु अनिल-मिकारो भूत्वा तत्सिरासंसर्गप्रदेशेषु यावत्कारणानुगतपवनगतिवैचित्र्यात् उवर्णबोधकसिरासंस्पर्शनं पवनगतिरोधकारकम् । कटिप्रदेशपद्मश्वयथुहेतुकम् । एवर्णबोधकसिरामार्गसंस्पर्शनं पवनगतिरोधकारकम् । बीजपद्मश्वयथुहेतुकम् । पैवर्णोद्बोधकसिरामार्गगतपवनगतिरोधनं तत्पार्श्वश्वयथुहेतुकम् । आमपित्त-रससारं बीजपार्श्वश्वयथुहेतुकम्, तद्वर्णबोधकसिरामार्गगतपवनगतिकारक-त्वात् । यन्नैवं तन्नैवं यथा घटः । इत्यनुमानेन अच्स्वराधिष्ठानहेतुभूत तत्तत्पद्माधारकसिरारन्ध्रभागगतपवनगतिः सुस्वरविशिष्टवर्णात्मकपदज्ञानप्रति-पादिका, ज्ञानेच्छाप्रयत्नादिना ताल्वोष्ठपुटव्यापारात्मकबाह्यपवनाहृतसंस्कारो-

---

[1] भेदाः । मांसधातुपोषकद्रव्यं तत्र भेषजम् । आम-इति A.B. कोशा-योरधिकःपाठः.

द्बोधकहेतुभूतत्वात् , यन्नैवं तन्नैवं तथा घटः । तत्तद्व्याधिनिदानज्ञानं तत्तत्साराधीनवर्णात्मकपदज्ञानहेतुकं, अविकारहेतुकसामग्रीजन्यत्वात् , यन्नैवं तन्नैवं यथा घटः । बाह्यपवनाकर्षणजाततात्वोष्ठपुटव्यापारसंस्कारोद्बोधक-वर्णाधारपद्मं विरसद्रव्यादनजन्यपवनप्रकोपहेतुकस्वरबोधकारकं, पवनप्रकोप-लक्षणज्ञानबोधकद्रव्यत्वात् आमपित्तसिरासारं यादृशसिरासंस्पर्शनात् तत्तदङ्ग-जन्यरोग इति । सकलपवनरोगजनकसामग्री आमपित्तसारः, तत्तदङ्गावलम्ब सिरासंस्पर्शनसामग्रीस्वरूपत्वात् । नानारूपघटानां एकमृत्पिण्डमेव कारणम् । तथा आकाशादिवदङ्गजन्योपाधिभेदात् कर्णपवनरोगः नेत्रपवनरोगः शिरः-पवनरोगः इति व्यपदिश्यते ।

ननु आमपित्तसारः उदरपाण्डुशोफविसर्पकुष्ठपवनरोगाणां एकमेव कारणमिति वक्तुं न शक्यते तत्तन्नामभेदेन कार्यभेदस्य दृष्टत्वात् । तत्र कारणभेदोऽस्तीति अवश्यं ज्ञातव्यम् । घटः कलश इव भेदो भवतीति न वक्तव्यम् । तद्धि सर्वे पृथुबुध्नोदराकारत्वेन अयं घट इति घटत्ववति घटत्वप्रकारकत्वं ज्ञातुं शक्यत्वात् । न तद्वदेवात्रापि भविष्यति, अयं शोफरोग इति रोगत्ववति रोगत्वविशिष्टप्रकारकत्वे ज्ञातुं शक्यत्वादिति वाच्यम्, तेषां मृद्विकारव्यक्तीनां जलानयनकार्योपकारकत्वं पृथुबुध्नोदरा-कारव्यक्तीनां व्यक्तिभेदज्ञाने सत्यपि पृथुबुध्नोदराकारस्य एकप्रकारकत्वस्य दृष्टत्वात् । दृष्टान्तेनापि अभेदज्ञानमात्रमिति नानुभूयते । तद्वदत्रापि फलभेदरूपभेदचिकित्साभेदज्ञानानुभवस्य दृष्टत्वात्, इति चेन्न । तद्वदत्रापि कार्यभेदाभावोऽस्ति । तथाहि—आमपित्तसारः उक्तरोगेषु, एक एव हेतुर्भवति । तत्तच्चिकित्साभेदेन तत्तन्नामभेदानुभवः कथमपलापयितुं

शक्यते ! अत्र ब्रूमः—आमपित्तरसप्रसरस्तु उदरपाण्डुशोफविसर्पकुष्ठवातरक्त-वातविकाराणामेक एव हेतुर्भवति । स एक एव कार्यजनकः । सिरामार्गगत-पवनगतिनिरोधनरूपकार्यकारकद्रव्यत्वात् । तत्पवनगतिनिरोधनं एतदामय-हेतुकम् । तत्तु कचिदङ्गभेदेषु रसासृग्दूषणद्वारा त्वक्पालित्यं करोति । स पाण्डुरोग इति व्यवहारमात्रभेद उपलभ्यते । तदेव यदा तत्सिरासंसर्ग-भेदवशात् तत्पवनगतिनिरोधनं मांसधातुशोषकं भवति इतरमांसधातुः पृथुर्भवति । तच्छोफरोग इति व्यवह्रियते । तद्गतिनिरोधनं यदा मेदोधातु-दूषकं भवति स मेदस्सारः बहिःस्फोटरूपेण स्फुरणात् पवनविसर्परोग इति ज्ञानं जायते । स आमसारः मेदोधातून् सन्दूष्य तद्धेतुभूतमांसधातुमावृत्य त्वग्धातुं प्रविश्य बहिस्सर्पति चेत् तत्कुष्ठं भवति । यावत्पवनाधारकसिरा आमपित्तरसासारप्रस्तास्सन्तः यावत्पद्मविकारकार्यकारितत्सिरावर्णविकारं कुर्वन्तीति कुष्ठः, कुत्सिताङ्गविकारं कुर्वन्तीति कुष्ठाः । पादपद्माधारक-सिराहृद्गतामपित्तरससारसंस्कारयुक्तसिरा तद्विषसारं स्रवति । तत्पद्ममापूर्य पादाङ्गुलिभ्यः स्रवति तच्छाखानि शीर्णानि भवन्तीत्यर्थः ।

ननु रसविरसजन्याजीर्णजन्यामयहेतुकत्वे सति मेदोऽस्थिमज्जाधातुगत-सिराधारकपद्माश्रितामपित्तरसविषसारजन्यामयहेतुकत्वादिति व्यतिरेक्यनुमान-प्रमाणेन प्रतिपादितामयानां अजीर्णजन्यामनिवर्तकसामग्र्यतिरिक्तसामग्री-निवर्तकद्रव्यत्वात् इति । तस्माल्लङ्घनतदुपयोगद्रव्याणि निवर्तकानीति आयुर्वेदसूत्रचयं व्याचष्टे । पवनप्रकोपहेतुकविरसाज्जातं रसासृङ्मांसचयप्रदेश-गतं भवति । स्वाद्वम्ललवणरसाधिक्यादनेन अजीर्णे जाते सति पवनप्रकोपो भवति । अत्र वर्णानां आधारभूतपद्माधारकसिरासंसर्गवशात् पवनामयाः

प्रवर्धन्ते । तज्जाकामशोषे सति तन्निवर्तते । तावद्विरसादनादजीर्णादाम-प्रवृद्धौ सत्यां रसासृङ्मांसगतसिरासंस्पर्शनाद्यत्र पवनविकारो जायते स आमपित्तसारः आमाशयं प्रविश्य हृत्कमलप्रवेशनात् विषसंसर्गवत् यावद्रोग-हेतुकं तावद्धात्वन्तर्गतसिरासंस्पर्शनात् तद्धातून्सन्दूष्य रसासृङ्मांसमेदोधातवः दूषितास्सन्तः क्रमात्पाण्डुशोफविसर्पामयाः प्रवर्धन्ते । सुतरां मेदोधातुविकारे सति कुष्ठं भवति । स आमपित्तसारः रसासृङ्मांसधातून्सन्दूष्य मेदोधातु-स्थितत्वात् तावद्धातुसारस्य बहिःप्रदर्शनमेव कुष्ठरोगकारणं भवतीत्यर्थः ।

ननु त्रिसाराधिक्यादनजातरोगास्तु अजीर्णरोगजन्यामया बहवस्सन्ति । तत्कार्यभेदस्य दृष्टत्वात् कारणभेदो वक्तव्यः । आमपित्तसारस्य एकरूपत्वात् शोफपाण्डुविसर्पामयानां धातुदूषककार्यस्य एकत्वात् तत्र वक्तुं शक्यते । तत्कार्यव्यतिरिक्तकुष्ठरोगकार्यस्य भिन्नत्वादित्याशयं मनसि निधाय कुष्ठ-रोगागमहेतुं वर्णयति—पूर्वस्मादिति ।

[1] पूर्वस्माद्द्विगुणं पृथुतया भाति[2] ॥ ३७ ॥

पूर्वधातुभ्यः स्थूलत्वं द्विगुणं प्रतीयते । न च तन्तुवद्धातुसारस्था-वितरोगस्वरूपत्वात् सिराशौण्डिल्यतया पृथुत्वं भासते । आमपित्तसारस्य यावत्सिरासंस्पर्शनं तत्तद्रोगाणां तत्तत्सिरासंस्पर्शनं कारणं भवति । तथा सति कारणवैचित्र्यात् कार्यवैचित्र्यं प्रतीयते । तन्तुगतरूपानुगतरूपानु-

[1] एतत्सूत्रात्प्राक् "पवनप्रकोपहेतुकत्रिरसजातरसासृङ्मांसं भगचयप्रदेशगतं भवति" इति A.B कोशयोरधिकः पाठः. [2] एतत्सूत्रं B कोशे नास्ति.

विचित्ररूपवत्त्वं यावत्तन्तुगतरूपानुसारिवैचित्र्यं तज्जन्यपटवैचित्र्यं करोति । कारणगुणा हि कार्यगुणानारभन्ते यावत्सिरासंस्पर्शनं तावत्सिराधारकपद्मगत-विकारकारकं, तदन्यरोगकार्यहेतुकत्वे सति तद्धेतुकत्वात् यन्नैवं तन्नैवमिति । पाण्डुशोभविसर्पकुष्ठरक्तवातामयानां आमपित्तरूपविषसंसर्गविशिष्टसिराणां नानारुपकार्यजनकत्वं सूच्यते ।

आमपित्तसारस्य एकत्वेऽपि तज्जनकद्रव्याधिक्यं कारणतावच्छेदकं भवतीत्यर्थः ।

ननु सर्वशरीरव्याप्यपवनप्रकोपे सति तत्संचारयोग्यधातुशोषो जायते । शोषणैककार्यकारकरूक्षगुणद्रव्यत्वात् अनन्तावच्छेदकं रूक्षगुणवत्त्वधातुशोषक-कार्यकारकत्वं प्रथमत एव प्रतिपादितम् ।

तत्र रूक्षो लघुश्शीतः खरस्सूक्ष्मश्चलोऽनिलः ॥ इति.

तस्मात्पवनविकारमात्रेण आमपित्तरससारस्य एकदेशस्थितत्वात् सर्व-धातुशोषणं क न शक्यत इत्याशयं मनसि निधाय पवनविकारं प्रतिपादयति—त्रिसहस्रेति ।

त्रिसहस्रसिराहेतुकं मधुरीभूतं ज्वलयति [1] ॥ ३८ ॥

धातुप्रदेशवातपद्माधिष्ठितावर्णोच्चारणसामग्री विस्वरप्रतिपादिका यदि भवेत्तदा पवनप्रकोपकारकमधुरीभूतद्रव्यादनजातपवनविकारकार्यहेतुत्वात् स्वाद्वम्ललवणरसवद्द्रव्यधातुप्रदेशवातपद्माधिष्ठितावर्णोच्चारणसामग्री विस्वर-प्रतिपादिका यदि भवेत्तदा पवनप्रकोपकारकमधुरीभूतद्रव्यादनं पवनरोग-प्रागभावपरिपालनकारकास्तास्सिरास्त्रिसहस्रसंख्याकाः पादपद्माधारकाः ताव-

[1] 'ज्वरति' इति A. कोशे.

त्सिरावच्छरीरं भवति पवनविगत्याधारकसिराणां तत्तद्गतितिरोधानकारकद्रव्यं किं वक्तव्यम्? तत्पवनप्रकोपकारकं भवति। न तावद्धातुशोषकं, किंतु वेदना रोगकार्यं भवतीत्यर्थः।

ननु सर्वद्रव्येषु मधुररसः पवनप्रकोपनिवर्तको भवति। स्थावरजातिस्थितमधुररसः पवनप्रकोपकारकः। जङ्गमादिस्थितमधुररसवद्द्रव्यं पवनप्रकोपहारकम्। तथाऽपि उभयमपि परमधातुपोषकम्। स्थावराणां स्वादुरसः रसासृग्धातुविकारकः। जङ्गमानां स्वादुरसः सर्वधातुपोषको भवतीत्याशयं मनसि निधाय प्रजाजननहेतुं प्रतिपादयति—प्रजेति।

**प्रजोत्पोदकहेतुभूतं भवति ।। ३९ ।।**

जङ्गमानां मांससारः पयोविकारो भवति। तत्सजातीयान्यसारोऽपि सर्वशरीराणां धातुरसस्वादुरेव भवति। तत्स्वादुरसः प्रजाजननकारकः रेतोधातुविकारहारकद्रव्यत्वात्। खेचराणामण्डजस्वादुरसः पवनप्रकोपहारकः। भूचरशरीरजातक्षीरविकारजाताः पवनहरशुक्लधातुपोषका इत्यर्थः। स्थावरद्रव्यनिष्ठमधुररसानामिक्षुकाण्डादिजन्यानां सर्वधातुपोषकत्वं वक्तुमशक्यत्वात्, स्थावररसात्मकत्वात् तन्निष्ठस्वादुरसो गुरुर्भवतीत्यस्वरसादाह—मधुरेति।

**[1] मधुररसादनादसृग्धातुर्भवति ।। ४० ।।**

स्थावरनिष्ठमधुररसादनं जङ्गमशरीराणां रसासृग्धातुप्रवर्धकं इक्षु-

---

[1] मधुरेति सूत्रात्प्राक् "शरीररससारस्सर्वमावहति" इत्यधिकः पाठः A.B. कोशयोः।

काण्डादिद्रव्यजन्यरसवद्द्रव्यत्वात् । रसासृग्धात्वभिवर्धकस्स्थावरनिष्ठस्वादुरसो भवतीत्यर्थः ।

स्थावरनिष्ठाम्लरसस्य प्रयोजनमाह—आम्लेति ।

**आम्लरसादनं मांसधातुप्रदं भवति ॥ ४१ ॥**

स्थावराणां लवणरसस्य प्रयोजनमाह—लवणेति ।

**लवणरसो मेदोधातुप्रदः[1] ॥ ४२ ॥**

स्थावराणां लवणरसः जङ्गमशरीराणां मेदोधातुप्रवर्धको भवतीत्यर्थः ।

ननु स्थावराणां स्वादुरस पवनप्रकोपकारकः । जङ्गमशरीराणां स्वादुरसः पवनप्रकोपहारक इति भेदकथनं कथं वक्तुं शक्यते । तद्वदेव षड्रसानां गुणप्रदानं भेदद्रव्यस्यैव वक्तुं शक्यत्वात् स्थावराणां गुणप्रदानं षड्रसानां तत्तज्जात्यवच्छेदेन भेद एव स्यादित्यस्वरसादाह—आद्येति ।

**आद्यद्विधातुमारं जङ्घापद्महेतुकम् ॥ ४३ ॥**

तिक्तरसाभिवर्धितं मेदोधात्वन्तस्स्थितदशदळपद्मं कण्ठप्रदेशगतम् । सहस्रसिरादागतामृतं तस्य पोषकम् । आद्य इति—स्वादुरसवद्द्रव्यम् । द्वे इति—क्ष्माम्भसोरेकीभूताधिकजातद्रव्यगुणसारं स्वादुरसवद्द्रव्यं तदेव निवर्तकं भवतीति यत् तत्कथं ज्ञातुं शक्यते? शुक्लधातुपोषकस्वादुरसं आद्यद्विधातुरसासृग्धातुद्रूप्यं भवति । जङ्गमद्रव्यनिष्ठस्वादुरसं सर्वधातुपोषकम् । तथा गव्यं पयः गव्यं घृतं रसासृग्धातुविकारानिवर्त्यतद्धातुपोष्यं भवति ।

[1] अस्थिधातु—इति A कोशे

तत्स्वादुरसस्य सर्वशरीरपुष्टिकरत्वात् अनिलनिवर्तकत्वादुरसवद्द्रव्यत्वात् पाद-पद्माधारकजङ्घापद्माधिष्ठिताज्वर्णानां आधारो भूत्वा स एव सुगतिकारकस्सन् तत्तत्पद्मानि तत्तदधिष्ठितवर्णानि च सहस्रारपद्मगतामृतं सहस्रसिराभ्य आहृत्य तत्तद्वर्णाधारकपद्ममाप्लाव्य तत्तद्वर्णानुभवज्ञानद्वारा ऐकारज्ञापकपवनः तस्य पोषको भवति । तिक्तरसाभिवर्धितपित्तदोषः नाभेरधस्स्थितदशदळपद्मं स्वाधारं कृत्वा पवनहृतामृतं दशदळपद्ममाप्लाव्य हलादिवर्णानां श्रोत्रप्रदेशं प्रापयन् तिक्तरसः मांसमेदोधातुपोषको भवतीत्यर्थः ।

ननु अचस्सप्त स्वराः सन्तः सरन्ध्रकाभ्यन्तरधरसिरामार्गेभ्यः श्रोत्र-प्रदेशं प्रसरन्तः स्वराश्श्रूयन्ते । पादपद्ममारभ्य बीजपार्श्वपद्मपर्यन्तं पवन-स्थानमिति । अत एव चलनात्मकं कर्म कुरुते । जङ्घाभ्यां पद्भ्यां धर्मोऽस्मीति शरीरापगमागमौ भवतः । तदेवं चलनात्मकगतागतभेदं पवन एव कुरुते । तेनैव स प्रचरति । बीजपार्श्वपद्ममारभ्य हस्तपद्मपर्यन्तं कचटतपवर्गपञ्चकस्य तत्तत्पद्माधिष्ठितत्वात् । सरन्ध्रकाभ्यन्तरगतपवनस्तु स्वाभिमानपद्मेषु स्थित्वा अचां वर्णानां तत्तद्वर्णसन्ध्युच्चारणार्थं सुपदप्रयोगो-च्चारणार्थं तत्पदसमूहवाक्योच्चारणार्थं स्वाभिप्रेतार्थबोधनार्थं पदवाक्यप्रयोग-व्यतिरेकेण स्वस्यापरस्य बोधयितुमशक्यत्वात् । तस्मादज्भिः साकं हलादयः स्वाभिप्रेतार्थं परेषां विबोधयितुं शक्नुवन्ति । अत एव शब्दशास्त्रे वैयाकरणैः प्रथमत एव प्रतिपादितं—

"वृद्धिरादैच्, अदेङ् गुणः, इको गुणवृद्धी" एतत्सूत्रत्रयस्यार्थे महाभाष्ये सर्वं प्रपञ्चितम् । तत्र यत्प्रतिपादितार्थम् अज्भिः साकं हलादयः

कार्यकारका भवन्ति । पित्तदोषाभिमानकुक्षिस्थिततत्तत्पद्मस्थितवर्गपञ्च-कवर्णानां तत्तत्सिरागतपवनः स्वाभिमानभूताञ्वर्णान् यथाविधि शास्त्रप्रति-पादितार्थान् बोधयितुं स्वरसहितहलादीन् सिरास्यदोषगतिजातशब्दः कर्णयोः प्रयच्छत इति । पित्तप्रदेशपद्मस्थितवर्णान् पवन एव प्रापयतीत्याह—तिक्तेति ।

**तिक्तरसाभिवर्धितं मेदोधातुस्थितदशदलपद्मं कटिप्रदेशगतम् । सहस्रसिरादागतामृतं तस्य तत्पोषकम् । तिक्तरसाधिककफ-प्रदेशामृतं तत्र दोषजन्यम् । पिङ्गलामार्गादागतपवननिरोधनं सुभेषजं सुपोषकम् ॥ ४४ ॥**

तिक्तरसद्रव्यादनसंस्कारजन्यगुणाः तत्तद्विरुद्धादनरसजन्यरोगवशात् स्वस्थोच्चारणाधीनवर्णात्मकपदसमूहवाक्यश्रवणं तत्तत्पद्माधिष्ठितरोगविज्ञान-हेतुकं भवति । तात्वोष्ठव्यापाराधीनवर्णोच्चारणहेतुभूततत्तत्पद्मस्थितरोग-जनकसामग्र्या यावद्धीनवर्णोच्चारणजन्यवर्णाकारं विज्ञाय कफविकारहेतुक-स्वाद्वम्लरसवद्द्रव्याधिक्यादनजन्यकफरोगस्य तन्निवर्तकामृतं पिङ्गलामार्गादागत-पवननिरोधनजन्यामृतं सुभेषजं भवतीत्यर्थः ।

हीनवर्णोच्चारणहेतुकतद्रोगस्य तन्निवर्तकद्रव्याभावेऽपि बहिः पवनरेचनं तत्पूरणं च निवर्तकं भवतीत्याह—बहिरिति ।

**बहिः पवनं रेचयेत् तमेव पूरयेत्[1] ॥ ४५ ॥**

अस्य फलमाह । तस्मादिति—

[1] तत्र सेचयेत्—A. तत्र सेवयेत्—B.

## तस्माच्चिरायुर्भवति [1] ॥ ४६ ॥

ननु एतत्सर्वं न संसृज्य घटते । ताल्वोष्ठपुटव्यापारसामग्र्यां सत्यां वाञ्छितार्थः श्रोत्रप्रदेशगतशब्दजनितवाक्यश्रवणेन तत्पदार्थः वाक्यविषयो भवति । न तत्पद्माधिष्ठितवर्णसिराभिरेव ज्ञाप्यते, गौरवात् । "यद्धि मनसा ध्यायति तद्वाचा वदति, तत्कर्मणा करोति" इति श्रुतिरेवात्र प्रमाज्ञापिका । किं च "अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । उपूपध्मानीयानामोष्ठौ । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः" इत्यादि-वार्तिकवचनानां विद्यमानत्वात् तत्तत्पद्माधिष्ठितवर्णान् श्रोत्रप्रदेशं प्रापयितुं तत्तत्सिराणां तत्सामाग्र्यभावादित्यस्वरसादाह —चन्द्रेति ।

## चन्द्रकलायतमरुत्प्रचोदितपद्मं मुकुलीभवति । सूर्यकलागतपवनाद्विकसति ॥ ४७ ॥

चन्द्रकला ताल्वोष्ठपुटव्यापारसामग्र्यां सत्यां चन्द्रस्वरादागतपवनेन मुकुलीभवति । एतद्वर्णोच्चारकताल्वोष्ठपुटव्यापारसामग्रीजन्यपवनात्सरन्ध्र-काभ्यन्तरधरसिरामार्गे प्रविश्य तत्तत्पद्माधिष्ठितवर्णान्गृहीतुं तत्पद्ममुकुलीभाव एव कारणं भवतीति तत्सर्वं मनसि निधाय तत्तद्व्याधिनिदानं पूर्वस्वराद्वि-कृतस्वराः, तत्पद्माधिष्ठितरोगविज्ञानहेतुत्वात् इत्यत्र प्रमाणं वर्णोच्चारणश्र वणज्ञानानुभव एव । तद्ज्ञानं कीदृशमित्युक्ते अनुभवं पृच्छेत् न तद्बोधयितुं शक्यम् । क्लिष्टोच्चारणं यदा क्रियते तस्य बीजपार्श्वस्थानत्वात् तद्व्यापारजनकपवनस्तत्सिरामार्गे सञ्चरन् कवर्णं गृहीत्वा श्रोत्रप्रदेशं गमयति ।

---

[1] स्थिरायुर्भवेत्— B

तदाऽत्र ' कः ' शब्दो जायते । तत्कर्णविवरं गत्वा आविर्भवति । तेषां वर्णानां कण्ठ एव स्थानं भवति । इचुयशादिवर्णा अपि तालुप्रदेशं गत्वा आविर्भवन्ति । ऌतुलसा अपि दन्तदेशं गत्वा आविर्भवन्तीति परंपरया तत्तत्सजातीया अप्याविर्भूता इत्यर्थः । एवं सूर्यकला सहायं कृत्वा तत्तत्पद्मं विकासयन्ती वर्णान् जनयति । एवं चन्द्रकला च सूर्यकला च तत्तत्पद्मानां निमीलनोन्मीलनं च करोति । यावदर्थं जानाति तदर्थमिच्छति तावदर्थवदुच्चारितशब्दो विषयो भवतीत्येवं मनसि निधाय ताल्वोष्ठपुटव्यापारं करोति । तेन वायुरुत्पन्नस्सन् तज्जातीयसिरागतपवनं सम्प्राप्य तद्वाञ्छितार्थ-प्रतिपादकवर्णसमूहं पदमुद्दिश्य ताल्वोष्ठपुटव्यापारसामग्र्या च शब्द उत्पद्यत एवेत्यर्थः ।

ननु भेरीदण्डसंयोगेन यावत्पवनानुगतशब्दश्श्रूयते । तत्र वायो-स्सिरादिव्यापारं विना स वायुश्शब्दबोधको भवति । तद्वदेवात्रापि स्यादिति चेत् न । तस्यापि शरीरमस्ति चर्मपुटमावृत्य आकाशाभ्यन्तरस्सन् भेरी-शरीरमिति व्यपदिश्यते । तत्र सिरागतपवनव्यापारं विना शब्दोत्पत्तिः कथं स्यात् । तद्वदेव वर्णात्मकपदं श्रूयते । तत्र भेरीशब्दो जात इति कथमनुभूयत इति तादृशार्थध्वन्यात्मकशब्दमात्रमेव श्रूयते । स वर्णात्मकः चैतन्याधिष्ठितसिरादिव्यापारं विना तस्य असंभावितत्वात् । ध्वन्यात्मक-शब्दत्वात् अस्यास्सामग्र्या न तत्र तात्पर्यम् ।

ननु वर्णानां चैतन्याधिष्ठितश्रुतिरवत्वात् ताल्वोष्ठपुटव्यापारस्य समानत्वात् वर्णात्मकशब्दः कथं स स्यादिति चेत् मनुष्याणामिव पश्वादीनां अविरळकण्ठाभावत्वेन वर्णात्मकशब्दो न श्रूयते नार्थबोधोऽप्यस्ति,

हितार्थमियं प्रवृत्तिरस्यास्तीति । अविरळकण्ठत्वमेवात्र प्रयोजकम् । तत्र तृणादिकमाहारो भवति ।

ननु अविरळकण्ठत्वमेव वर्णात्मकशब्दनिष्पत्तौ प्रयोजकम्, तर्हि अविरळकण्ठत्वं खेचराणामप्यस्ति तत्र वर्णात्मकशब्दनिष्पत्तिः कथं न स्यात ? मनुष्याणामिव अविरळकण्ठत्वस्य खेचराणामपि समानधर्मत्वात् । वर्णात्मकशब्दः कथं नोपलभ्यते तेषां ? यत्किंचिच्छब्दाः श्रूयन्ते । मनुष्याणां तद्विषयकज्ञानाभावेऽपि तत्तज्जातीयानां तदुच्चारितशब्दविषयकज्ञानमस्ति । अन्यथा तेषां प्रवृत्तिरेव न स्यात् । तदन्यथानुपपत्त्या शब्दविषयकज्ञानं कल्प्यते । अविरळकण्ठवज्जातिमज्जन्तूच्चारितशब्दाः वर्णात्मकाः, तत्तज्जातिविषयकजन्तूच्चारितशब्दज्ञानप्रवृत्तेरुपलभ्यमानत्वात् मदुच्चारितशब्दविषयकज्ञानानुसरितप्रवृत्तिविषयवत् । तस्मादविरळकण्ठवज्जातिविशिष्टजन्तूनां तत्तज्जातिविधिविहितविषयकज्ञानानुभवानुसरितप्रवृत्तेर्दृष्टत्वात् इत्याशयं मनसि निधायाह—इडेति ।

**इडापिङ्गलाभ्यां प्रवहति ॥ ४८ ॥**

इडापिङ्गलापवनवज्जातिविशिष्टजन्तूच्चारितशब्दाः वर्णात्मकाः, चन्द्रसूर्यकलाप्रस्ततत्तत्पद्माधिष्ठितवर्णानां निमीलनोन्मीलनसंस्कारजातशब्दात्मकत्वात् । पश्वादीनां न तथा, एकदा उभयस्वरात्मकत्वात् । अत एव तृणादिद्रव्यमपाचितमन्नमत्ति पशुः, उभयानिलानलात्मकत्वात् । खेचराणामपि तथैव । जलचराणामपि अपाचितान्नादनं इडापिङ्गलागतानिलाभ्यां पाचकपित्तं प्रवहति । मनुष्यान्यजातीनां युगभेदेन चन्द्रसूर्यकलाभ्यां तत्तद्वर्णात्मकाधिष्ठितानि संप्राप्य खेचरपश्वाद्युच्चारितशब्दा वर्णात्मकाः, पुराणादौ तथा

प्रतिपादितत्वात् । अन्ययुगादौ प्राणादिपञ्चवायूनां अस्थिगतत्वात् तत्काले शब्दा वर्णात्मका भवन्ति । सर्वशरीराणां सात्मकत्वादेव तथा वक्तुं शक्यते । जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् इत्यनुमानेन प्रमाणेन यानि यानि शरीराणि सात्मकानि तानि सर्वाणि प्राणात्मकान्येव । कलियुग-कालग्रस्तशरीरादिगतप्राणादिवायवः रसासृग्धातुगताः । तदन्ययुगकालग्रस्त-शरीराधिष्ठितप्राणादिवायवः अस्थिगता भवन्ति । एतद्युगकालग्रस्तानि शरीराणि अधर्मात्मकानीत्यत्र अधर्मत्वमुपाधिः ।

ननु शरीरत्वावच्छेदेन सर्वशरीराणां प्राणादिमत्त्वादेव शरीरत्वा-वच्छेदकस्य स्थावराणामपि सत्त्वात् तेषामपि शब्दोच्चारणत्वप्रसंग इत्यस्वरसा-दाह—षडिति ।

## षट्कमलानामादिभूतं मूलाधारकम् [1] ।। ४९ ।।

षट्कमलाधिष्ठितशरीरत्वं येषामस्ति तेषां शब्दोच्चारणेऽपि सामर्थ्य-मस्ति । तथा न स्थावराणां पादपद्मावच्छेदकं भवति । जङ्गमशरीराणां शिरःकमलस्थामृतसारवत्पोषकत्वस्य तेषामवच्छेदकत्वात् । तत्सहस्रार-पद्माधिष्ठितशीर्षवत्त्वात् शिरःकमलस्थामृतवत्त्वं शरीरपोषकम् । तत्स्थावर-शरीराः पादपा इति । तस्मात्तेषां मूलाधारपद्मं षट्कमलात्मकं न भवति । सर्वेषां शरीरत्वावच्छेदकत्वस्य साधारणत्वेऽपि येषां शरीराणां मूलाधारपद्मं षट्कमलात्मकं तेषां शरीराणां शब्दोच्चारणत्वस्य योग्यत्वादित्यर्थः ।

ननु स्थावराणामपि मूलाधारपद्मं दशदळात्मकं तिक्तोषणरसात्मकं तदेव । तदेव शिरःकमलस्थं सन्मांसमेदोधात्वात्मकम् । तत्र मनुष्याणां

---

[1] नैतत् B. कोशे दृश्यते.

सहस्रारपद्मं तत्तच्छिरसि प्रतिभाति । स्थावराणामपि अग्रशाखं तदेव । शिखिशिख मूलात्मकत्वात् शाखाग्राणि प्रवर्तन्ते । षट्कमलागमादिभूत-मूलाधारकत्वलक्षणस्य स्थावराणामपि सत्त्वादित्यस्वरसादाह— तिक्तेति ।

तिक्तोषणरसप्रदानजन्यमेदोमज्जाधारकदशदलपद्मं सहस्रसिरादागतामृतं तत्र सिञ्चति[1] ॥ ५० ॥

शाखाङ्कुरादयः तिक्तोषणरसप्राधान्येन जायन्ते । अङ्कुरप्रादुर्भावसमये तिक्तरसो वा ऊषणरसो वा यावदुचितसारः प्रतिभाति, तत्तदङ्कुरस्य मेदोमज्जाधारकत्वात् अङ्कुरादिरमेव दशदळपद्मं, मूलाधारकं च तदेव भवति, उभयोरपि कदाचिद्बीजावापकत्वस्य दृश्यत्वादित्यर्थः ।

ननु मनुष्याणामिव कुण्डलिनीशक्तेरभावात् इडापिङ्गलानुसरितत्वात् श्वासोच्छ्वासाभावेन तद्वशादेव अमृतावसेचनं शाखिशरीरस्य अयोग्यमित्यस्वरसादाह—इडेति ।

इडापिङ्गलागतमृतं सिञ्चति[2] ॥ ५१ ॥

तत्पत्रचलनमेव शाखिनां श्वासोच्छ्वासौ भवतः । शाखाग्रं दशदळ-पद्मात्मकं सुरूपत्वात् । सुलावण्यात्मकत्वात् । चक्षुरिन्द्रियविषयसुख-ज्ञानानुभवरूपविषयकत्वात् । तच्छाखाग्रवर्तिदशदळपद्मं चक्षुरिन्द्रियविषयकं सुखानुभवविषयस्वरूपत्वात शाखिनां तत्पद्ममेव पोषकं भवतीत्यर्थः ।

ननु शाखाग्राणि सुरूपाणि सुलावण्यानि सुकुमाराणि, चक्षुःप्रतीति-विषयसुखानुभवविषयहेतुभूतत्वात् इति यदुक्तं तच्चिन्त्यं, सर्वपदार्थानां

[1] नैतत् B. कोशे दृश्यते. [2] नैतत् A & B कोशयोर्दृश्येते

चाक्षुषप्रतीतिविषयत्वादेव सर्वपदार्थानामपि सुखानुभवविषयत्वस्य वक्तुम-शक्यत्वादित्यस्वरसादाह—सर्वार्थानामिति ।

**सर्वार्थानां हेतुभूतानां सर्वसुखसाधकम्** ॥ ५२ ॥

सर्वार्थानामिति—

"समिधो यजति । वसन्तमेवर्तूनामवरुन्धे । तनूनपातं यजति ।" इत्यनुवाकस्य स्वर्गसाधकयागानुष्ठानहेतुभूतत्वात् धर्मविषयप्रतिपादकत्वमित्युक्तम् । फलितार्थस्य आदिरूपेण फलविषयकार्थप्रतिपादकत्वात् पदार्थरूप-पुरुषार्थप्रापकद्रव्यत्वात् "पुरुषार्थोऽयमिति फलितपुष्पफलानां हेतुभूतत्वात् कामनःविषयकत्वादेव तृतीयपुरुषार्थस्य हेतुभूतत्वात् सर्वशास्त्राभिज्ञस्य धर्मज्ञस्य हस्तकौशल्यादिज्ञानवतः सर्वदा परोपकारशीलस्य पण्डितस्य विप्रवर्गभेषजस्य आयुर्वेदार्थज्ञानद्वारा चिकित्सकस्य मोक्षप्राप्तिहेतुभूतत्वात् चिकित्सितं मोक्षहेतुर्भवति । तस्य श्रुतिरेव प्रमाणप्रतिपादिका । तथा हि—

"अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥
यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
यत्रौषधीस्समग्मत राजानस्समिताविव ।
विप्रस्स उच्यते भिषग्रक्षोहामीवचातनः" ॥

ऋग्वेद. १०, ९७, सू.

इति श्रुतेर्विद्यमानत्वात् चिकित्सितस्य विप्रस्यैव मोक्षप्राप्तिहेतु-भूतार्थत्वात् तच्छास्त्राणां चतुर्विधपुरुषार्थप्रापकत्वस्य वक्तुं शक्यत्वा-दित्यर्थः ।

"यज्ञस्य शिरोऽच्छिद्यत। ते देवावश्विनाब्रुवन् भिषजौ वै स्थ इमं यज्ञस्य शिर प्रतिधत्तम्" इत्यनुवाकस्य तात्पर्यं शस्त्रधारणं ब्राह्मणानामयोग्यं, इयं शस्त्रचिकित्सा यावद्ब्राह्मणानामयोग्येति, चिकित्साभेदे निषेधितम्। तस्मात् शस्त्रचिकित्सा न कार्या। शूद्रैरेव कारयितव्या। तत्रापि तत्तच्छास्त्रप्रतिपादितसिरादिभेदं विज्ञाय शूद्रैरेव कारयितव्या इत्यस्य य उपदेष्टा स एव कर्ता। अस्यापि सैव श्रुतिः प्रतिपादिका—"तयोस्त्रेधा भैषज्यं विन्यदधुरग्नौ तृतीयं अप्सु तृतीयं ब्राह्मणे तृतीयम्। तस्मादुदपात्र-मुपनिधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्यात्" इति विधेः विद्यमान-त्वात्। एवमागमशास्त्रे प्रतिपादितम्—

"दीर्घं तीव्रामयानां भिषगिव कौशलं नो धातुमायातु शौरिः।" आपद्ग्रस्तानां त्रातुं चिकित्सा कार्येत्यर्थः। अत एव सर्वसुखसाधक-मित्युक्तम्।

ननु यदुद्दिश्य प्रवृत्तिः ईश्वरप्रीत्यर्थमुपकारिका भवति सा सर्वफलप्रदायिकेति वक्तुं शक्यते। अत्र तु चिकित्साकार्यप्रतिपादकोप-कारकद्रव्यत्वादेव एतेषां शाखिनां चतुर्विधपुरुषार्थफलप्रदानप्रतिपादकत्वं कथं स्यादित्यस्वरसादाह—प्रकृतीति।

प्रकृतिपुरुषयोरैक्यं भवति ॥ ५३ ॥

सर्वदा प्रकृतिपुरुषौ फलोपकारकौ। सर्वेषां प्राणदौ भवतः। तथा च श्रुतिः—"अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय।" इति श्रुतिरेवात्र प्रमाणम्। तस्माद्यदुद्दिश्य प्रवृत्तिः

ईश्वरप्रीत्यर्थं पुरुषार्थोपकारिका जगद्रक्षणार्थं तावुभौ स्थावरशरीराण्यभूताम् । जङ्गमशरीराभिवृद्धिं कुरुतः । तावुभौ अभिवर्धेते । स्थावरमूलसार-मूलत्वक्सारकन्दसारसारत्वक्सारक्षीरसारपुष्पसारफलसारनिर्यवससारक्षीरसारकाः अस्तिसारमज्जासारकाः । काण्डसारकाः । सर्वे ते पञ्चदशसाराः स्थावरशरीराः । तत्तद्द्रव्याधीनां तत्तत्सारभेदा निवर्तका भवेयुरित्यर्थः ।

ननु सर्वशरीराणि पाञ्चभौतिकानि । शब्दस्पर्शरूपरसगन्धानां आकारादिगुणत्वात् तद्गुणव्यतिरेकेण तेषामवस्थानस्य वक्तुमशक्यत्वात् तद्गुणिनमन्तरेण तद्गुणाभावस्य सत्त्वात् एतत्साराणां व्याधिनिवर्तकत्वं कथं भवेदित्यस्वरसादाह—पार्थिवेति ।

पार्थिवावयवाधिक्योपलब्धिर्यत्र तत्सारकं पार्थिवगुणम्[1] ॥ ५४ ॥

आम्लरसस्सुगन्धश्चोभयमपि पृथिवीगुणो भवति । गन्धवत्त्वं पृथिव्या अवच्छेदकत्वम् । आम्लरसवत्त्वं गन्धवत्त्वं च युगपदेवोपलभ्यते । तत्त-दङ्गमेव तत्तद्व्याधिनिवर्तकं भवति । तथा हि—पुष्पेषु अधिकगन्धोपलब्धिः । तत्पुष्पसारद्रव्यमिति विज्ञेयम् । ननु अर्कवृक्षस्य क्षीरसारद्रव्यत्वात् तावन्मात्रमेव प्रयोजनं न भवति । तत्पत्रस्यापवननिवर्तकत्वम् । तन्मूलत्व-चोऽपि पवनदोषप्रकोपानिवर्तकत्वम् । तत्पुष्पाणि क्रिमिरोगनिवर्तकानि । इत्यस्य वृक्षस्य सारत्रयमुपलभ्यते । तत्र मूलसारपत्रसारयोस्सारवत्त्वेनोप-लभ्यमानत्वात् तत्सारौ अनुभवैकवेद्यौ भवतः । तत्क्षीरं यावदङ्गेनोपलभ्यते

---

[1] नैत A & B कोशयोरस्ति.

तत्प्रयोजनकार्यस्य क्षीरद्रव्यत्वादेव तत्पत्रसारो मूलसार इति व्यपदेशमात्रम् । तत्प्राधान्येन वक्तुमशक्यत्वात् इत्यस्वरसादाह—एकेति ।

एकदोषनिवर्तकं यावत्तदेकसारकम् ॥ ५५ ॥

तत्तदङ्गेषु भिन्नगन्धाभावत्वात् भिन्नरसाभावत्वाच्च अयमर्कवृक्षः पवनप्रकोपनिवर्तकः तिक्तरसवद्द्रव्यत्वात् । इत्यपुमानप्रमाणं वक्तव्यम् । तद्वदेव व्याप्तिर्वक्तव्या । तथा हि—यावत्तिक्तरसवद्द्रव्यं तत्पवनप्रकोप-निवर्तकम्, पित्तनिवर्तकस्वादुरसवद्द्रव्यस्य पवनप्रकोपनिवर्तकद्रव्यत्वात् । एवमाकारा व्याप्तिः । तयोर्व्याप्तौ गृहीतायां सत्यां विषमव्याप्तिरेव स्यादिति नाशङ्कनीयम् । यावत्पित्तनिवर्तकस्य पवनप्रकोपनिवर्तकत्वेन यावत्पित्त-निवर्तकद्रव्यं तावत्पवनप्रकोपनिवर्तकम् । पित्तनिवर्तकस्वादुरसवद्द्रव्यस्य पवनप्रकोपनिवर्तकद्रव्यत्वात् । एवमाकारेण व्याप्तिः गृहीतुं शक्यते । न तु तिक्तरसवद्द्रव्यमात्रं पित्तनिवर्तकम् । तद्यथा—विषतरुफलसारं पित्त-प्रकोपकारकं सत् पवनप्रकोपनिवर्तकद्रव्यं तिक्तरसवद्द्रव्यत्वात् इत्येवमाकारेण व्याप्तिग्रहस्य वक्तुं सुकरत्वात् । न तत्र भोगयोग्यादनद्रव्यत्वमुपाधिः । भोगयोग्यादनयोग्यातिक्तरसवद्द्रव्यं पित्तप्रकोपनिवर्तकं, न तिक्तरसमात्रम् । विषतरुफलसारवद्द्रव्यं तिक्तरसवद्द्रव्यमपि भोगयोग्यादनद्रव्यं न भवतीति तत्र नाव्याप्तिः । भोगयोग्यादनद्रव्यं यत्र भवति तत्पित्तप्रकोपनिवर्तकमपि न भवति, यथा घटः । तिक्तरसवद्द्रव्यं पवनप्रकोपनिवर्तकं न भवति । एकरसवद्द्रव्यं यत्र भासते तत्र अनेकसारसत्वेऽपि एतत्सारमेकदोषप्रकोप-निवर्तकं भवति इति नाशङ्कनीयं । भोगयोग्यातिरिक्तरसवद्द्रव्यातिरिक्त-

तिक्तरसवद्द्रव्यत्वात् । तस्मात् यस्मिन्द्रव्ये एकगन्धवत्त्वं एकरसवत्त्वं च भासते तत्र अनेकसारसत्वेऽपि तत्सर्वमेकदोषप्रकोपनिवर्तकं भवति । तत्तदङ्गेषु प्रतिभातस्यैकसारत्वात् तत्सार एव सर्वाङ्गव्यापक इति तदेकसारवद्द्रव्यमिति ज्ञातव्यमित्यर्थः ।

ननु अब्द्रव्याधिकद्रव्योपलब्धिर्यत्र तत्रैव मधुररसप्रतिस्वाद्यावयवप्रदेशेषु स्वादुरसः प्रतीयते । तत्राब्द्रव्यावयवाधिक्यमपि प्रतीयते । एकसारस्य अवयवविशेषस्थानसत्वाभावादित्याशयं मनसि निधायाह— अब्द्रव्येति ।

## अब्द्रव्यावयवाधिक्यजन्यस्वादुरसोपलब्धिर्य यत्तत्तत्सारकम् ॥ ५६ ॥

अब्द्रव्यावयवाधिक्यं यत्र यत्र प्रतीयते तत्रैव स्वादुरसाधिकोपलब्धिरिति स्वादुरसवत्त्वं जलद्रव्यावच्छेदकमित्युक्तं, तच्चिन्त्यम् । पञ्चभूतात्मकं शरीरमिति तन्मध्ये अब्द्रव्याधिक्यशरीरमूरुहकुमार्यादि । तत्र जलाधिक्यद्रव्यमुपलभ्यते । तस्यावच्छेदकत्वं तिक्तरसवत्त्वम् । तस्मात्तत्पवनप्रकोपकारि भवति । तिक्तरसवद्विषतरुफलसारं पवनप्रकोपनिवर्तकम् । यत्र जलवद्द्रव्याधिक्यं तत्पवनप्रकोपनिवर्तकं स्वादुरसम् । तस्यावच्छेदकं तिक्तरसम्, जलवद्द्रव्यस्यावच्छेदकत्वाभावात् । जलद्रव्यावच्छेदकस्वादुरस पवनप्रकोपकारको भवति । जलवद्द्रव्याधिकरूपेक्षुकाण्डस्वादुरसोऽपि पवनप्रकोपनिवर्तको भवति । इति तात्पर्ये गुणाभावात्, किं तु पित्तप्रकोपनिवर्तक. । तस्माज्जलद्रव्यनिष्ठस्वादुरसः पवनप्रकोपनिवर्तको भवति इत्याशयवान् समाधत्ते—य इति ।

ये ये शरीरास्समद्रव्यात्मकाः तत्र तत्र
किंचिदुचितस्वादुरसः ॥ ५७ ॥

पवनप्रकोपनिवर्तको भवतीति तात्पर्यम् । जलद्रव्यस्य अतिशीतल-गुणवत्त्वेन पवननिवर्तकद्रव्यत्वं न भवति । तर्हि स्वाद्वम्ललवणरसाः पवननिवर्तका इति प्रतिपादितशास्त्रस्य का गतिरिति नाशङ्कनीयम् । घृतनिष्ठस्वादुरसः पवनप्रकोपनिवर्तकः । क्षीराणि च तथा । तैलगुणश्च । एरण्डतैलगुणश्च । जलद्रव्यावयवाधिक्याभावजन्यशरीरजातस्वादुरसः पवन-प्रकोपनिवर्तको भवतीति न तात्पर्यम् । इक्षुकाण्डनिष्ठस्वादुरसस्य अधिक-जलावयवावृतशरीरत्वेन अतिशीतलद्रव्यत्वेन तन्निष्ठस्वादुरसस्य मधुरत्वात् तत्पवनप्रकोपनिवर्तकं न भवतीति तादृशस्वादुरसः पित्तप्रकोपनिवर्तक इति तात्पर्यम् ।

ननु यत्राब्द्रव्यावयवाधिक्यं तच्छरीरनिष्ठस्वादुरसस्य अतिमाधुर्यात् तत्राधिकस्वादुरसवद्द्रव्यस्य जलत्वस्य अवच्छेदकत्वात् तद्वच्छीतस्पर्शवत्त्वमपि तस्यावच्छेदकं भवति । यत्र शीतस्पर्शवत्त्वं तत्र जलत्वं, इति व्याप्तेर्गृहीतुं शक्यत्वात् । तच्छीतस्पर्शविशिष्टजलनिष्ठस्वादुरसः कथं पवनप्रकोपनिवर्तको भवेत्? अनुभवविरोधात् । तथाहि –शीतस्पर्शविशिष्टस्वादुरसवद्द्रव्यं पवन-प्रकोपकारकम् । तन्निष्ठपवनप्रकोपनिवृत्त्यर्थं अनलसंयोगजन्यकार्यसंस्कार-विशिष्टजलं पवनप्रकोपनिवर्तकमिति तज्जलानलसंपर्कवशात् पवनजनकशीत-लगुणं विहाय तस्य अनलसंयोगवशात् तज्जलं पवननिवर्तकं कथं भवेत्? तस्माद्यत्र यत्राब्द्रव्यावयवाधिक्यं तत्र तत्र तथा अतिशीतलस्पर्शवत्त्वमपि

संभवति । तस्मात्तन्निष्ठस्वादुरसस्य पवनप्रकोपनिवर्तकत्वं कथं भवेदित्यस्वरसादाह—तदिति ।

## तत्पवननिवर्तकं सुभेषजम् ॥ ५८ ॥

जङ्गमशरीरजन्यस्वादुरस एव तच्छब्दार्थः । तज्जन्यस्वादुरसः पवनप्रकोपनिवर्तकः । सर्वशरीराणि पाञ्चभौतिकानि । यत्र पार्थिवद्रव्याधिक्यगन्धोपलब्धिर्दृश्यते तत्रैव तज्जन्यस्वादुरसस्य पवनप्रकोपनिवर्तकत्वात् । जलमात्रनिष्ठस्वादुरसस्य न ब्रूमः, जलस्य जडरूपद्रव्यत्वात् तस्य शरीराभावात् । ननु उषःपानविधौ शुद्धजलसेवनं सकलदोषनिवर्तकमिति शास्त्रे प्रतिपादितम्, अन्यथा तत्प्रतिपादकशास्त्रविरोधः स्यात् । सर्वं जगत् जलेन विना जीवितुं न भवति समर्थम् । तस्य स्वभावेन "जीवनम्" इति नैघण्टुकैः नाम प्रतिपादितम् तस्माज्जलनिष्ठस्वादुरसः पवनप्रकोपनिर्तको भवतीति यदुक्तं तन्न रोचत इति चेन् न, स्थावराणां च जीवनोपकारकत्वस्य जलद्रव्यस्योचितत्वात् जलद्रव्यं जीवनं भवेत् । जङ्गमानां तु न तथा । तेषामपि अनलसंयोगजन्यसंस्कारात् जातजलनिष्ठस्वादुरसस्य पवनप्रकोपनिवर्तकत्वमित्युक्तत्वात् । तत्र उषःपानविधावपि हंसोदककर्मकरणविशिष्टजलं उषःपानविधौ प्रशस्तमित्युक्तत्वात् । इतरत्रापि अनलसंयोगजसंस्कारविशिष्टस्य जलस्य पवननिवर्तकत्वे अनलसंयोगत्वमुपाधिः । यत्र यत्र अनलसंयोगसंस्कारविशिष्टजलत्वं भासते, तत्र तत्र पवननिवर्तकत्वमपि संभवति । शुद्धशीतलगुणविशिष्टजलस्य पवनप्रकोपकारकत्वनियमात् । शैत्यगुणविशिष्टजलनिष्ठस्वादुरसः न पवनप्रकोपनिवर्तकः । तत्र श्रुतिवचनं प्रमाणं—"अग्निर्हिमस्य भेषजम्" इति । तन्निवर्तकविधौ अनलसंयोग एवोपाधिरित्यर्थः ।

ननु लवणरसः अब्द्रव्यजन्य. अब्विकारद्रव्यत्वात् , लवणसमुद्रस्यैव सागरत्वात् । लवणं तज्जन्यं तत्पाकजन्यं सुमनोहरं सुगन्धविशिष्टाम्ल-रसवद्द्रव्यं पवनप्रकोपनिवर्तकं, अपक्वं तु न तथा । सुगन्धविशिष्टगुणा-भावद्रव्यत्वात् लवणरसस्य शोषकद्रव्यस्य कथं पवननिवर्तकत्वं कफनिवर्तक-द्रव्यत्वात् कटुरसवत् , लवणरसस्य कटुरसान्तःपातित्वात् । तत्कालविशिष्ट-लवणरसः पवनविकारो न भवति कटुरसस्य अनलद्रव्यगुणवत्त्वात् । स्वाद्वम्ललवणविशिष्टद्रव्याणि पवनप्रकोपनिवर्तकानि अब्द्रव्यनिष्ठगुणवद्द्रव्य-त्वात् जम्बीरफलवत् । लवणरसः पवनप्रकोपनिवर्तकः अब्द्रव्यगुणवत्त्वात् । न सर्वजलं स्वादु रसवत्त्वादेव, स्वादुरसवद्द्रव्येभ्यः लवणद्रव्योत्पत्तेरभावात् । लवणसमुद्रस्य पार्थिवशरीरस्य सप्तधात्वात्मकत्वात् मच्छरीरवत् ।

ननु केचित्तरवोऽनेकसारवन्तो भवन्ति । एकजातीयतरुषु अनेक-भूतावयवाधिक्यस्य वक्तव्यत्वात् । तद्यथा—शिग्रुजातीयतरुषु बीजसारवत्त्वं पत्रसारवत्त्वं पुष्पसारवत्त्वं. मूलत्वक्सारवत्त्वं मूलसारवत्त्वं, एतादृशसारवन्तः एते शिग्रुतरवः । यद्द्रव्याधिक्यापेक्षया एकस्य अनेकसारवत्त्वं भासत इत्याह—अनलेति ।

अनलद्रव्यावयवाधिक्यजाताधिकरूपोपलम्भक-
यावद्रसवद्द्रव्यं तत्सारकम् ॥ ५९ ॥

अनलभूतावयवाधिक्यद्रव्यत्वात् तद्वत्त्वं यत्र प्रतीयते तद्वस्तु अनला-धिक्यद्रव्यमिति । यत्र यत्राधिकरूपोपलम्भकयावद्योगद्रव्यं यावद्रूपवत्त्वेन नयनानन्दहेतुकं भवति तादृशचाक्षुषद्रव्यं तत्सारकम् । केचिन्मनुष्याणाम-योग्यत्वेऽपि तद्योग्यादनवत्त्वात् जाता ये बहवस्सन्ति तेषामप्युपकाराय

भवन्ति, अनलभूतावयवाधिक्यद्रव्याधिक्यवन्त इति तत्रानेकसारवत्त्वस्य वक्तुं शक्यत्वात् तत्सर्वसारं पवनप्रकोपनिवर्तकं भवति । अनलद्रव्य-भूतार्थस्य सर्वेभ्यो भूतेभ्यः आधिक्यात् तादृशसारतरवः सर्वभूतानामुपकाराय भवन्तीत्यर्थः ॥

ननु यावद्भूरुहः तत्तदामयनिवर्तकाः भूरुहद्रव्यत्वात् सम्प्रतिपन्नवत् देशसारौबल? द्रव्यभेदेन तत्तज्जन्तूनां तत्तद्दोषविनाशकाः । केचित्तरवः जगज्जीवनोपकारकाः । तस्य एकदा सर्वपदार्थज्ञानेन भवितव्यम् । तत्सर्वपदार्थज्ञानाभावेन निर्णेतुमशक्यत्वादित्यत आह— गगनेति ।

**गगनद्रव्याधिकशब्दगुणोपलम्भकत्वं प्रमाणम् ॥ ६० ॥**

अत्र गगनद्रव्याधिकशब्दत्वं नाम देशदेहकालद्रव्यकर्मणां यथायथं द्रव्ययोगकरणस्य शास्त्रज्ञानाभावेऽपि आप्तोदीरितशब्दस्सर्वत्रापि प्रमाणम् । यस्मिन्देशे यत्र यत्र यत्प्रवर्तकं तच्छास्त्रमिति विज्ञाय यद्द्रव्याधिनिवर्तकं यद्द्रव्यं तदेव तद्भेषजमिति तत्र गगनादिकशब्दजातकार्यज्ञानं प्रमाणमिति । यद्यपि यस्य कस्यचित्पदार्थस्य कस्यचिदामयस्य प्रतीकारत्वं बहुवादिसम्मताप्तोदीरितशब्द यत्र यत्र भासते तत्र गगनादिगुणोपलब्धिरेव प्रमाणमित्यर्थः । एवं पञ्चभूतोद्भवसारवद्द्रव्यं तत्तद्देशावच्छेदकभेदवशात् तत्तद्देहावच्छेदकभेदवशात् तत्तत्कालावच्छेदकभेदवशात् इदं सर्वमालोच्य तत्सर्वमवलोक्य तत्सारद्रव्यं विज्ञाय भेषजं कार्यमिति । आयुर्वेदप्रतिपादितार्थतत्त्वज्ञानमेव निर्णीतमिति फलितार्थः ॥

ननु स्थावरस्थस्वादुरसः पवनप्रकोपनिवर्तकोपयोग्यभेषजद्रव्यं न भवति, सप्तधात्वात्मकशरीरजन्यत्वाभावात् इक्षुकाण्डशरीरवत् । यस्सप्तधातुमय-शरीरजन्यस्वादुरसो न भवति स पवनप्रकोपनिवर्तकोपयोग्यभेषजद्रव्यं न भवति सप्तधात्वात्मकशरीरजन्यत्वाभावात् इक्षुकाण्डशरीरवत् । यस्सप्त-धातुमयशरीरजन्यस्वादुरसो न भवति स पवनप्रकोपनिवर्तकस्वादुरसोऽपि न भवति, यथा तालफलजन्यस्वादुरसः । इक्षुकाण्डस्थितस्वादुरसः पवनप्रकोप-कारकः कालपाकजन्यस्वादुरसवत्त्वादेव अनलपाकजन्यत्वाभावात्, यन्नैवं तन्नैवं यथा घट इति । एवं अम्लरसः पवनप्रकोपनिवर्तको न भवति । सप्तधातुमयशरीरजन्यस्वादुरसद्रव्यत्वाभावात् । एवं लवणरसवद्द्रव्यं पवन-प्रकोपनिवर्तकं न भवति, सप्तधात्वात्मकशरीरजन्यत्वाभावात् कालपाकजन्य-स्वादुरसवद्द्रव्यत्वाच्च स पवनप्रकोपकारको भवतीत्यर्थः । लवणरसवद्भूरुह-द्रव्यं नानिलनिवर्तकं ऊषरभूजन्यभूरुहद्रव्यत्वात् संप्रतिपन्नवत् । इत्यनुमान-प्रमाणेनापि यावत्सप्तधात्वात्मकानि शरीराणि तदीयस्वादुरसवद्द्रव्यं पवननिवर्तकं भवतीत्यस्वरसादाह—तिक्तेति ।

**तिक्तोषणकषायरसाः रसासृङ्मांसमेदोबलप्रदाः[1] ॥ ६१ ॥**

सर्वे च भूरुहः रसादिचतुर्धात्वात्मकाः । तिक्तोषणकषायरसगुणप्रधान-बलाधिकद्रव्यत्वात् । शुक्लमज्जास्थिधात्वभावद्रव्यत्वेन तत्पोषकत्वाद्म्ललवण-रसगुणप्रधानद्रव्यत्वादित्यर्थः ।

ननु स्वाद्वम्ललवणरसाः स्थावरस्थाः । तन्निष्ठस्वादुरसानां का गतिः ? रसप्रधानत्वेन द्रव्यगुणान् वक्तुं योग्यत्वादित्यर्थः ।

[1] 'तिक्तोषणरसौ मांसमेदोबलप्रदौ' इति A. B. कोशयोः.

ननु स्थावरजङ्गमशरीराः प्रकृतिपुरुषात्मकाः । अत एव सप्तधात्वावृतं शरीरमिति शरीरावच्छेदकं सप्तधात्वावृतत्वमिति । तद्वदेवं षड्रसात्मकं शरीरमिति वक्तुं सुकरत्वात् स्थावरशरीराश्चतुर्धात्वात्मका इत्यस्य विनिगमकाभावात् शरीरत्वावच्छेदकावच्छिन्नस्य सर्वत्रापि समानत्वात् इत्याशयं मनसि निधायाह—रेचकेति ।

**[1] रेचकपूरकधारकेभ्यो विकसति** ।। ६२ ।।

रेचकपूरकपवनधारणात् तत्तद्वर्णाधिष्ठितपद्मानां निमीलनोन्मीलनेन तत्तद्वर्णबोधो जायते । तस्मादिदं शरीरं सप्तधात्वावृतं वर्णोच्चारणहेतुभूतद्रव्यत्वात् । ते तु न तथा । तावदयोग्यत्वात् चतुर्धात्वात्मकेन अर्धशरीरत्वाच्च तत्कोरकपुष्पपत्रलतादयः निमीलनोन्मीलनं च कुर्वन्ति बहिः पवनसंपर्कवशात् । रेचकधारकत्वमात्रं व्यपदिशन्ति । तस्माच्चलनात्मकं कर्म कुर्वते ।

ननु जङ्गमशरीरं शरीरान्तरजनकं स्थावरोत्पादकहेतुभूतद्रव्यत्वात् । एवं वृक्षः वृक्षान्तरजनकः स्थावरोत्पादकहेतुभूतात्मकत्वस्य च उभयोरपि समानत्वात् । अत एव स्थावरशरीराणामपि सप्तधात्वात्मकत्वं कथं निषिध्यत इत्यस्वरसादाह—लिङ्गेति ।

**लिङ्गयोनिसंयोगाच्च प्रजया पशुभिः प्रजननं प्रजायते** ।। ६३ ।।

लिङ्गस्य प्रजाजननहेतुभूतत्वात् स्थावराणां च प्रजाजननकाले वृक्षान्तरसंयोगकार्यस्य अदृष्टत्वात्, स्थावरशरीरत्वात् जङ्गमशरीरवत् स्थावराणां वक्तुमयोग्यत्वात् । अत एवोक्तं रसादिचतुर्धात्वावृतं शरीरमिति ।

---

[1] एतत्सूत्रात्प्राक् "सर्वकालद्रव्यगुणादौ कफपित्तविकारनाशकौ" इत्यधिकः पाठः A. B. कोशयोर्दृश्यते.

ननु "इदं स्त्रीवचनं, इदं पुरुषवचनं" इति तयोर्भेदप्रतीतिः। ताल्वोष्ठपुटव्यापाराघटनात् जातपवनः स्मेरास्यदोषगतिजातशब्दः स्त्रीणां योनिविवरं प्रविश्य स्त्रीजातिज्ञापकवचनं च। जङ्घामेढ्रप्रदेशपद्मगतसरन्ध्रभागस्य अल्पद्वारत्वात् पुरुषलिङ्गस्थितपद्मविवरमभ्युपेत्य वर्णात्मकशब्दः ताल्वोष्ठपुटव्यापाराघटनाजातपवनभेदस्य सर्वेषामपि समानत्वात् तत्सामग्रीविशिष्टस्त्रीजनोच्चारितशब्दानां अजाधिक्यस्वरात्मकत्वात् शब्दा उपलभ्यन्ते। तद्वदेव पुरुषजन्यताल्वोष्ठपुटव्यापारादिकस्य समानत्वेऽपि स्त्रीजनोच्चारितशब्दः पुरुषजनोच्चारितशब्दाद्भिन्न इति कथमुपलभ्यते? शब्दज्ञानसामग्र्याः समानत्वादित्याशयं मनसि निधायाह—पृष्ठेति।

**पृष्ठजङ्घाशिश्नोपस्थदेशभेदात्स्वरादयः प्रभवन्ति ॥ ६३ ॥**

जङ्घाशिश्नपद्मप्रदेशं सम्प्राप्य शब्दः प्रभवति। इत्येतत्तु विविच्य ज्ञाप्यते—जङ्घाशिश्नप्रदेशगतिसरन्ध्रभागमभ्युपेत्य बहिर्निस्सरन् सन् हलादिवर्णाधिक्यबोधकतया वर्णात्मकशब्दश्श्रूयते। अयं पुरुषशब्द इति ज्ञातुं शक्यते। एवं स्त्रीजनानां ताल्वोष्ठपुटव्यापारसामग्र्यां स्मेरास्यदोषगतिजातशब्दः कर्णप्रदेशविवरभागमभ्युपेत्य पृष्ठोपस्थपद्मगतसिरारन्ध्रभागमुपेत्य तस्मा योनिविवराधारात् बहिर्निर्गतस्सन् अच्स्वरादिवर्णाधिकतया शब्दश्श्रूयते। स शब्दस्स्त्रीजनोच्चारितशब्द इति भेदः प्रतीयते। तत्तज्जातिविशिष्टशरीरा बहवस्सन्ति। तत्तच्छरीरावच्छेदकभेदात् वर्णभेदः। तत्तत्पृष्ठयोनिपद्मप्रदेशगतसरन्ध्रप्रदेशा एव तत्तद्वर्णभेदज्ञापका इति वक्तव्यम्। एवं पुरुषजनानामपि भेदो ज्ञातव्यः।

ननु श्वासोच्छ्वासानिलात्मककुण्डल्याधारभूतकटिप्रदेशगतपद्मं सर्वप्राणाधारकं शिरस्स्थितामृतप्रवाहालवालोपजीव्यरूपत्वात् अमृतप्रवाहालवाल-

परिपूर्णकार्यहेतुभूतत्वात् । तस्माद्योगधारणवशात् धातुपोषणं भवेदित्य-स्वरसादाह—कटीति ।

### कटिप्रदेशगतं कायाधारकम् ॥ ६५ ॥

कटिप्रदेशगतं पद्मं चतुस्सिरावृतं ओजर्णोत्पादकमूलपाणिपादाभ्यां चलनात्मककार्यहेतुभूतत्वेन गतागतोपायकार्यकारकयाथात्म्यकत्वात् तदेव शरीरधारकं भवतीत्यर्थः । न तु प्राणाधारहेतुकपवनमात्राधारकत्वात् सर्ववर्णाधारकपद्मवत् ।

ननु आयुर्वेदार्थज्ञानं चतुर्विधपुरुषार्थसाधकयोगधारणकार्यहेतुकं ईश्वरसाक्षात्कारानुभवस्य हेतुभूतत्वात् । ईश्वरस्सुप्रीतो भूत्वा तस्य मनो-वाञ्छादिकं फलमेव ददाति । तस्माद्योगसाधनं विहाय तत्तद्विरसद्रव्यादनेन तद्धेतुभूतामयान्सम्पाद्य तन्निवर्तककार्यकारणेन किमधिकफलं लभ्यत इत्याह—नाभेरिति ।

### नाभेरधस्थितं कुण्डल्यादिभूतं पञ्चसहस्रसिरावृतं शतदळपद्मं प्रजायते ॥ ६६ ॥

नाभेरधस्थितं जठरानलपद्मं तयोर्मध्यगतं भवति । तत्पञ्चसहस्र-सिरावृतम् । सर्ववर्णाधारकपद्मानामादिभूतम् । सप्तधात्वाधारात्मकम् । पञ्चभूतात्मकं च । तच्छतदळपद्मं अविरुद्धरसद्रव्यादनेन अविकारं भूत्वा तत्तत्सारद्रव्यैः शिरःकमलस्थामृतं मुहुर्मुहुः प्रजनयन् वर्तते । विकाराभाव-वत्पवनगत्या तच्छतदळपद्मसन्तर्पणेन सप्तधातवः पुष्णन्ति । रसायनादनेन वा, रोगधारणाद्वा, पथ्यान्नादनेन वा, शरीरमविकारं कुर्वन् बहुकाल-जीवनं लभ्यत इत्यर्थः । अतश्शरीरसंरक्षणमेव सर्वपुरुषार्थसाधकम् ।

नीरोगशरीरं सर्वानन्दहेतुकम् । आनन्दज्ञानहेतुकम् । शब्दस्पर्शरूपरसगन्धा आत्मविषयज्ञापकाः इन्द्रियाधारभूतत्वात् । यन्नैव तन्नैवं यथा घट इति । इदं नीरोगशरीरं योगधारणसाधनम्, तत्त्वज्ञानमनोविषयकात्माधिष्ठितशरीरत्वात् चैतन्याधिष्ठितशरीरवत् । सर्वपदार्थतत्त्वज्ञानं मोक्षहेतुकं हेयार्थोपायव्यतिरिक्तोपादेयज्ञानहेतुकत्वात् । इदं नीरोगशरीरं सर्वपदार्थज्ञानानुभवपूर्वकं रोगनिवर्तकद्रव्यादनसाध्यज्ञानपूर्वकत्वात् । आयुर्वेदचतुःप्रश्नप्रतिपादितार्थः एतदनुमानचतुष्टयाधीनः उक्तशास्त्रप्रतिपादितार्थज्ञानपूर्वकत्वात् ।

इत्यायुर्वेदस्य चतुर्थप्रश्नस्य भाष्यं योगानन्दनाथकृतं

सुप्रसिद्धं महाजनसम्मतं लोकोपकारकं

प्रतिसूत्रव्याख्यानपूर्वकं आयुर्वेदभाष्यं

सम्पूर्णम्



## आयुर्वेदे पञ्चमप्रश्नः

—o—

गुहान्तरनिवासिनीं गुरुकृपाकटाक्षोदयैः
सहायमनुचिन्तयन्सरसिजेषु षट्सु क्रमात् ।
सहासमभिनर्तयन्सततमष्टवाग्वादिनीं
महात्रिपुरसुन्दरीमिह मुहुर्मुहुर्भावये ॥

ननु नाभेरधस्स्थितशतदळपद्मं प्राणाधारकं सर्वेन्द्रियाधारभूतं च । तत्पद्मसहस्रसिरावृतपद्मं शिरःकमलस्थामृतमाहृत्य पवनेन पूरितत्वात् आयुरभिवृद्धिकारकमित्युक्तम् । अतस्त्रयो दोषा अविकृताश्चेत् तत्पद्ममेव सकलश्रेयसां हेतुभूतमिति वक्तुं शक्यते । शुद्धरसवद्द्रव्यादनं दोषाणां सम्यग्गतिकारकं भवति । विरसद्रव्यादनं विकारकारकं भवति, तत्तत्प्रदेशस्थितदोषादिविज्ञानं विना तद्ज्ञानविषयकज्ञानग्राहकत्वस्यासम्भवात् । शुद्धरसवद्द्रव्यगुणाः शुद्धधातुवर्धकाः । विरुद्धद्रव्यगुणा विकारकारकाः । अत एव दोषस्थानं तत्स्वरूपं च व्याचष्टे—नाभेरिति ।

**नाभेरधस्तादूर्ध्वं हृदि स्थितवातपित्तकफदोषास्समस्ता असमस्ता असमग्रा अन्योन्यं ते आमयोत्पादकाः ॥ १ ॥**

नाभेरधस्स्थितः पवनः । तदूर्ध्वप्रदेशः नाभेरूर्ध्वस्थानम् । तत्पित्तदं गस्याकरो भवति । तदुपरि हृदयप्रदेशः कफदोषस्य स्थानं भवति । एतत्सर्वं सर्वपदार्थगुणागुणज्ञानं च दोषस्वरूपज्ञानहेतुभूतम् । अतो दोषादेः

ज्ञानमावश्यकमिति । दोषादिविज्ञानं विना तत्तदामयानां निर्णेतुमशक्यत्वात् । तथा हि स कीदृशो वायु ? कुण्डलिनीस्थितश्वासोच्छ्वासरूपमुपपन्नस्सन् द्विविधप्रकारको भवति । स एव वायुः प्राणापानव्यानोदानसमानभेदः उपाधिभेदात्पञ्चविध उपहूयते । स एव वायुस्सर्वसिराभ्यन्तरगतस्सन् तत्तत्पद्माधिष्ठितमर्वेवर्णान् हृत्य तालुओष्ठपुटव्यापाराघट्टनात् जातपवनस्य उपाधिभेदवशात् तत्तत्पवनगतिशक्त्या सर्ववर्णान् तत्तत्पद्ममवगम्य तत्तत्पद्मस्थितवर्णसमूहात्मकशब्दं श्रोत्रप्रदेशं गमयन् तत्तच्छब्दार्थविषयकज्ञानजन्यज्ञानं करोति । यत्र यत्र विरसद्रव्यादनादजीर्णे जाते सति अनिलात्मकश्वासोच्छ्वासगतिः सिरारन्ध्रमार्गमुपगतस्य पवनस्य विकारगतिं करोति । यत्र विकारगतिज्ञानं तत्र तदतिवेदनाविषयकम् । तत्तत्सिरागतपवनः तत्तत्पद्मपर्यन्तं विरुद्धगत्या वर्णग्राहकश्चेत् तद्वर्णं श्रोत्रविवरमुपेतं परग्राह्यं यदा भवति तदा विवर्णशब्दात्मकपदं श्रूयते । यावद्वर्णग्राहकपवनमभ्युपेत्य दोषमार्गमुपगम्य पवनश्चरति, तदा समस्तदोषा असमर्था भवन्ति । स एव वायुः विरसादनादजीर्णे जाते सति अल्पमल्पं चरति । सोऽसमग्रगतिरिति । तेषां पवनानामन्येषां संकरगतिर्यत्र दृश्यते स एव रोगो भवतीत्यर्थः ।

ननु दोषत्रयनिरूपणे धातुपोषकप्रतिपादकशास्त्रं न प्रतीयते । ते दुष्टास्सन्तः धातुदूषका भवन्ति । ते तु अदुष्टाश्चेत् यथापूर्वमनतिक्रम्य स्थित्युपकारका भवन्ति । अतो दोषनिवारणेन किं फलं लभ्यत इत्यस्वरसादाह—यत्रेति ।

**यत्रस्था ये रसास्तत्तदुद्भूतजातास्ते धातुपोषकाः ॥ २ ॥**

यत्र यावद्भूताधिक्यजातयावद्द्रव्यादनं तत्तद्भूताधीनतत्तन्निवर्तकधातुपोषकम् । यावदुद्भूतभूरुहरसाः यावदुद्भूतभूतजातधातुशोषकपोषकाः

यावदुद्भूनभूरुहविरसादनजातरोगनिवर्तकतत्सजातीयरसवद्द्रव्यत्वात् । याव-दुद्भूनभूरुहजातरसात् तदितरशरीरभूताधीनधातुशोषकरुङ्निवर्तकं भेषजं, इत्यनुमानरचना कार्यहेतुकव्याप्तिग्रहवशात् तन्निवर्तकनिवर्त्ययोः व्याप्तिग्रहे सति सर्वत्राप्युक्तत्रापि तथा वक्तुं शक्यत्वादित्यर्थः ।

ननु दोषप्रकोपनिवृत्तिद्वारा रसादीनां धातुपोषकत्वं वक्तव्यम् । यावद्भूतनिष्ठरसाः यावद्भूतावयवजन्यरोगनिवर्तका इति पूर्वसूत्रे प्रतिपादि-तम् । तच्चिन्त्यम् । केचिद्रसाः धातुपोषकाः, केचिद्रसाः धातुदूषकाः इति वक्तुं शक्यते । विरुद्धरसादजीर्णे जाते सति तत्तद्विधिचोदितरोगा आविर्भ-वन्ति । ते तु दोषानुगतास्सन्तः धातुगताश्चेत् तेषु तद्विकारा आविर्भवन्ति । यदा अविरुद्धरस दनेन दोषा अदुष्टास्सन्तः धातूनामविकारं कुर्वन्ति, शुद्धदोषाश्च धातून् प्राणांश्च संरक्षन्ति । ते तु दुष्टाश्चेत् धातुप्राणेन्द्रिय-घातका भवन्ति । रसादीनां दोषप्रकोपकारकत्वं दोषप्रकोपनिवर्तकत्वं च वक्तुमुचितम्, इत्याशयं मनसि निधाय षड्रसानं च तत्तद्गुणान् वर्णयति— द्वीति ।

**द्विरसार्थरसहीनार्थहीनरमवाननिलनिवारकः ॥ ३ ॥**

द्विरसार्थे इति स्वाद्वम्ललवणाविशिष्टद्रव्यं पवनप्रकोपनिवर्तकम् । स्वादुरसवद्द्रव्यं पवननिवर्तकं न भवति, इक्षुरसकदळीफलनारिकेलतालफलेषु च व्यभिचारात् । स्वादुरसवत्त्वं आम्लरसवत्त्वं च यस्मिन्द्रव्ये यदा प्रतीयते तत्र तद्रसवद्विशिष्टद्रव्यं पवननिवर्तकं भवतीत्यर्थः । केवललवणरसवद्द्रव्यं पवन-निवर्तकं न भवति, ऊषरभूमिजन्यलवणरसस्य पवननिवर्तकत्वासम्भवात् ।

सामुद्रजं तु न तथा । स्वादुरसत्वं जलद्रव्यस्यावच्छेदकम् । तथा सति सामुद्रजलत्वं तु जलस्य स्वभावनिष्ठस्वादुरसस्य तत्रैवान्तर्भावात् लवणरस-विशिष्टभूद्रव्येण जलनिष्ठस्वादुरसस्याभिपूरितत्वात । तर्हि तथा सति अस्ति चेदुपलभ्येत । अनुपलभ्यमानत्वात् । तन्नास्तीति न वक्तव्यम् । लवण-विशिष्टयोग्यद्रव्यं व्यञ्जनादिद्रव्ये रुचितया प्रतीयते । स्वादुरुचिरेतत्स्वादुतया प्रतीतेति व्यवहर्तुं शक्यत एवेत्यर्थः । काश्चिद्भुवः लवणरसविशिष्टा भवन्ति । काश्चिद्भुवः स्वादुरसविशिष्टा भवन्ति, तत्तद्भूमिजलकूपादौ तथा दृष्टत्वात् । यत्र यत्र लवणरसोपलब्धिः तत्र तत्र तादृशभूमिजन्यत्वं तत्रोपाधिः । स्वादु-जलविशिष्टकूपजन्यजलगुणस्वादुरसस्य प्रतीतत्वात् तत्र लवणरसजनकभूमि-स्वाभावविशिष्टभूजन्यलवणत्वस्य तत्र विद्यमानत्वात् । तत्र स्वादुरसप्रतीतेः वक्तुं शक्यत्वात् । सैन्धवदेशजन्यलवणरसविशिष्टद्रव्यस्य शुद्धभूजन्यवात् आम्लरसवत्त्वं भूमेरवच्छेदकम् । तत्र तत्र द्रव्यजन्यत्वादेव पवननिवर्तकत्वं वक्तुं शक्यत एवेत्यर्थः । तत्र द्विरसार्थभूतद्वयद्रव्यगुणविशिष्टत्वात् तत्र द्विरसार्थप्रवृत्तिः पवननिवर्तिकेत्यर्थः ।

रसहीनार्थे इति रसहीनद्रव्यं पारदादिद्रव्यम् । तत्र औषधादिरसानां सर्वदा सर्वकालेऽप्रतीतत्वात् । तत्र पवननिवर्तकत्वं सर्वजनसिद्धं सर्वशास्त्र-मतसिद्धम् पारद इत्युपलक्षणम् । रसोऽत्ररलोहादिसाधारणमहारस इति पारदशब्देन सर्वं संगृह्यते । अस्मिन्पारदद्रव्ये रसादय आविर्भूता भवन्ति । हीनरसवत्त्वं त्वन्यद्रव्यस्य विरेककारित्वं सुप्रसिद्धम् । तस्य गुणस्य पवन-निवर्तकत्वस्य सुप्रसिद्धत्वादिति बहवः ॥

सूत्रस्थानवचनस्यापीदमेव तात्पर्यम् । तथाहि अव्यभिचरितत्वं व्याप्तेरवच्छेदकम् । यत्र स्वादुरसवत्त्वं तत्र पवननिवर्तकत्वं इत्येवमाकारेण व्याप्तिग्रहानन्तरं अनुमितौ प्रवृत्तिः । इक्षुकाण्डस्थितस्वादुरसः पवनप्रकोप-निवर्तकः, जलभूम्यात्मकावयवग्रस्तत्वात् । एतदनुमानेनापि एकस्वादुरसस्य पवननिवर्तकत्वं वक्तुं शक्यत एवेत्यर्थः ।

ननु आम्लरसवद्द्रव्ये कालपाकवशात् माधुर्ये जाते सति स आम्लरस एव भवति । विरसद्रव्यादनं विकारकारकम् । तद्वदेव द्विरसवद्द्रव्यमिति वक्तुं शक्यते । स पवननिवर्तकरसः कथं स्यादित्यस्वरसादाह—मधुरेति ।

## मधुरातिमधुरं क्रमाद्वातपित्तघ्नौ कफं कुरुतः ॥ ४ ॥

मधुरत्वं नाम मधुररसवद्द्रव्यातिरिक्तस्वादुरसवद्द्रव्यं पवननिवर्तकम् तत्कालवशात् मधुरीभूतं भवति । तत्स्वादुरसवद्द्रव्यं पित्तप्रकोपनिवर्तकं तद्विरसवद्द्रव्यं न भवति । एकरसजातिविशिष्टद्रव्यत्वात् एकरसद्रव्यमेवेति । आम्लरसवद्द्रव्यत्वजातिविशिष्टद्रव्यं कालपाकजोपाधिकं मधुररसवद्द्रव्यं भवतीति यदा प्रतीयते तदा तद्विरुद्धरसवद्द्रव्यं न भवति, तद्योग्यकालातीतद्रव्यभाव-द्रव्यत्वात् । तत्र विरसवद्द्रव्यातीतकालत्वमुपाधिरिति मधुररसवद्द्रव्यं तस्मा-देवातिमधुररसवद्द्रव्यं पित्तप्रकोपनिवर्तकं भवतीत्यर्थः । आम्लरसवद्द्रव्य-जातिविशिष्टैकरसवद्द्रव्यस्य पवननिवर्तकत्वमात्रे चरितार्थत्वात् पवनव्यतिरिक्त-दोषनिवर्तकद्रव्याभावद्रव्यत्वात् इत्यत आह—आम्लेति ।

## आम्लात्याम्लौ च तथा ॥ ५ ॥

आम्लरसजातिविशिष्टद्रव्यस्य पाककालवशात् अत्याम्लरसे जाते सति

तस्य अन्यदोषनिवर्तकत्वं वक्तुं न शक्यते। एकरसजातीयद्रव्यत्वात्। तस्मात्पवननिवर्तकत्वमेव सुप्रसिद्धमिति तात्पर्यम्।

लवणरसवद्द्रव्यस्यापि तथात्वादित्यत आह—लवणेति।

**लवणं पवनं हन्ति। कफपित्तकरणम्॥ ६॥**

तिक्तोषणकषायरसप्रतीतेरेवाभावात् क्षारवद्द्रव्यत्वाच्च पित्तप्रकोपकारकं भवतीत्यर्थः।

ननु लवणस्यास्य पवनप्रकोपकारकत्वं वक्तुमुचितम्। कफप्रकोपकारकमिति वक्तुं नोपयुज्यते। क्षारद्रव्यत्वाच्च पवननिवर्तकं भवेदित्यस्वरसादाह—हीनेति।

**हीनाधिकलवणरसः कफपवनं हन्ति पित्तं कुरुते॥ ७॥**

स्वादुरसगुणवद्द्रव्यजन्यरसः लवणरसः हीनलवणरसो भवति। ततोऽधिकलवणरसः सिन्धुदेशोद्भवलवणरसः आम्लरसाधिक्यद्रव्यजन्यत्वात्। बडबानलसंयोगवज्जलजन्यलवणरसद्रव्यत्वात्कफनिवर्तकत्वं ब्रूमः।

नभ आदित्यभूतशरीरजन्यतिक्तरसस्य कफदोषप्रकोपनिवर्तकत्वं वक्तुं नभोऽनिलद्रव्यजन्यत्वादेव तिक्तरसस्य पवनप्रकोपकारकत्वं कफपित्तरोगनिवर्तकत्वं च व्याचष्टे—तिक्त इति।

**तिक्तः कफपित्तं हन्ति मारुतं कुरुते॥ ८॥**

तिक्त इति नभोऽनिलभूजन्यतिक्तरसः आकाशस्य निरवयवद्रव्यत्वात्, वायोश्च निरवयवद्रव्यत्वात् उभाभ्यां जातशरीरं तिक्तरसवद्भवति। तिक्तरसद्रव्यादनं कफप्रकोपनिवृत्तिं करोति। यत्प्रतिपादितं तत्सर्वं सम्यगेव प्रतिपादितम्।

पित्तं हन्तीत्यस्य अनिलभूताग्निक्यगगनभूतसंयोगजन्यत्वात् रसग्रहणीकलासन्धुक्षणपवनभूतगगनभूतसंयोगाज्जाततिक्तरसः उभयोरपि सर्वांगमव्याप्यद्रव्यत्वात् पित्तप्रकोपनिवर्तकत्वं वक्तुं शक्यत एवेत्यर्थः ।

ननु तस्य तिक्तरसस्य पवनप्रकोपकारकत्वं न संभवति स्वजन्यत्वात् । स्वजनकशरीरच्युतनिम्बकुष्ठभूनिम्बशृङ्गिशार्ककर्कोटकक्रुटजपटोलकुमारिभूतलत् तलपोटुकर्कन्धूदेवगुग्गुलाद्याः तिक्तरसपदार्थाः पवनप्रकोपकार्यनिवर्तकद्रव्यत्वात् भोगयोग्यद्रव्यत्वाच्च जठराग्निप्रज्वलनकार्याणां हेतुभूतद्रव्यत्वाच्च । सर्वे ते पवनप्रकोपनिवर्तका इति विज्ञातत्वात्कथं "मारुतं कुरुते" इत्युक्तमिति नाशङ्कनीयम् । तिक्तरसविरसवद्द्रव्यादनं पवनप्रकोपं कुरुत इति तात्पर्यात् । विरसद्रव्यादनं नाम विरुद्धरसद्रव्यादनम् । तदेव विषवद्द्रव्यादनं भवतीत्यर्थः ।

अनलानिलभूतात्रयत्राधिक्यजातकटुरसः कफप्रकोपनिवर्तक इत्याह— कट्विति ।

**[1]कटु कफं हन्ति । वातपित्तहेतुकम् ॥ ९ ॥**

कटुरसस्य कफनिवर्तकत्वं सुप्रसिद्धमेव । पित्तप्रकोपकारकत्वमपि सुप्रसिद्धमेव । कटुकाः शुद्धरसाः कफरोगनिवृत्तिकारकाः पित्तप्रकोपं च कुर्वते । इत्येतद्द्वयं सुप्रसिद्धम् । अनलानिलभूतजन्यकटुरसद्रव्यत्वेन कफप्रकोपं निवर्तयति, पित्तप्रकोपं च कुरुते । पवनप्रकोपनिवृत्तिं च कुरुते ।

शुण्ठी रास्ना कर्णग्रन्थिः चव्यं मूलकं तमालपत्रं अर्धकं लशुनं हिङ्गु एतानि कटुरसद्रव्याणि भवन्ति । पवनप्रकोपकारकाणीति सूत्रसिद्धमपि

---

[1] एतत्सूत्रात्प्राक् 'हीनाधिकतिक्तरसः पित्तपवनं हन्ति । कफं कुरुते । ' इति A.B. कोशयोरधिकः पाठः.

एतद्विरसादनं पवनप्रकोपं करोतीति तात्पर्यम् । अत एव सूत्रान्तरं व्याचष्टे—कटुकेति ।

**कटुकातिकटुकः कफानिलं हन्ति । पित्तं कुरुते ।। १० ।।**

शुद्धकटुरसः पित्तप्रकोपं कुरुत इत्यर्थः ।

**कषायः कफपित्तं हन्ति । मारुतं कुरुते । हीनाधिककषायः कफमारुतं हन्ति । पित्तं कुरुते ।। ११ ।।**

कषायः कफपित्तं हन्ति । मारुतं कुरुते इत्यस्य सूत्रस्य तद्वदेव व्याख्यानं योजनीयम् ।

ननु षड्रसद्रव्याणां मध्ये एकरसद्रव्यस्य तत्तद्रोगनिवृत्तिकार्यं तत्तत्कर्म तत्तत्फलं च प्रतिपादितम् । इदानीं बहुरसद्रव्याणां योगकार्यस्य तत्तद्रोगनिवृत्तिरेव फलं यत्र दृश्यते तत्र अनेकरसवद्द्रव्याणां समूहकार्यकारकत्वं भवतीति मत्वा एकरोगनिवृत्त्यर्थमनेकरसद्रव्याणामनेकत्वं यत्रोपलभ्यते, तत्र बहुरसवद्द्रव्याणां एकरोगनिवर्तकत्वस्यायोग्यत्वात्, तत्तद्व्याधीनां निवर्तकत्वमनेकद्रव्याणमिति तत्तद्व्याधिनिवर्तकत्वावच्छेदकत्वस्य वक्तुमयोग्यत्वात्, एकैकद्रव्यस्य एकरोगनिवर्तकगुणत्वावच्छेदकस्य भिन्नत्वात् "बहुकल्पं बहुगुणम्" इति न्यायशास्त्रमवलम्ब्य बहुद्रव्ययोगकार्यकारकत्वमुक्तं चेत् अतिप्रसङ्गः स्यात् । एकद्रव्यमेकरोगनिवर्तकमित्यर्थस्य बहुशो दृष्टत्वात् । मलनिरोधनहेतुजन्यरोग एकस्यैव रेचकद्रव्यस्य तन्निवर्तकसामर्थ्यस्य बहुद्रव्येषु बहुशो दृष्टत्वात् । तत्रापि बहुद्रव्यकल्पनागौरवात् एकद्रव्यस्यैव एकरोगनिवर्तकसामर्थ्यस्य बहुशो दृष्टत्वात् इत्याचार्यसादाह—दोष इति ।

**दोषे त्रिदोषहेत्वन्यहेतुकविकारविरुद्धयावद्रसैक-भावात्मकैकरसादिः निवर्तकः ॥ १२ ॥**

त्रिदोषहेत्वन्यहेतुकेत्यत्र त्रिदोषाणां विकाराभावप्रागभावपरिपालनार्थं अविरुद्धरसवद्द्रव्यादनस्य फलं अनिष्टपरिहार एव भवति । दोषाणां स्वभाव-गतिकारकरसवद्द्रव्यं दोषाहेतुकम् । दोषप्रवणकार्यवद्रसविरसद्रव्यादनं विकार-कारकम् । तद्विरुद्धकार्यहेतुभूतयावद्रसवद्द्रव्यादनम् तद्यावद्रसवद्द्रव्यैकभावात्मक-बहुरसवद्द्रव्यादनयोग्ययोगकरणं एकव्याधिनिवर्तकम् ।

कषायद्रव्ययोगजन्यरसवद्द्रव्यादनं तत्तद्रोगनिवर्तकम् । बहुद्रव्ययोग्य-योगजन्यचूर्णीकृतद्रव्यरसवद्द्रव्यादनं तत्तद्रोगनिवर्तकम् ।

तैलघृतलेह्यरसायनाद्यैः अनेकैकद्रव्यजन्ययोग्ययोगकृतिजन्यसंस्कार-युक्तानेकरसद्रव्यादनं यावद्रसैकभावात्मकं यत्तदेकरसवद्द्रव्यं भवति । तदनेक-द्रव्याणां एकगुणफलं प्रयच्छति । कलियुगे सङ्घे शक्तिर्भवतीति, न तु एकस्य द्रव्यस्य रोगनिवर्तकशक्तिः, कलियुगे अभिभूतत्वात् सङ्घे शक्तिर्भवतीति प्रतिपादितम् । ब्राह्मणाशीर्वादिवत् । एकब्राह्मणवदनोच्चारितवाक्ये शक्तेरभि-भूतत्वात् तेषां सङ्घे शक्तिर्भवतीतिवत् । तत्तद्रसवद्भूरुहाणां एकस्यैव दढतरशक्तेरभावात् सङ्घे शक्तिर्भविष्यतीति बहुद्रव्यमेलनं तत्तन्निवर्तककार्य-फलम् । बहुयोगजन्यसंस्कार एव तत्क्रतुफलं प्रयच्छति । अस्मिन्कलियुगे अधर्मबाहुल्यात् व्याधयो बहवस्संभवन्ति । ततश्शरीराणामल्पत्वात् तन्नि-वर्तकानि क्वचित्फलं प्रयच्छन्ति । क्वचित्सकलसामग्र्यामसत्यामपि तत् तत्फलं प्रयच्छति । अत एवोक्तं—

तच्छान्तिरौषधैर्दानैः जपहोमार्चनादिभिः । इति ।

अस्मिन्युगे बहुसामग्री भेरवश्यं भाव्यमित्यर्थः ॥

ननु इदं द्रव्यं एतद्द्रव्य दतजातरोगनिवर्तकमिति, अयं रोगः तन्निवर्तकैकद्रव्यसाध्यः तन्निवर्तकैकद्रव्यवत्वात् इत्यनुमानविधया प्रामाण्ये स्थिते सति तत्र प्रजायते । सा प्रमा समर्थप्रवृत्तिसाधिकेति तयोः कार्यकारणभावं निश्चित्य तत्र प्रवर्तते । तत्र व्याधिनिवर्तकद्रव्यसन्देहे सति तन्निवृत्तिकार्यविषये प्रवृत्तेरभावात्, तयोर्व्याप्तिग्रहस्य सुतरामशक्यत्वात्, अयं रोगनिवर्तक इति निश्चयज्ञाने सति तत्र प्रवृत्तिः, निश्चितार्थे संशयाभावात्, तन्निश्चयस्य तद्धेतुत्वात् । एकपदार्थस्य तन्निवर्तकत्वसन्देहे सति पदार्थान्तरसंग्रहप्रवृत्तौ अतिप्रसंगस्स्यादित्यस्वरसादाह— रसादीति ।

रसादिद्रव्यसारजा[1]स्सकलामयनिवर्तकाः ॥ १३ ॥

रसासृङ्मांसमेदोमज्जाशुक्लादिधातूनां विकारे जाते सति तद्द्रव्यं तन्निवर्तकमिति निश्चित्य तत्र विरेचनविधिः कार्य इति ज्ञाने जाते सति हरीतकीप्रयोगविधिः क्रियते । तादृशहरीतक्यदनेन तदागतमलनिस्सरणं जायते । तत्र तन्निश्चये स्पष्टे त्वरितव्याप्तिग्रहस्य सुकरत्वात् । तत्र हरीतकीत्युपलक्षणम् । तद्रसगुणविशिष्टद्रव्यजातिमात्रमेव विवक्षितम् । विकारग्रस्तदोषाणां यावद्धातुसंचारित्वं यत्र प्रतीयते तावद्धातुगतरोगनिवृत्त्यर्थं अनेकद्रव्याणां योग्ययोगकरणं विधिरिति तत्र विधीयते । तन्निवर्तकयावद्द्रव्येण रसवद्द्रव्यादनं विवक्षितम् । तन्निवर्तकद्रव्यमात्रस्य तन्निवर्तकत्वावच्छेदकत्व-

[1] रसातिरसविरसातिद्रव्यसारजाः—A.

मिति तयोर्व्याप्तिग्रहणानन्तरं समर्थप्रवृत्तेरपि निश्चितत्वात् । तत्सारजा रसाः सकलामयनिवर्तका इति सूत्रार्थस्सम्यक्प्रतिपादित इत्यर्थः ।

ननु यावन्निवर्तकानेकयोग्यद्रव्याणि बहूनि सन्ति । तान्येव सन्तु भेषजानि । तत्तत्स्थितानेकरसवद्द्रव्यसमूहात्मकयावद्द्रव्यं महारसं, तादृशरसवद्द्रव्यं महारसवद्द्रव्यं भवति, अनेकरसवद्द्रव्यसमूहत्वात् बहूदीरितशब्दसमूहवत् इत्यनुमानेन बहूनां शब्दानामेकीकरणविधौ यथा महाघोषो जायते तद्वदेव बहुद्रव्यसजातीयमेलनविधौ बहुगुणं विधत्ते । क्वाथचूर्णतैलघृतरसायनादौ योग्यद्रव्याणां एकीकरणपाकजविधौ सकलामयनिवृत्तिरेतद्ज्ञानपूर्विका तत्तद्रोगनिवर्तकरसवद्द्रव्यज्ञानपूर्विका अनेकरसवद्विशिष्टद्रव्यसमूहत्वात् । अन्यथा तत्तद्भूरुहाणां प्रत्येकगुणप्रतिपादकशास्त्रस्य व्यर्थतापत्तेः । तथात्वे बहुद्रव्याणां एकरसवत्त्वासंभवात् रसानामेव गुणप्रधानत्वस्य सुप्रसिद्धत्वात् । तदेकप्रकारत्वेन तदवच्छेदकमेकमेवेति निश्चेतुमशक्यत्वादित्यस्वरसादाह—अदोषेति ।

## अदोष[1]धातुपोषकमनेक[2]सारकम् ॥ १४ ॥

तत्तद्द्रव्यनिष्ठदोषनिवृत्त्यर्थं तत्तद्विधिचोदितसंस्कारवशात् अदोषद्रव्यं बहुसारवद्बहुरसगुणवत्संभवति यत्तदेव अदोषद्रव्यमिति तद्रसवत्त्वं तत्तद्धातुपोषकयावद्द्रव्यस्यावच्छेदकं भवति । तद्द्रव्यमेकमपि अनेकरसवत्सत् तत्तद्बहुगुणं प्रयच्छतीत्यर्थः ।

ननु षड्रसवद्द्रव्याणां धातुपोषकत्वं यदा सम्भवति, तदा तेषां रसानां पवनादिप्रकोपकारकत्वस्य तथा तेषां धातूनामपि पोषकत्वस्य वक्तुमशक्यत्वात्,

[1] गर्भपोषक—A. [2] पोषकमेकमनेक—A & B.

ते रसास्तदा अप्रकोपकारका भवेयुः, तेषां धातुपोषकत्वस्य वक्तुं सुकरत्वात् इत्याशयं मनसि निधाय यद्रसेभ्यो व्याधयस्सम्भवन्ति तैरेव ते निवर्तन्त इति तदुभयमपि व्याचष्टे—पक्वेति ।

**पक्वामाशयगाः पवनाद्याः स्वादुकषायकटुकैस्तिक्ताम्ललवणैः**
**कालपाकजयोग्यैः[1] धारणरेचकात्मकद्रव्यैर्विविधैः[2]**
**द्विविधामयाः प्रवर्धन्ते ॥ १५ ॥**

पक्वामाशयगाः पवनाद्या इति पक्वाशयमलाशयगता दोषाः लवणैः स्वादुकषायकटुकैः केवलं स्वादुरसद्रव्यादनं कफप्रकोपहेतुकं भवति, स्वादुरसजन्यः पवनप्रकोपो जायते, तत्पवनप्रकोपनिवृत्त्यर्थं लवणाम्लरसद्रव्यादनं कुर्यात् । केवलं कटुरसद्रव्यादनं पित्तप्रकोपजनकम् । पित्तप्रकोपनिवृत्त्यर्थं स्वादुरसद्रव्यादनं कुर्यात् तिक्तरसद्रव्यादनं च । उभयं पित्तनिवर्तकं भवतीत्यर्थं इत्येवंप्रकारेण आयुर्वेदप्रणेतृपरब्रह्मतात्पर्यं वर्णितमित्यर्थः । तथाहि—अतिकटुरसद्रव्यादनेन पवनप्रकोपहेतुकरूक्षगुणविशिष्टद्रव्यादनात् पवनप्रकोपो जायते । कटुरसद्रव्यादतात् रूक्षप्रकोपतैजसगुणजन्यग्रहणीकलाप्रकोपस्य दृष्टत्वात् । तेन पवनप्रकोपे सति ग्रहणीकलायाः सन्धुक्षणकारकस्वभाववत्त्वेन पवनः अतिप्रज्वलनहेतुभूतो भवति । अथवा अतिमान्द्यकारको वा भवति । तस्मात्कटुरसद्रव्यादनं पित्तप्रकोपकारकं रूक्षगुणविशिष्टपवनप्रकोपहेतुभूतकटुरसवद्द्रव्यत्वात् । तेन ग्रहणीकलाया एव पित्तद्रव्यत्वात् तया अनिलसमगत्या ग्रहणीकला शुद्धा सती प्रज्वलिता भवति । तद्विषमगत्या तद्विकारो भूत्वा अनलं मन्दं करोति । तेनाजीर्णरोगाश्चाविर्भवन्तीति परब्रह्मण आशयश्च वर्णित इत्यर्थः ।

[1] कालपाकजैयोग्यैः—A & B. [2] द्विविधै—A & B.

कालपाकद्रव्यजरोगस्तत्सर्वरेचनगुणविशिष्टः । सा कला आमनिवर्तकान्तरगुणविशिष्टा । आमकारकद्रव्यं सकलामयहेतुकम् । एतद्गुणविशिष्टद्रव्यादनादामयाः प्रवर्धन्ते ।

ननु वातपित्तकफदोषैरेव तद्रोगोत्पाद कसामग्र्यां सत्यां तत्तद्रोगा आविर्भवन्तीत्युक्तम् । तच्चिन्त्यं, तथाहि—

पञ्चभूतात्मकं शरीरमिति शरीरसंरक्षणं शरीरस्यैव सर्वरोगालयत्वाच्छरीरमेव यावदुद्भूतात्मकयावद्द्रव्यान्तर्भूत वयवाधिक्यहितकार्यजातगुणकारकं यावद्भूतावयवाभिवर्धकतत्सजातीयरसद्रव्यादनजन्यत्वादिति तत्तद्भूतनिष्ठरोगाणां तत्तद्भूतावयवाधिक्यजातकार्यहेतुकत्वम् ।

**भूगुणौ गुरुमन्दौ । स्निग्धहिमावापः । श्लक्ष्णसान्द्रतराऽग्नेः । मृदुस्थिता गुरुमारुतः । सूक्ष्मविशदा वियतः । विरुद्धविषयकाः प्रतिकारकाः । देशदेहकालद्रव्यकर्मणां यथायोगो यावद्रोगघातकः ।। १६ ।।**

भ्ववयवाधिक्यगुणोपलम्भकदेहगौरवगुणोपलब्धिः मन्दगुणश्च जायते । उभावपि भूगुणौ भवतः । तत् पार्थिवावयवाधिक्योपलम्भकपञ्चभूतात्मकं शरीरमिति तद्द्रव्यावयवाधिक्योपलम्भकपार्थिवद्रव्यावच्छेदकगन्धवत्त्वज्ञानानुभवात्मकत्वं तत्पार्थिवावयवाधिक्यपञ्चभूतात्मकमिति तादृशरसवद्द्रव्याधीनं तद्विकारविशिष्टद्रव्याधिक्यपञ्चभूतात्मकं शरीरमिति ।

एवमनलद्रव्यावयवाधिक्योपलम्भकवह्नित्ववद्द्रव्य वच्छेदकतैजसगुणवत्त्वं बह्निभूताधिक्यवह्निद्रव्याधिक्यज्ञापकतैजसरूपोपलम्भकज्ञानानुभवात्मकत्वं तत्तैज-

सावयवाधिक्यपञ्चभूतात्मकमिति तादृशगुणविशिष्टपञ्चभूतात्मकद्रव्याधिक्यादनं बह्निभूतावयवविकारहेतुकम् ।

एवं सर्वद्रव्येषु योजनीयम् । तथाहि—पार्थिवद्रव्यावयवाधिक्यादनं पार्थिवद्रव्यावयवविकारहेतुकम् । जलाधिक्यगुणोपलम्भकरसाधिक्यद्रव्यादनं जलद्रव्यावयवविकारहेतुकम् । वह्निद्रव्यावयवविकारकारकं बह्न्याधिक्य-गुणोपलम्भकरसाधिक्यद्रव्यादनम् ।

इति यथायोगं यावद्रोगघातात्मकषड्रसद्रव्याणां नानारोगनिवर्तकत्वं तच्चिन्त्यम् , तथाहि—

एतत्प्रयोजनं दोषत्रयप्रकोपकारकत्वं दोषत्रयप्रकोपनिवर्तकत्वं च । देशदेहकालभेदेन तत्तद्दोषनिवर्तकमिति प्रतिपादितम् । तत्र क्षोदक्षम-मित्यस्वरसादाह—स्वस्थेति ।

## स्वस्थास्वस्थास्सामजामयास्सदोषगा विदोषगाः[1] ॥ १७ ॥

यावत्पार्थिवद्रव्यादनेन दोषः स्वस्था भवेयुः, यावद्विरसद्रव्यादनेन अजीर्णे जाते सति अन्योन्यस्थानस्थितत्वात् अस्वस्था भवेयुश्च । निर्दिष्ट-कार्यव्यतिरिक्तकार्यकारकत्वं तेषामेवावच्छेदकम् । तत्द्रव्यादनम् दोषाणां स्वस्थत्वकारकम् । विरुद्धगतिकार्यहेतुभूतद्रव्यादनजन्या ये त एव साम-जामयाः । तेषां निवर्तकद्रव्यादनेन नीरोगत्वम् ।

सदोषेति—तत्र दोषाणां ये विकृतास्ते विकारग्रस्ताः । धातुशोषक-शरीरमार्गं गच्छन्तीति ते दोषगाः तद्विकारभावकार्यहेतुकरसद्रव्यादनेन विदोषगाः विकाररहिता भवन्तीत्यर्थः ।

[1] ते दोषगा इति पाठ इति भाति.

इयं दोषविकारगतिः, इयं दोषविकाराभावगतिरिति विरुद्धाविरुद्ध-रसवद्द्रव्यादनजन्या इति प्रतिपादिताः, विरुद्धाविरुद्धरसवद्द्रव्यादनमात्र-ज्ञानहेतुकत्वात् इत्यनुमानरचनेन प्रतिपादिता सती वर्तते। बलवद्वह्न्यादिका ये एतत्प्रतिपादितार्थावच्छेदकत्वानुभवास्त एव शरीरं तथा रक्षन्ति तद्भक्षितान्नं तेनानलेन जीर्यते, एतत्प्रतिपादितार्थस्य संभावितत्वादित्यस्वरसादाह—विहितेति।

## विहितपाक[1]हेतुरसा विपाकान्तस्स्थितविरुद्धरसा विषमदोष-धातुमार्गगा[2] विषमदोषाः ॥ १८ ॥

विरुद्धाविरुद्धरसद्रव्यादनज्ञानं विहितरसविपाकान्तस्स्थरसवद्द्रव्यादन-ज्ञानपूर्वकं तद्विकारकार्यहेतुभूतरसवद्द्रव्यादनज्ञानजन्यनिवर्तकज्ञानपूर्वकत्वात्। तेऽन्तस्स्थितरसादनविरुद्धरसाः विकारकारकाः तद्विकारग्रस्तदोषा विषमदोषाः, धातुमार्गं गच्छन्तीति धातुमार्गगाः। त एव विषमदोषा इत्यर्थः। तद्विरसवद्द्रव्यादनजन्यविकारज्ञानज्ञापकं स्वहस्ततलमेव घ्राणेन्द्रियविषयक-ज्ञानग्राहकं तत्प्रत्यहं तत्रैव यावद्रसाभावदर्शनं आरोग्यहेतुकमिति प्रत्यहं विज्ञाय तत्तु भूयोभूयो दर्शनेन स्वहस्ते वा अन्तस्स्थितामयानां हेतुभूतरसाः दक्षिणहस्ततले आविर्भवन्ति। आरोग्यज्ञानं यावद्विरसादनजन्यामयहेतुकरस-विरसाभावज्ञानविषयकज्ञानं भवितुमर्हति। तथाहि—घ्राणेन्द्रियविषयहस्तगत-रसज्ञानं विपाकान्तस्स्थितामयहेतुरसविरसाविर्भावज्ञानविषयकज्ञानहेतुकरसविर-

---

[1] वातौहितरसाः [2] मार्गका—A & B.

सादनजन्यामयज्ञानहेतूपलम्भकं तद्रसवद्द्रव्याधिक्यादनम् । अनिलद्रव्यावयव-विकारहेतुकं अनिलद्रव्यादनगुणोपलम्भकतद्रसाधिक्यद्रव्यादनम् । आकाश-द्रव्य वयवविकारहेतुकमेव । एवं विरुद्धविषयस्य प्रतियोगित्वेन हेतुत्वात् ।

ननु तत्तद्द्रव्यगुणविशिष्टरसानुगुणयावद्रसद्रव्यं यावद्रोगघातकमिति वर्तते । तथाहि—गगनभूताधिक्यज्ञापककषायरसानुगुणं सत् श्रोत्रविवरप्रदेश-गतशब्दज्ञानप्रतिबन्धकश्रोत्राकाशविवरगतनाभसकषायरसाधिक्यद्रव्यं तन्निवर्तकं स्यात् । तस्मात्तद्गगनगुणाधिक्यमिति विज्ञेयम् । तथैव पवनगुणाधिक्य-द्रव्यमपि विज्ञेयम् । पवनगुणाधिक्यद्रव्यज्ञापकमृदुस्थिरगुरुद्रवद्रव्यज्ञानं विरुद्धविषयकपवनभूतावयवाधिक्यज्ञापकं पाञ्चभौतिकविरुद्धविषयकद्रव्यमिति । एवमनिलाधिक्यगुणज्ञापकश्लक्ष्णसान्द्रादिगुणाधिक्यतैजसगुणाभिवर्धकद्रव्यं — अनलभूताधिक्यज्ञापकं पाञ्चभौतिकम् । एवं जलभूताधिक्यज्ञापकस्निग्धहैम-गुणविशिष्टजलद्रव्यं विरुद्धविषयकम् ।

एवं पृथिवीत्वज्ञापके गुरुत्वमन्दत्वे । आम्लरसद्रव्यत्वात् । पार्थिव-द्रव्यावयवाधिक्यस्वादुरसज्ञापकं यत् तत्पञ्चभूतात्मकं विरुद्धविषयकम् । एतत्सर्वं विज्ञाय चिकित्सा कार्या ।

ननु चिकित्साज्ञानं विरुद्धविषयकज्ञानपूर्वकम् । विरुद्धविषयकत्वं नाम विरुद्धद्रव्यज्ञानविषयकत्वम् । तत्र विरुद्धद्रव्यज्ञानस्य प्रतियोगित्वेन हेतुत्वात् । तथा सति शरीरस्य लक्षणं पञ्चभूतात्मकत्वम् । तल्लक्षणं तद्ज्ञान-पूर्वकम् । तत्र श्रुतिः—

"आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पाञ्चभौतिकं शरीरमिति ।"

चिकित्साकाले पण्डितानां द्रव्यज्ञानमावश्यकमिति कालयोगविषय-द्रव्यज्ञानं देशयोगविषयद्रव्यज्ञानं देहयोगविषयकद्रव्यज्ञानम्—एतत्सर्वज्ञानं विना पञ्चभूतात्मकरसवद्द्रव्यज्ञानं किमासीदित्याह— देहेति ।

**देहदेशकालद्रव्यकर्मणां यथायोगकरणं यावद्रोग-घातकम्[1] ॥ १९ ॥**

देशभेदेन द्रव्यभेदं विज्ञाय चिकित्सा कार्या । कालभेदेन द्रव्यभेदं विज्ञाय चिकित्साकरणं विधिः । एतेषां कर्मकरणं यथायोगकरणं तत्तद्देशीयान तत्तद्द्रव्यभेदगुणं विधत्ते । तत्तत्कालविशिष्टदेहानां तत्तद्द्रव्यभेदगुणं विधत्ते । एवं देहदेशकालभेदेन रसवद्द्रव्याणां योगः बहुविधगुणान् प्रयच्छतीत्यर्थः। तत्तद्द्रव्यकर्मणां यथायोगो यावद्रोगघातकः ।

ननु तत्तद्द्रव्यभेदगुणं देशकालभेदज्ञानेन तत्तन्निवर्तकरसवद्द्रव्यकर्मणां कृतिः अनेकधातुसङ्कलितजनितदोषस्यापि एकधातुकत्वात् अयं द्विदोषः त्रिदोषोऽयमिति प्रतीतिः तज्जरसामयभावादेव तद्ज्ञानं कथं स्यादित्यस्वरसा-दाह—विरसेति ।

**विरसविषमपचनजातद्विदोषैकविधधातुमार्गगा द्विदोषगाः[2] ॥ २० ॥**

विरसविषमपचनं नाम विरुद्धरसवद्द्रव्यसंयोगजयावद्द्रव्यं पक्वाशयं प्रविश्य तद्द्रव्यानुगुणविकारं कुरुते । तत्पाचकानलोऽपि विकारं भजति ।

---

[1] नैतत् A. B कोशयोदृश्यते [2] एतत्सूत्रात्प्राक्—यावद्धातुविरुद्धरसादि-गततद्रसाभावदर्शनकालो दोषपचनकालः । विरुद्धरसजातयावद्धात्ववरोहणादेक-धातुकः । इति द्वे सूत्रे A & B कोशयोरधिके दृश्येते.

विषमरसपचनमपि करोति । तत्संस्कारजन्यपवनगतिः विस्वरवर्णकशब्दज्ञापक-ताल्वोष्ठपुटव्यापारं करोति । तत्पदाधारपद्मं मुकुलीकरोति । तदनन्तरमपि पित्तप्रकोपकारकरसवद्द्रव्यान्तरापादनेन तत्तत्संस्कारजातगुणान्वयमेव बिभर्ति । यदा तथाविद्विकारं करोति तदा पित्तविशिष्टपवनगत्यैव ज्ञाप्यते । रसविषम-दोषेण संस्कारजातपित्तविकारयुक्तस्सन् तत्तद्धातुमार्गं संप्राप्य सञ्चरन् तत्तद्धातून् सन्दूष्य तत्तद्विकारज्ञापनं कुरुते । तदा पित्तप्रकोपदोषोऽयमिति ज्ञातुं शक्यत एवेत्यर्थः । एवं कफप्रकोपकारकद्रव्यान्तरादनं संभवति । तदा कफप्रकोपज्ञापकगुणान्विधत्ते । कफपित्तामयगतो देवदत्तः इति तत्तद्द्रव्यगुणविशिष्टपवनस्य तत्तद्दोषगुणज्ञापकगतिः परेषामपि ज्ञाप्यत इति । अयं कफरोगयुक्त पवनविकारः द्वन्द्वयुक्तपवनविकारकफज्ञापकगतिं करोति । तदा विषमरसादनजातसंस्कारगुणविशेषपवनदोष एव अनेकधातुमार्गगति कारकशक्त्या भवति । तत्तद्धातुपोषणं च करोतीत्यर्थः ।

ननु पित्तप्रकोपरसवद्द्रव्यादनेन पित्तप्रकोपकारकगुणान् गच्छति । स एव पित्तपवनप्रकोपगत्या ज्ञातव्यः । एवं कफप्रकोपकारकरसविरसद्रव्यादनेन कफप्रकोपगुणान्विधत्ते । तदा कफप्रकोपद्वन्द्वगतिरिति व्यवह्रियते । एवमयं त्रिदोषरोग इति एवमाकारज्ञानेन व्यवहर्तुं शक्यते । तत्तज्जनकाज्ञानाम-दृष्टत्वात् 'अयं त्रिदोषरोगः' इति ज्ञानं चात्र कथं स्यादित्यह—चरमेति ।

## चरमरसपचनरोगस्त्रिदोषगः[1] ॥ २१ ॥

---

[1] एतत्सूत्रात्पूर्वं—'विषमरसानेकपथधातुमार्गगाः द्विदोषगाः ।' इति A & B कोशयोरधिकः पाठः

चरमरसपचनधातुर्मज्जाधातुश्शुक्रधातुरिति तावुभौ चरमधातू इत्युपलभ्यते । पवनपित्तकफरोगाणामस्थिधातुपर्यन्तं गतिर्भवति । तदा तद्धातुशोषणमात्रं कुरुते । प्राणघातं न करोति । यावद्विरुद्धरसादनसामग्री जातरोगस्य यदा मज्जाधातुप्रवेशो भवति तदा प्राणान्विमुच्य निर्वाणं गच्छति । तदा त्रिदोषगतिरिति विज्ञेया ।

ननु तत्तद्विरुद्धरसद्रव्यादनेन तत्तद्दोषाः प्रकुपिता भवन्ति । सर्वे रोगाः दोषप्रकोपजन्या । तत्तद्रोगनिवृत्त्यर्थं दोषपचनं कार्यमित्याह— यावदिति ।

यावद्दोषपचनं निवर्तकं ॥ २२ ॥

यावन्तो रोगाः यावद्रसदोषजन्या इति दोषप्रकोपस्य भूयोभूयोदर्शनहेतुभूतव्याप्तिग्रहजन्यानुमानं तत्र प्रमाणमित्यर्थं । पक्वाशये विरसप्रधानास्ते दोषाः विकारं भजन्ति । धातुमार्गे सञ्चरन्ति च । अनलाद्यामरसास्ते प्रादुर्भवन्तो घ्राणेन्द्रियविषया भवन्तीत्युक्तम् । तद्विरुद्धदोषगमनप्रतिबन्धकार्यं तत्पाचनविधिप्रयतनं लङ्घनकरणेन प्रेक्षणीयम् । स एव फलितार्थं इत्याह— यावदिति ।

यावद्धातुप्रसादाधीनो दोषपचनकालः[1] ॥ २३ ॥

विरुद्धरसजातरसामृग्धातुविकारकारकस्यामरसवद्द्रव्यादनजन्याजीर्णजन्यकफरोगः । विरुद्धरसजाततद्दिनरपवनपित्तविकारहेतुकरसविरसद्रव्यादना-

[1] रसाजीर्णविरसाधिकविरुद्धरसजदोषाधिक्यवशान्निर्गतस्वस्थानच्युतो बहिरुज्ज्वलयन् ज्वरस्सामजातः । विषमरसपचनरसविरसादियावद्धातुप्रसादाधीनो दोष— इति A & B कोशयोः पाठः

भावकार्यावलम्बिलङ्घनकरणमेव भेषजं भवति । यावद्धात्वधिरोहणपर्यन्तं लङ्घनकरणं भेषजं भवति । तदितरदोषाभावकार्यकरणं सुभेषजं भवतीत्यर्थः । स एव यावद्धातुगतसामयैकधातुगतामय इति ज्ञेयम् ।

पक्वाशयेन सान्द्रसान्द्रानलेन दोषविकारपाचनविधि प्रयतनं लङ्घनकरणमेव फलितार्थः ।

ननु दोषप्रकोपाभावज्ञानं तत्तद्रोगकार्यहेतुभूतविरसादनविषयकज्ञानव्यतिरिक्तज्ञानजन्यज्ञानविषयक, समर्थप्रवृत्तिजनकज्ञानविषयकत्वात् इत्यनुमानप्रयोगप्रकारेण रोगनिवृत्तिज्ञाने सति रोगाभावज्ञानं जातम् । तेन दोषप्रकोपनं विना तदभावज्ञानं कथं लभ्यत इत्याशयं मनसि निधाय विरुद्धेतिसूत्रस्य अवसरमान्तरमाह—विरुद्धेति ।

**विरुद्धरसजातयावद्धात्वधिरोहणादेकधातुकः ।। २४ ।।**

अस्यार्थं व्याचष्टे—

एकविरुद्धरसवद्द्रव्यादनजन्याजीर्णजन्यसंस्कारविशेषदोषधातुगतिः एकविरसद्रव्यादनजन्या सा गतिः विरसद्रव्यादनजन्याजीर्णजाता सती अनेक धातुसंचारकार्ये दृष्टे सति एकरसविरसद्रव्यादनजाताजीर्णवत्त्वं अनेकविरसादनजन्यत्वाभावेन अयं एकधातुविकारकरोग इति ज्ञानं कथं प्रवर्तते ? तस्माद्विरसादनजातरोगः यावद्धात्वारोहणात् अयं एकधातुगतिजातरोगः, अयं द्विदोषगतिजातरोगः इति ज्ञातुं निवर्तकाभावहेतुरोगाभावस्य तद्धेतुत्वज्ञापकत्वात् तदभावाद्यहेतुत्वात् अजीर्णजन्यरोगाभावकार्यं तद्धेतुनिवर्तकलङ्घनेनैव भाव्यं, इति अनुमानप्रमाणेन यत्र अजीर्णाभावः तत्र रोगाभाव इति तयोः व्याप्तौ सत्यां दोषपचनं निवर्तकं स्यादिति न वाच्यम् ।

दोषाः दुष्टास्सन्तः क्षुभिता भवन्ति । तद्धातुक्षोभ एव प्राणघातं करोति । तस्माद्दोषाणां अविकारगतिज्ञानपर्यन्तं लङ्घनकरणं आवश्यकमिति ध्येयम् । तेन दोषप्रकोपनिवृत्तिर्भवतीत्यर्थः ।

ननु विरुद्धरसवद्द्रव्यादनेन अजीर्णे जाते सति तदजीर्णजीर्णतापर्यन्तं लङ्घनकरणं विधिः दोषप्रकोपनिवृत्तिपर्यन्तं योग्यत्वात् अजीर्णजन्यपवनस्य लङ्घनकरणेनाजीर्णनिवृत्तौ सत्यां पवनप्रकोपनिवृत्तेः दृष्टत्वात । तत्र तैलादिकं निवर्तकं भमति । पित्तदोषप्रवर्तकरसद्रव्यादनादजीर्णे जाते सति तत्प्रकोपो भवति । लङ्घनकरणादेः पित्तनिवर्तकत्वात् काथेन चूर्णेन वा तन्निवृत्तिः । एवं पचनविकारकारकद्रव्यादनेन अजीर्णे जाते सति कफविकारो जायते । कषायकल्कचूर्णादयस्तत्प्रतिकारका भवन्ति ।

एवं तत्तद्रोगाणां बहूनि निवर्तकानि । दोषा अजीर्णेन प्रकुपितास्सन्तः यावत्कालं धातुक्षोभं कुर्वन्ति । तत्रायं लङ्घनकरणविधिः ।

अजीर्णजन्यसंस्कारे धातुशोषैककार्ये विकारे दृष्टे सति तत्तज्ज्वरो जायते । तत्र आमदोषपचनरस्य नियामकत्वात् । तदजीर्णजन्यमन्तस्स्थितं सत् तद्विरससर्वरसान्तरं भजति । तत्संस्कारजन्यदोषः दोषान्तरं भजति । स दोषः धातुमार्गं गत्वा धातुक्षोभकार्यकरणं करोतीति यत्तस्य स्वहस्ततले विरसगन्धज्ञानभेदं यदादावुपलभते तदैव तत्तद्दोषाविर्भावकार्यस्य तत्तत्प्राग-भावज्ञानाभावज्ञानविच्छेदनपर्यन्तं दोषप्रकोपजन्यरोगान्तरकार्यस्य हेतुभूतत्वात् तादृशज्वरस्य निदानं स्वहस्ततले तत्तद्गन्धज्ञानमेव नियामकं लभ्यते । तावत्पर्यन्तं लङ्घनकरणं भेषजं भवतीत्यर्थः ।

ननु अस्थिगताजीर्णजन्यरसविरसजन्यभेदविशिष्टज्वरभेदज्ञाने जाते सति तावत्कालपर्यन्तं लङ्घनविधिर्भवतु । आगामिजन्यदोषागतिजन्यकार्यं विषमज्वरकार्यम् । तस्य लिङ्गज्ञाने जाते सति तयोर्व्याप्ति भूयोदर्शनेन तत्सहचरज्ञानं संगृह्य भेषजं कर्तुं शक्यते । आगामिरोगस्य लिङ्गज्ञानाभावात् कथं लैङ्गिकज्ञानावधारणं भवेत् ? इत्यत आह—रसेति ।

**रसाजीर्णविरसाधिकविरुद्धरसजदोषाधिकैकवशाभिभूतस्स्व-स्थानच्युतो बहिरुज्ज्वलयन् ज्वरस्सामजातः[1] ॥२५॥**

ननु दोषाणां पचनमिति विग्रहः । अत्र षष्ठीतत्पुरुषः । तत्पाचनमेव निवर्तकं कर्मेति प्रतिभाति । दोषाणां शरीरस्थितधातुगत्यविकारैकफलस्य संभावितत्वात् लङ्घनेन दोषपचनं अवश्यकं कार्यमित्युक्ते सति बन्धः स्यात् । धातुपोषकपुरुषार्थोपकारककर्मणि तद्दोषपचनार्थं लङ्घनकर्मकरणस्य दोषस्य बलहीनकार्यकर्मणस्समर्थनैकस्वभावत्वात् । कारणबलाधिक्यकार्ये कर्तव्ये सति तद्धेतुबलहीनकार्यकर्मकरणस्य तथात्वात् । धातुपोषकपुरुषार्थोपकारक-कर्मणि तद्दोषपचनार्थं लङ्घनकर्मकरणस्य तथात्वात् । तेषामन्त्यपवनदोषहीन-पचनकार्यं सूच्यते । तस्मात् विरसाज्जाताजीर्णनिवृत्तिपर्यन्तं लङ्घनकरणं विधिरिति । अन्यथा रसाजीर्णेन रसा विरसा भवन्ति । तद्विरसबाहुल्येन दोषा अपि बलहैन्यवन्तो भवन्ति । हीनकारणेन हीनकार्यं भवति । यत्र विरुद्धा रसा आविर्भवन्ति तत्र दोषा अपि दुष्टा भवन्ति । तद्दोषविकारा-

[1] एतत्सूत्रं A.B. कोशयोः "यावद्धातु" इत्यादिसूत्रात्प्रागेव दृश्यते.

धिक्यवशात् विरसजन्याजीर्णे वृत्ते सति दोषविकारगत्या अग्निमन्धुक्षण करणमपि न क्रियते । जठरानलः स्वस्थानं विहाय बहिः प्रज्वलन् स तु सामज्वरमाविर्भावयतीत्यर्थः ।

ननु लौकिकसामग्रीमात्रं न कारणं सुकर्मकरणविधविद्यादयोऽपि संभवन्ति,

पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते ।
अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ॥

इति वार्तिकवचनानुसारेण ज्ञातव्यम् । रसविरसवद्द्रव्यादने जाते सति केषांचिद्व्याधयस्संभवन्ति इति सर्वत्र नियमेन वक्तुमशक्यत्वात् "सर्वं बलवतः पथ्यं" इति न्यायवचनानुसारेण बलवद्विषये रसाजीर्ण-विरसाधिकविरुद्धरसे जाते सत्यपि तत्र रोगो न दृष्टः । लौकिकसामग्री-मात्रमेव क्वचिन्न कारणम् । आमाद्यात्मककार्याणां संभावितत्वात् प्रारब्धकर्मणां बलित्वात् सर्वत्रापि रसाजीर्णजन्यरोगास्सम्भवन्तीत्येतत्प्रतिपादनं व्यर्थं स्यादिति । तेन यत्र रोगोत्पादकामवृद्धिर्भवति तत्र तादृग्रोगकार्यमाविर्भवति । तथाहि—रसाजीर्णविरसाधिकविरुद्धरसजकार्यवैचित्र्यात् तत्तद्रोगजनककारण-वैचित्र्यं पुनर्वक्तुं शक्यते । यावदजीर्णजन्यामयस्य लङ्घनमेव निवर्तकं रोगनिवर्तकसामग्र्यतिरिक्तसामग्रीनिवर्त्यत्वात्, लङ्घनादिसामग्रीकार्यं विना अनिवर्त्यत्वाच्च । तस्माद्विरसद्रव्यादनसामग्री यादृशी भवति तद्रोगकार्य-वैचित्र्यं तादृशं संभवति । तथाहि—सर्वे रोगास्संजातास्स्वजनकाधिक्य-वशाद्यथोदशरूपज्वरास्सन्निपातविकारासंभवन्ति । स्वादुरसविरसत्वजात-यावत्कार्यं शिरःकमलस्थामृतं सर्वसिरारन्ध्रभागमुपगम्य विरसविषमदोष-

संपर्कवशात् यदा विकारो जायते तदा आमरसः स्वादुरसजाततान्द्रिक-दोषनामकरोगाकृतिज्वरं ज्वलयति । रसाजीर्णविरसाधिकविरुद्धरसाजीर्ण-जातत्वात् । तद्धि स्वादुरसः रसाजीर्णरोगः तान्द्रिकदोषः । स तदधीनरस-विरसः संग्रहजातरोगत्वात् पवनगतिवशात् आमविरससंग्रहसंसर्गाज्जायते । तत्र अमृतसंपर्कः पोषको भवति । पवनगत्याधारकाजीर्णजनकसरन्ध्रकाभ्यन्तर-धरसिरामार्गगतपवनस्य सगन्धिमन्धिदोषप्रयुक्तसामज्वरज्ञापकपादपञ्चस्थावर्णोप-धगबीजपार्श्वमेढ्रपृष्ठप्रदेशगतकवर्गपञ्चकवर्णसमूहपदव्यञ्जकेतरवर्णोच्चारणपद - गतिसाजात्याभावज्ञानविषयकं भवितुमर्हति । रसाजीर्णविरसाधिकविरुद्धरस-जन्यदोषाधिक्यवत्त्वात् । यन्नैवं तन्नैवमिति । सन्धिगतदोषप्रयुक्तसामज्वर-पादबीजपार्श्वमेढ्रपृष्ठप्रदेशक्रमात् अवर्णोपगतकवर्गपञ्चकात्मकपदज्ञापकचतुस्त्रि-शत्षट्त्रिंशत्सिरासंस्पर्शवशात् नाभिशूलपादशोभाङ्गवेदनाबलोपद्रवज्ञापककफ-प्रणवतापान्तरदोषप्रयुक्तसामज्वरज्ञापकजानुपञ्चस्थायिपवर्णोपधपृष्ठप्रदेशजठर - नाभिपञ्चगतचवर्गपञ्चकवर्णपदाभिव्यञ्जकेतरवर्णसाजात्याभिज्ञानविषयकं रसा-जीर्णविरसाधिक्यविरुद्धरसजन्यदोषाधिक्यवत्त्वात् अयमान्तरदोषयुक्तसामज्वरः जानुपृष्ठप्रदेशनाभिपञ्चगतजानुपञ्चगतेवर्णबोधकचवर्गपञ्चकचतुस्त्रिंशत्सिरासंस्प - र्शवशात् दाहविदाहविविधमोहयातनातिशिरःकम्पकरातिसारहिक्कातिश्वासा-दिविगुणविशिष्टान्तरदोषप्रयुक्तसामज्वरः ज्वलयति । सर्वधातुमार्गं दशदिन-पर्यन्तं धातुषु सञ्चार्य प्राणान्वियोजयति । तस्मादान्तरदोषोऽयमिति व्यवह्रियते ।

अयमान्तरदोषः जानुपञ्चगतेवर्णबोधकपृष्ठपार्श्वगतनाभिप्रदेशस्थेवर्णोप-धचवर्गवर्णपञ्चकात्मकपदार्थावबोधकवर्णसमूहपदकदम्बकवाक्ये ' चवर्गोचित-वर्णतरेभ्यो भिन्नघोषात्मकवाक्यं श्रावयति । तद्वर्णभेदमवश्यं विज्ञाय तदा

तद्विरसार्थजन्यामपित्तसंस्पर्शात् तत्सिरामार्गगतामृतं तत्पद्माधिष्ठितधातुशोषणं करोति । तत्प्रतीकारकमपि भवति । सोऽयमसाध्यरोग इति विज्ञेयम् ।

विरुद्धाहारदोषप्रयुक्तसामज्वरज्ञापकजङ्घापद्मस्थावर्णबोधकत्रिंशत्सिरावृतनाभ्यावृतचक्रपद्मचतुस्सिरावृतरोमराजिहृत्पद्मचतुस्त्रिंशत्सिरावृतहृदयपद्मं च टवर्गपञ्चकवर्णात्मकपदाभिव्यञ्जकेनरवर्णसाजात्याभावज्ञानविषयकं रसाजीर्णविरसाधिक्यविरुद्धरसजन्यदोषाधिक्यवत्त्वात् यन्नैवं तन्नैवं, इत्यनुमित्या विरुद्धमविशिष्टसामज्वरं जङ्घापद्मनाभ्यावृतपद्मरोमराजिपार्श्वपद्महृदयपद्मानि जङ्घापद्मस्थवर्णप्रयुक्तकवर्गपञ्चकज्ञापकोवर्णोपधगवर्णात्मकपदसमूहवाक्यजन्यज्ञानं जङ्घापद्मावलम्बकविंशतिसिरावबोधकनाभ्यावृतपद्मावलम्बकत्रिंशत्सिरावबोधक - रोमराजिपार्श्वाधारकद्विद्विसिरावृतवर्णबोधकहृदयपद्मस्थावलम्बकचतुस्त्रिंशत्सिरावृतवर्णबोधकसकलसिरासंस्पर्शवशात् वेदनासहितरूक्षोपससर्थ दह्यते । नाभ्यावृतचक्रपद्मस्य वृत्तावृतप्रदेशत्वात् । तत्र ज्वरः ज्वलयति । कुक्षौ च तद्वदेव प्रतिभाति । हृदयपद्ममपि ज्वलयति । दाहं करोति । भ्रमोऽपि भवति । तस्मादेतल्लक्षणलक्षितत्वात् स रोगी जीवति । अयं सामज्वरः पित्तदोषप्रकोपजन्यः, पित्तदोषप्रकोपकार्यकत्वात् । तत्तत्पद्मावलम्बकसिरान्ध्रगतामृतस्य रसाजीर्णविरसाधिकविरुद्धरसजदोषाधिक्यसंस्पर्शवशात् जङ्घापद्मप्रदेशं ज्वलयति । नाभ्यावृतपद्मप्रदेशश्च तद्वदेव दह्यते । हृदयपद्मप्रदेशे च तथैव दुःखं करोति । तत्पद्मगतवर्णविकारज्ञापकपदार्थात्मकविषमरससंस्कारव्याप्तवर्णामृतपोषकद्रव्यत्वाद्दाहं करोति । मूर्च्छामापादयति । स एव दोषज्वरः विभ्रमदोष इति व्यवह्रियते । ऋवर्णजनकमूरुपद्मं च तवर्गपञ्चकपञ्चाशत्सि-

रावृतस्तनद्वयपद्मं च त्रिंशत्सिरावृतकण्ठदेशपद्मं च षोडशसिरावृतग्रीवान्तःस्थितपद्मं च पवनगतिधारकसिरारन्ध्रमार्गे रसाजीर्णविरसाधिकविरुद्धरसजदोषाधिक्यसिरासंस्पर्शवशात् जातदोषः सिराङ्गदोषयुक्तस्सामज्वरः पञ्चदशदिवसपर्यन्तं धातुमार्गेषु संचरन् तत्प्रदेशस्थितपद्मप्रतापकामयत्वात् सदोषसिरागतसर्वाङ्गगतज्वरनिवृत्त्या रसधातुरसाजीर्णविरससंस्पर्शवशात् स रसः धातुविकारो भूत्वा शीताङ्गं करोति । ऋषवर्णजनकश्रोणिप्रदेशपद्मं त्रिंशत्सिरावृतं पफवर्णबोधकषोडशसिरावृतपद्मं च बभवर्णावलम्बकपञ्चाशत्सिरावृतपद्मं च वर्णोद्वचनप्रलापनकरम् । सामज्वरः अयं प्रलापदोष इति व्यवह्रियते । चतुर्दशदिनपर्यन्तं ज्वरावृत्तिः, दोषप्रकोपकालावधिः । एवर्णजनककटिप्रदेशगतचतुस्सिरावृतं सन् यवरलशवर्णानामुपधाभूतं भवद्द्विसिरावृतयवर्णाधिष्ठितरसबन्धनपद्मं च षोडशसिरावृतरेफवर्णज्ञापकोष्ठपद्मप्रदेशं च लवर्णबोधकद्विसिरावृतगन्धवाहपद्मं च रसाजीर्णविरसाधिकविरुद्धरसजन्यदोषाधिक्यवशात् द्विसिरावृतयवर्णज्ञापकरसबन्धनपद्मस्य षोडशसिरावृतरेफवर्णज्ञापकोष्ठप्रदेशपद्मस्य विकारं कुर्वन् कर्णकुब्जदोषविकारात्मकः बहिरेव ज्वलयन् ज्वरस्सामजातः ।

एककारणजन्यसामग्रीजातज्वरः तत्तद्वर्णाधिष्ठिततत्तत्पद्मावलम्बकसिरासंस्पर्शवशात् तत्तद्वर्णज्ञानभेदविषयकज्ञानं तत्तद्दोषयुक्तसामज्वरभेदविषयकपूर्वकं तत्तद्वर्णाधिष्ठितपद्मावलम्बकसामविषयजन्यसिरासंस्पर्शभेदजन्यज्ञानविषयक – त्वात्, यन्नैवं तन्नैवं यथा घट इत्यनुमानप्रमाणेन वर्णभेदज्ञानविज्ञानानुभवस्य दोषजन्यज्वरज्ञानविषयज्ञानानुभववत्त्वादित्यर्थः ।

ननु सर्वे रोगाः आमरसविरसजातामयाजीर्णविरसविपर्ययात् जातरोगकार्याः पक्वसामग्रीजन्यसामज्वरसमयभेदात् नानारूपा भवन्तीत्यर्थः । तस्मात्

एककारणजातकार्यस्यापि समर्थोऽथवाघाछिन्नत्वेऽपि कारणवैचित्र्यसंभावितत्वात् जन्यमप्येकमेव कारणं सर्वस्य जन्यत्वाविशेषात् । अजीर्णजन्यकार्यावच्छेदकं अजीर्णमात्रनिवर्तकमेव निवर्तकम् । अत एवाजीर्णजन्यामयाश्च अजीर्णजन्यविरसविषमरसजातरोगाश्च तत्तत्कारणभेदभिन्ना भवन्ति । अजीर्णजन्यामयेभ्योऽजीर्णविरसविषमादनजातरोगाणां भिन्नत्वात् तत्तन्निवर्तका अपि भिन्ना भवन्तीत्यर्थः । तथाऽपि अजीर्णमात्रजन्यामयानां लङ्घनकरणमात्रमेव केवलं निवर्तकम् । तत्र निवर्तकान्तरसामग्रीमपि नापेक्षते अलङ्कारणसामग्रीजन्यत्वात् । तद्विषमरसामयजन्या जीर्णव्यतिरिक्तद्विरसविषमरसादनात् नानारोगा भवन्तीत्याह—विषमरसेति ।

## विषमरसपचनरसविरसादियावद्धातुप्रसादाधीनो दोषपचनकालः ॥ २६ ॥

विषमरसादनाज्जातरोगाणां यावन्निवर्तककरणं विषमरसदोषजन्यसंस्कारकार्यस्यैव पुरुषार्थत्वात् । तद्विषनिवृत्तिकार्यस्य विषमरसवद्द्रव्यादनजातकार्यजन्यसंस्कारविशेषश्च एव निवर्तकः । तस्मादजीर्णजन्यामया अपि भिन्नाः अजीर्णजन्यविरसविषमजन्यदोषजन्यत्वात् । अजीर्णस्य उभयत्राप्येकत्वेऽपि तज्जनकीभूतरसानां भिन्नत्वकारणवैचित्र्यात् कार्यमपि भिद्यत इत्यर्थः ।

ननु सामज्वरस्समयभेदात् भिन्नः बहुरूपवदुपायवैचित्र्यात् । काचिज्ज्वरोत्पादकसामग्री अजीर्णरूपा । काचित्सामग्री अजीर्णजन्यविरसविषमरससिरासंस्पर्शजन्यदोषविषमगतिकारकसामग्री । तन्निवर्तकं तु तद्विरसानेकरस द्रव्यादनसामग्री । यावद्दोषजन्यधातुविकाराभावपर्यन्तं दोषविकारगतिनिवृत्ति-

पर्यन्तं तत्तन्निवर्तकेन तत्तत्पचनं कुर्यादिति वक्तव्यम् । तथा सति अस्थि-मज्जाशुक्लधातुगता सती यावद्दोषगतिः प्राणहानिं कुरुते । तेषां निवर्तकानाम-प्रयोजकत्वात् श्रेयान्प्रसादाधीनो दोषपचनकाल इति तावद्दोषपचनमारोग्य-कारकं न भवतीत्यस्वरसादाह —एवमिति ।

एवमेकधातुगतास्सुसाध्याः[1] ॥ २७ ॥

एवमुक्तरीत्या सर्वदोष एकधातुगतिजन्यविकारः यत्र प्रदृश्यते तत्रायं नियमः । न द्वित्रिदोषेषु नियमः । एवंप्रकारेण एकधातुगतव्याधीन सुसाध्यत्वमित्यर्थः ।

ननु दोषप्राणा गतिः केनोपायेन ज्ञातव्या ? पवनदोषगतिः स्वाभाविकाविकारवेद्या । पङ्गुकफः पङ्गुरिति तयोर्गमनस्य वक्तुमशक्य-त्वात् ।

नाभिप्रदेशपर्यन्तं पादपद्मादारभ्य बीजप पर्यन्तं पवनप्रदेशः । बीजपार्श्वपद्ममारभ्य हृदयपद्मपर्यन्तं पित्तदेशः । तदूर्ध्वदेशः शिरःप्रदेश-पर्यन्तं कफप्रदेशः । एवं देशभेदं विज्ञाय दोषाणां गमनमीदृङ्निश्चित्य अयं साध्यरोगः अयमसाध्यरोग इति व्यवहर्तुं शक्यते । दोषस्य दोषान्तरेण संसर्गो द्वन्द्व इति । क्वचित्त्रयाणां दोषाणां समाहारत्वं त्रिदोषत्वम् । सर्वं केनाकारेण ज्ञातव्यमित्यस्वरसादाह—द्विरसेति ।

---

[1] A & B कोशयोरेतत्सूत्रं चतुर्थप्रश्नस्यान्तिमं सूत्रम्.

द्विरसजद्विदोषप्रचारमांसमेदोनुगतरसप्रधानैकदोषपचनद्विदोषजा दुस्साध्याः ॥ २८ ॥

द्वयोर्वातपित्तयोः प्रकोपकार्यहेतुभूतौ यौ रसौ, अल्पस्वादुरसविरसः पवनप्रकोपहेतुकः । अधिकस्वादुरसविरसः पित्तप्रकोपहेतुकः । तावेव विरसौ कार्यभेदकारकौ । ताभ्यामुत्पन्नो विकारः द्विरसजः । द्विदोषप्रचारेति । चरतीति चरः । प्रकृष्टं चरतीति प्रचरः । रसासृङ्मांसधातुविधा ये ते मांसमेदोऽनुगता इति । शिरः षट्कमलात्मकं, मांसाधारकं शिरः । मेदोधारकं भिन्नम् । तद्धातुशोषकरसौ भिन्नौ । तत्र स्वानुगतकार्यमुद्दिश्य प्रवर्तकौ यौ रसौ तावेव प्रधानभूतकर्मकारकौ । एवं रसप्रधानैकदोषपचनं यत्रोपलभ्यते तत्रेयं सूत्रप्रवृत्तिः । प्रकारान्तरमपि द्योत्यते । रसविरसजन्यदोषप्रकोपस्य पचनलङ्घनौषधैः प्रकोपराहित्यकरणमेव पचनमिति केचिद्व्याख्यानं व्याचक्षते । रसप्रधानैकदोषपचनं रसोपरसलोहादीनां महारसानां योगकर्म सर्वरोगनिवर्तकमिति विवक्षितम् । तद्द्रव्यनिष्ठरसाः तैजसा इति व्यवह्रियन्ते । तत्सजातीयानलसंयोगेन तद्रसेषु तत्तद्गुणा आविर्भवन्ति । एतत्सर्वं तैजसद्रव्यं आमविरसविषजन्यप्रकोपजन्यरोगाणां निवर्तकम् । रसवद्द्रव्यनिष्ठपड्रसादीनां अनलसंयोगजन्यरसविशिष्टद्रव्यमधिकरसाविर्भावप्रभावहेतुकं, अधिककालरसगुणप्रधानरूपकाकारद्रव्यत्वात् तैलघृतलेह्यादिवत् ।

अनलसंयोगजन्यमहारसवद्द्रव्यनिष्ठपड्रसादिरसगुणः कालपानयोगकरणजातरसविरसादिविभावादेव रसगुणविशिष्टगुणप्रधानशीलकः अनलसंयोगजन्यगुणाविर्भावगुणविशिष्टकालाधिक्यद्रव्यत्वात् यन्नैवं तन्नैवं यथा काष्ठादिः इत्यनुमानप्रमाणज्ञानस्य तदधिकरणज्ञापकत्वं विवक्षितम् । एवं द्वन्द्वरोगाणां , सर्वपदार्थेषु निवर्तकज्ञानमनिवर्तकज्ञानमुभयज्ञानविषयकज्ञानं रोगनिवर्तककार्यहेतुकम् । निवर्तकैकनिवृत्तद्रव्यत्वात् इतररसोपरसलोह-

साधारणमहारसानामन्यद्रव्यसंयोगजन्ययोगकरणं गुणं प्रयच्छति । तद्वि-रसान्तरप्रापकसामग्रीसान्निध्याभावद्रव्यत्वात् ।

ननु यावद्दोषप्रकोपहेतुकविरसद्रव्याजीर्णजन्यज्वराः तत्तद्दोषनिवर्तकाः दोषप्रकोपजनकस्वादुरसविरसद्रव्यजाताजीर्णजन्यज्वराः तत्तद्दोषनिवर्तकाः दोष-प्रकोपजनकस्वादुरसविरसद्रव्यजाताजीर्णजन्यत्वात् । अजीर्णजन्यविरसरसाः ज्वरोपद्रवकार्यं कुर्वन्ति, तदुपद्रवविशिष्टज्वरनिमित्तकद्रव्यत्वात् ।

ज्वरप्रकोपज्ञानजनकदशोपद्रवरोगाणामुत्पत्तिं दर्शयितुं व्याचष्टे—एवमिति ।

**एवमन्योन्यदोषजाताश्च ॥ २९ ॥**

अन्योन्यनिमित्तकज्वरोपद्रवाः दशाविर्भवन्ति । श्वासमूर्छाभ्रमच्छर्दि-तृष्णातिसारहिक्काकासाङ्गवेधनमूढातिरोगाः । एते ज्वरोपद्रवा दश । तदुप-द्रवाविर्भावजनकसामग्री ज्वरप्रकोपकार्यहेतुभूतामरसविरसविषक्रिमिसंस्पर्शनं यावद्व्रणधारकपञ्चावलम्बकसिरासंस्पर्शजातपवनगतिविकारजन्यतत्तद्रोगकार्यसि-रागतपवनगतिजन्यरोगात्मकान्योन्यसंसर्गहेतुभूतत्वात् । एवमन्योन्यदोषजात-रोगाः ज्वरप्रकोपकार्यहेतुका इत्यर्थः ।

ननु विरसाधिक्यजातज्वरः मांसमेदोदोषगत इत्युक्तत्रिविधरसाधिक्य-जातज्वरश्चेत् अस्थिमज्जाधातुपर्यन्तं ज्वरोऽनुधावति । दोषत्रयप्रकोपजनक-विरसजातज्वरस्य अस्थिमज्जाधात्वधिरोहकत्वात् । अयं त्रिदोषज्वर इति व्यवहर्तुं शक्यत इत्यत आह—द्विरसेति ।

## द्विरसाधिकैकजातत्रिदोषरसरूपानुगुणरोगा असाध्याः[1] ॥ ३० ॥

वातपित्तप्रकोपजनका द्विरसाः आमरसस्थितकालजातज्वरप्रकोपकारका भवन्ति । तदा आमरसविरसत्वं विरुद्धकार्यजनकं द्विरसादिविरसान्तरजनककालहेतुकद्रव्यत्वात् इति । एष ज्वरः सप्तधातुगतस्सन् प्राणघातको भवति । तादृशरोगोऽसाध्यो भवति । तथा हि—

तत्तज्ज्वरोत्पादकामरसविरससामग्रीकार्यं ज्वरोत्पादककार्यमात्रं सप्तधातून्विशोष्य प्राणान्विमोचयति इति यदुक्तं तच्चिन्त्यम् । आमो ज्वरमात्रोत्पादकसामग्री ज्वरं जनयित्वा स्वयं तत्क्षणजन्यसंस्कारं तत्तत्कार्ये विधाय स्वरूपान्न दृश्यते । तेषु पीनदसामग्रीजन्येषुवत् (?) सर्वज्वराणामजीर्णजन्यत्वात् !

ज्वरोत्पादकसामग्रीमात्रजन्यज्वरः प्राणान्विमोचयतीति यत्तत् तथाचेदतिप्रसंगस्स्यादित्यस्वरसादाह—एवमिति ।

## एवमेकधातुगताश्चासाध्याः[2] ॥ ३१ ॥

एवमुक्तरीत्या तदुपद्रवरोगाश्च प्राणघातकाः । तद्विरसजन्यदोषानुसरितज्वरहेतुकप्राणापकारकद्रव्यत्वात् । विषादनजातरोगवच्छरीरवत् ; वर्णोपधगपद्मानुसारिकवर्गपञ्चकज्ञापकपद्माधारकसिराः धातुशोषकपोषकाः तदा-

---

[1] एतत्सूत्रात्पूर्वं—" अस्थिमज्जानुगतानुसारितप्रकोपजाता असाध्याः । एवमन्योन्यदोषजाताश्च " इति A & B कोशयोरधिकः पाठः.

[2] A & B कोशयोरेतन्न दृश्यते.

धारकरसवदाश्रितशरीरत्वात् । तद्विरसानुसरितसंस्कारोद्बोधकसंसर्गसिराविगत-दोषगतिविकारकार्यकारकोपयोगिरसधातुत्वात् । अधीतधातुं संप्राप्य पवन-विकारकारकगतिः तदन्यविकारकारकत्वात् श्वासं च मूर्छां च (करोति) । तदुभयोरपि रसधातुजत्वेन दृश्यत्वात् । एवं रसधातुं संशोष्य अन्यधातुशोषं कर्तुं स एव ज्वरः तद्धातुं संप्राप्योज्जृम्भते । भ्रमच्छर्दी भवतः । एवं मांसधातुं संप्राप्य हिक्कादिशोकौ भवतः । एवमेवान्यधातुं संप्राप्य भ्रम-हिक्कारोगौ जायेते । स एव ज्वरः कासमन्वहं जनयन् वर्तते । अस्थि संप्राप्य शोफं करोति । स सव ज्वरः वातपितकफानुसरितस्नमज्जाधातु-मवलम्ब्य विजृम्भते । तदा स दशविधरोगाकारो भवति । एवमन्यदोष-जाश्चेति सूत्रव्याख्यानं कृतम् ।

ननु रसविरसजन्यविरसाधिकविरुद्धरसदोषाः सर्वरोगहेतुकाः । अजीर्णगुणाविर्भावज्ञानाभावजन्यविरसजन्यदोषविकाराभावज्ञापकशुद्धरसज्ञान-दोषाः विकाराभावकार्यकारकाः । एवं दोषाः सर्वरोगहेतुकाः ।

एवं दोषाः दुष्टास्सन्तस्त्रयोऽपि विकारकारकाः भवेयुः दोषधारत्वात्म-शरीरिणः । सुकर्मपरिपाकवशात् दोषा अदुष्टास्सन्तः विकारप्रतिबन्धका भवेयुः । सर्वे रोगाः विरसजाता इति यत्प्रतिपादितं तन्न, क्षोदक्षममित्य-भ्युपसादाह—अदोषा इति ।

**अदोषास्सदोषास्समदोषास्सरुजा रुजः ॥ ३२ ॥**

प्राणापानव्यानोदानसमानाः पञ्च वायवः शरीरकार्योपकारकाः । शरीरधारकस्य अदोषत्वं कथं सम्यक्तया भासते ? तस्यापि दोषत्वादेव सदोषपञ्चरूपोपपन्नं संगृह्णाति पचति, विदेशयति, मुञ्चति—इत्येतेषां

पञ्चविधकर्मणां शरीराधारकत्वाच्च कफदोषस्यापि शरीरदार्ढ्यकारकत्वात् दोषत्रयं शरीरं रक्षति । तस्माददोषत्वं कथं शरीरोपकारकमिति नाशङ्कनीयम् ।

दोषाणां विकारकारकत्वाभावः अदोषशब्दार्थः । सदोषाः विकारकार्योपादकगतिगुणविशिष्टदोषाः । सदोषास्सप्तधातुशोषकारकाः । तस्माच्छरीरस्य सदोषत्वं दुष्कर्मानुभववशाल्लभ्यते । तेन धातवः पीड्यन्ते । दुःखं चानुभूयते । समदोषत्वं नाम तदुभयाभावगतिविशिष्टदोषाप्रविवर्धकत्वम् । तेन धातवः पुष्णन्ति । नीरोगत्वं प्राप्नुवन्ति । तस्मात्समदोषं यथा भवति तथा शरीरं संरक्षणीयमित्यर्थः । सर्वदा शरीरस्थदोषाणां एकरसहेतुभूतकार्यस्य किंचिन्निमित्तं वक्तव्यम् । तदेतद्रसजन्यविरसपरिणामजातरोगकार्यमेवमिति ज्ञातव्यम् ॥

ननु विषमगतिविशिष्टो यो दोषः तस्य वैषम्ये रोगः । दोषस्य समा गतिरारोग्यमिति व्यपदेशः कृतः । तथा सति षड्साः सप्तधात्वात्मकाः । विरसषट्कस्यादनं धातुशोषकम्, तद्रसात्मकदोषधातुविरसद्रव्यत्वात् इत्यनुमानेन धातुशोषककार्यस्य रसादिहेतुत्वम् । तस्माद्दोषवैषम्यं रोगः । दोषसाम्यमरोग इति यत्प्रतिपादितं तद्विरुद्धमित्यत आह—त इति ।

## ते त्रयो दोषहेतुभूतास्सप्तधातव इति ॥ ३३ ॥

सप्तधातव इति व्यपदेशमात्रं भवति । षड्सा एव निश्चितम् । तेषां सप्तसंख्याकत्वं कथं स्यादिति न वक्तव्यम् । रस एवासृक् इति तयोः पार्थक्याभावविवक्षया सत्यं षड्साम्सप्तधातव इति व्यवहर्तुं शक्यते । तथाहि—

स्वादुरसवद्द्रव्यत्वगुणवत् रसद्रव्यमित्यनुभूयते उद्भूतरसव्यतिरिक्तरसवद्द्रव्याभावात् । तस्माद्रसादयो गुणा गुणिनमन्तरेण गुणा नावतिष्ठन्त इति द्रव्यमावश्यकम्, द्रव्याश्रया गुणा इति । सप्तधातुकशरीरद्रव्यत्वात् रसादीनां गुणत्वात् गुणगुणिनोर्भेदस्य अवसितत्वात् रसादयो द्रव्याश्रया भवन्ति । तस्मात्सप्तधात्वात्मकष्षड्रसव्यतिरिक्त इति न वाच्यम्, द्रव्यरसात्मकत्वात् । शरीरान्तस्स्थितरसाः धातुरूपेण परिणमन्ति । तावद्धातूनां द्रव्यनिष्ठत्वात् धातूनां च द्रव्यगुणत्वात् रूपादिवत् भेदो न दृश्यते । रसवद्द्रव्यं रसनेन्द्रियविषयकम् । रूपवद्द्रव्यं चक्षुरिन्द्रियविषयकम् । रसद्रव्यं रूपरसवद्द्रव्यं सादृश्यात् । षड्रसविकार एव धातुरिति[1] रससप्त . . . नेन्द्रियेण गृह्यते । तत्सजातीयं सप्तधातुसजातीयरसेषु लभ्यते । तेऽन्तस्स्थितास्सन्तः धातुमेव पुष्णन्ति । तद्यथा—इक्षुकाण्डस्थितस्वादुरसः यत्र यत्र भेदवशात् वर्तते तन्निष्ठस्वादुरसं संगृह्य तत्संसर्गजातिद्रव्यं विभजन् रसं करोति । तदनन्तरं तत्स्वादुरसं विहाय तत्संयोगिद्रव्यं पृथक्तया तद्भक्ततया भजते रूपादिवत् । असिगाभवनं बुद्राभावात् ! । नीलो घट इति घटनिष्ठनीलरूपं विहाय अन्यद्रव्यावयवतया स भासते । अत्र रसव्यतिरिक्तद्रव्यस्याभावात् तद्वत् एषु च धातुत्वपृथगाकारकनत्तद्गुणविशिष्टतया चक्षुःप्रतीतिः जायते । तद्वत् लवणोषणकषाया इत्याहूयन्ते, आश्रयादिवत् ।[2] शरीराङ्गस्थितानि भवन्ति । तेन रसादय आहूयन्ते इति न वाच्यम् । शरीरं सप्तधात्वात्मकम् । धातवश्च रसात्मकाः । शरीरं रसात्मकद्रव्यं सप्तधात्वावृतत्वात् । तदर्थं पृथुबुध्नोदराकारत्वैकभासं तत् । स्वादुरसश्शुक्रश्लेष्मरूपवत्त्वेन परिणमति । आम्लरसः मज्जारूपाकृतिः परिणमति । लवणरसः अस्थिरूपाकृतिः परिण-

[1] रससप्तद्विदनेन्द्रियोगा क.  [2] शरीराङ्गस्थिताङ्गानि क.

मति । तिक्तरसः मेदोविकाराकृतिस्सन् परिणमति । ऊषणरसः मज्जाधात्वाकारत्वेन परिणमति । कषायरसः रसासृग्धात्वाकृतिस्सन् भासते । तस्मात्पृथक्तया अभिधेयत्वेऽपि आश्रयादिवत् रसादिव्यञ्जकं वक्तुं न शक्यते । बहिःप्रदेशस्थिताः शरीरान्तः प्रविष्टास्सन्तः तत्तत्सजातीयधातुषु विलीयन्ते तत्तद्रसाः । तत्तद्धातूनां पोषणं च कुर्वन्ति । संशयं विना शुद्धगुणविशिष्टबहुरसवद्द्रव्यं शरीरदार्ढ्यकारणं भवतीत्यर्थः ।

ननु रसवद्द्रव्यादनेन प्रकुपितपवनद्रव्यस्य रसासृग्धातुशोषं कर्तुमिच्छतः पवनभूतस्य प्रकोपनिवर्तकं कषायरसवदेकं भवति । कषायरसस्य रसासृग्धातूनां पवनप्रकोपनिवर्तकत्वं वक्तुमयोग्यमिति पूर्वसूत्रव्याख्यानं न क्षोदक्षममित्यस्वरसादाह—सेति ।

## सानिलाननिलाधिकानिलरूक्षलघुभाविता रसासृग्गतः ॥ ३४ ॥

अस्यार्थः—द्रव्यसंयोगविशिष्टजन्यकषायत्वसजातीयरसा न धातुविकारकारकप्रतिबन्धका इति वक्तुं शक्यते, तत्सजातीयविरोधिप्रतिबन्धकद्रव्यत्वात् । तद्रसासृग्धातुप्रवर्तकोष्णस्वभावगुणवत्त्वं लघुत्वस्वभावगुणवत्त्वं भजन् रसासृग्धातुशोषणं करोति । अतः बहिःप्रदेशस्थितपवनद्रव्यादने तत्संजातविशिष्टरसगुणविशिष्टस्सन् धातुशोषणं करोति । तत्सर्वमेतद्वाक्येन प्रतीयते । न पूर्वसूत्रविरोधश्च । तत्र श्रुतिरेव प्रमाणम् ।

षड्रसाः सप्तधातुजनकाः रसव्याप्तत्वात् । रसानां धातूनां च उपव्यञ्जकत्वभावसंबन्धात् । रसासृग्धातुजातरसप्रकारजत्वेन भेदस्याप्रतीयमानत्वात् ।

आम्लशरीरा एव धातव इत्येवं तत्तद्धातुभेदेन तत्तच्छरीरभेदात् रसभेद-जन्यस्य तदधीनज्ञानजन्यत्वात् । द्रव्याभेदोऽपि तथा प्रतीयते यत्र रसाधि-क्यप्रतीतिः तत्रैव तत्तद्द्रव्याधिक्यं तत्तद्भूरुहाणां प्रतीयते । स्वादुरस-विशिष्टोऽयं वृक्षः । लवणरसविशिष्टोऽयं वृक्षः । कषायरसविशिष्टोऽयं वृक्ष इति तत्तद्रसभेदेन प्रतीयते । तदेतच्छरीरवन्न इति बहुजनसिद्धत्वा-दित्यर्थः ।

ननु पित्तदोषप्रदेशाश्रितमांसमेदोधातुस्स्वादुरसाश्रितः । तस्मात्स्वादु-रसस्य पित्तप्रकोपनिवर्तकत्वं वक्तुमशक्यम् । विरोधस्स्यात् । रसानां धात्वात्मकत्वात् । धातूनां रसाश्रितमांसाश्रितत्वात् । तद्दोषाश्रितरसात्मक-धातूनां दोषप्रकोपनिवर्तकत्वं वक्तुमयोग्यमित्यस्वरसादाह—पित्तेति ।

**पित्ताश्रयात्तदधीनपित्तमांसमेदोनुसरन्नस्थि-**
**मृदुकारकः ॥ ३५ ॥**

पित्ताश्रितत्वात् मांसमेदोधातुस्स्वादुतिक्तकषायत्वात् तदाश्रितपित्त-विरोधकत्वं शुद्धस्वादुरसस्य शुद्धकषायरसस्य च वक्तुं न शक्यते, तदाश्रित-रसात्मकत्वात् । किंतु पित्तप्रकोपाय विरोधित्वस्य वक्तुमुचितत्वात् पित्ताश्रि-तत्वादिति तदधीनपित्तमिति पित्तं रसाधीनम् । पित्तप्रकोपे सति तद्रसवद्द्रव्यस्यैव तन्निवर्तकत्वात् स्वादुरसाधीनं पित्तमिति मांसमेदोधातुगतं सत् वर्तते । मृदुस्थौल्यगुणं विधत्ते ।

ननु दोषत्रयनियुक्तरोगा असाध्याः । तद्दोषप्रकोपकार्यत्वं रसविरसाधीन-जन्यविकारहेतुकं दोषवृद्धिक्षयोत्पादनकार्यनिवर्तकद्रव्यत्वात् । अतः कषाय-प्रकोपयुक्तकार्योपयोगिकेतरदोषाश्रयकार्यं व्यपदिशति—मन्देति ।

**मन्दोष्णादिसमदोषाधिकाक्षीणवृद्धिगुणकास्थि-**
**मज्जामेदोऽधिष्ठिताः ।। ३६ ।।**

मन्दगुणवत्त्वावच्छेदकपवनत्वं उष्णगुणवत्त्वावच्छेदकपित्तत्वं तदितर-दोषकफावच्छेदकं तत्क्षीणवृद्धिगुणाश्रयत्वम् तथा सति मज्जाधातुपर्यन्तगत-सकलसामग्रीसान्निध्यं सम्पादयन् रोगाभिवृद्धिं कुर्वन् तद्रोगिणमन्त्य सन्निहितं करोतीत्यर्थः ।

ननु दोषाणां मज्जाधातुपर्यन्तं रोगावरोहणेन सकलधातुदोषगसामग्र्यां सत्यां पञ्चधातुगतप्राणोद्भवानां च वायूनां संञ्चाराभावत्वेन तच्छरीरं विहाय बहिःप्रदेशगतत्वात् स जीवः शरीरावतरितो भवति । दोषाणां कार्यकारित्वस्य तावन्मात्रेणैव चरितार्थत्वात् शुक्रधातुपवेशजकार्यकरणस्य प्रयोजकत्वाभावात् । तस्मात्सप्तधातुगणनस्य प्रायोजकत्वाभावेन व्यर्थं स्यादित्यस्वरसादाह— अदोषेति ।

**अदोषधातुरसानुसारानुसरास्थिरसपचनचरम-**
**धातुप्रचारकाः ।। ३७ ।।**

एतत्कार्यकारकस्य पचनत्वं दोषाणां चरमधातुप्रचारणत्वम् । प्रचरन्तीति प्रचारकाः । शुक्रधातुपोषककार्यं शुद्धत्वादुरसादनहेतुकम् । न शोषककार्यम् । अदोषत्वं नाम अदोषधातुरसानुसारानुसरदोषप्रकोपकार्याभाव-वृद्धिकारकमित्यर्थः । उक्तमर्थमुपसंहरति—भूतेति ।

भूतपूर्वपदार्थजातधातुहेतुभूतानलसमरसपचनविरुद्धार्थ-
रसपाकयोगाद्विपर्ययः ॥ ३८ ॥

भूतपूर्वपदार्थजातेति । पञ्च भूताः पूर्वे यस्य स तथा । भूतपूर्वश्चासौ पदार्थश्च । शरीरं पञ्चभूतात्मकमिति सर्वपदार्थो विवक्षितः । तज्जाता धातवः । तेषां हेतुभूतो योऽनलः तेनानलेन समरसपचनं सारकिट्टतया विभज्य पचतीति समरसपचनम् । तस्माच्छुद्धरसवद्द्रव्यादनजातस्संस्कारः । तस्माद्धातवः पुष्णन्ति । शरीरमभिवर्धते । नीरोगत्वं भजतां पुंस्त्वमभिवर्धत इति तात्पर्यम् । इन्द्रियवान् भवति । विरुद्धार्थरसपाकयोगः विरसादनपाक-जातो यो रोगः स धातुविरुद्धकार्यको भवति । स एवं भविष्यन् विपर्ययो भवति ।

ननु धातूनामाकारज्ञानं विकारज्ञानपूर्वकं तद्विकाराभावकार्याभावज्ञाने सति सृष्टिसंहारक्रमज्ञानात् । विरसादिकार्याभावज्ञानं विकाराभावसाध्य-कार्यहेतुकं तद्विकारकार्याभावहेतुभूतद्रव्याधीनत्वात् यन्नैवं तन्नैवं यथा घटः इति न्यायनयेन व्यतिरेकानुमानसिद्धौ उक्तरीत्या उपसंहारज्ञानं व्यर्थं स्यादित्यस्वरसादाह—षडिति ।

[1]षट्कमलानामादिभूतं मूलाधारकम् ॥ ३९ ॥

अस्य सूत्रस्यायमर्थस्सम्पन्नः—आधारपद्माधिष्ठित आम्लरसः । स्वादु-रसकमम्बुतत्त्वम् । ऊषणरसाहितलवणगुणविशिष्टमनलतत्त्वम् । तिक्तरसगुण-

---

[1] एतत्सूत्रात्प्राक् "प्रातःपूर्णाह्लादनैरविकारं निरीक्षयेत्,। विसृष्टविण्मूत्रा-दिमलाशयः" इति A & B कोशयोरधिकः पाठः.

विशिष्टं वायुतत्त्वम् । कषायरसात्मकमाकाशतत्त्वं च । एतानि पद्मानि रसासृङ्मांसमेदोमज्जाशुक्रधात्वात्मकानि पञ्चभूतात्मकानि । प्रकृतिपुरुषाधार-सहस्रारपद्मं आकाशतत्त्वपद्मजनकम् । तद्वायुतत्त्वपद्मजनकम् । तत्तेजस्तत्त्व-पद्मजनकम् । तदम्बुतत्त्वपद्मजनकम् । तत्पृथिवीतत्त्वपद्मजनकम् । तत्स-जातीयाम्लरसवद्विकारो भूत्वा पृथिवीतत्त्वमम्बुतत्त्वे विलीयते । स्वादुरसात्म-काम्बुतत्त्वं स्वादुरसविरसवद्विकारो भूत्वा तेजस्तत्त्वे विलीयते । कटुरसान्त-र्हितलवणरसगुणविशिष्टतेजस्तत्त्वं लवणरसविरसविकारो भूत्वा वायुतत्त्वे विलीयते । तिक्तरसगुणविशिष्टवायुतत्त्वं तिक्तरसविरसादनजन्यरोगग्रस्तं सत् आकाशतत्त्वे विलीयते । कषायरसात्मकाकाशतत्त्वं कषायरसविरसादनजाता-मयग्रस्तं सत् स्वयमेव विलीयते । अयं संहारक्रमः । तत्तत्पद्मनिष्ठरसाः तत्तत्सजातीयविरसद्रव्यादनजातरोगाः संहारक्रमोपकारकाः । एतादृशार्थं मनसि निधाय षट्कमलानामाधारभूतपद्मं तत्तत्पद्मविनाशपूर्वकं तत्तच्छरी-रान्तश्शरीरनाशं कुरुत इत्यर्थः ।

ननु पञ्चभूतविकाराः पञ्चेन्द्रियाणि । तद्विकाराः षड्रसाः । सप्त धातवः इति तत्र रसासृजी एकीकृत्य षड्रसात्मकोऽयमिति उपयुक्तत्वेन रसासृजी एकीकृत्य तथैव प्रतिपादितम् । रसा एव धातवः । धातूनां च रसानां च भेदाभावात् । अतः पञ्चमहाभूतानां इन्द्रियाणां विषयादिवत् रसादीनामपि तद्वदेव भूतविकारत्वं वक्तव्यम् । तस्माद्रसानां षट्संख्यागणनं व्यर्थं स्यादिति ऊषणरसान्तर्हितलवणरसस्य अस्थिधातुजनकत्वात् । एताव-त्पर्यन्तं वर्णबोधकसिराणामेव . . . . . . . धातुमध्यगतस्सन् उभयपार्श्व-धारकत्वेन दशदळपद्मं सहस्रसिरात्मकपद्माधारकषट्कोणचक्रस्य . . . . . . त्वात् । लवणोषणरसयोरेकत्वेन दशदळपद्मात्मकास्थिधातुं सम्पद्य एधते ।

इत्यनुनयेत् । मरुत्कवर्णोद्बोधकसिराधारचक्रमध्ये महत्त्वात् सहस्रसिराधारक-षट्कोणचक्रस्य अमृतोपजन्य . . . . . . त्वात् । एतावत्पर्यन्तं वर्णबोधक-सिराणामेव तत्पोषकत्वं नान्येषामिति धातुमध्येऽन्तर्गतत्वात् . . . . . . . सत्त्वेन तत्तद्वर्णबोधकपद्मानां महस्रसिराधारकत्वात् । तेषाममृतसिरासंसर्गात् । लवणैक . . . . . प्रधानजन्यानलभूतात्मकास्थिधातुजनकषट्कोणचक्रस्य अमृतोपहरणशीलाभावत्वात् इत्यस्वरसादाह—इडेति ।

इडापिङ्गलापूरितानिलतत्सिरागतामृतं
सिञ्चति[1] ॥ ४० ॥

इडापिङ्गलापूरितानिलात्मकषट्कोणचक्रबोधककुम्भकानिलपूरणकार्यहेतुः सः इडापिङ्गलापूरितानिलशिरःकमलादमृतमावृत्य तावत्सिरास्संपूर्य षट्कोणा-निलचक्रस्य उन्मीलितद्वयत्वात् अनलानिलद्वययोस्सहसंचारयोः द्वय . . . . पिङ्गलापूरितानिलानलप्रज्वलनकार्यस्य व्यञ्जनानिलत्वात् । तस्मात्पवनपूरण-चक्रप्रतिभासहेतुरित्यर्थः ।

ननु रेचकपूरककुम्भकानिलेन उदरकुम्भमापूर्य अमृतं सिञ्चतीति यत् तच्चिन्त्यम्, षट्कोणचक्रस्य कुण्डल्यधस्स्थितत्वात् । कुण्डल्युपरिगतपद्मा-नामेव तत्पूरणकार्यकरणप्रतिपादनात् । कुण्डलीडापिङ्गलपवनेन अमृतसेचनक-वर्णस्स्यादित्यस्वरसादाह—पृष्ठेति ।

---

[1] एतत्सूत्रात्प्राक् " त्रिकोषणरसप्रधानजन्यमेनोधात्वाधारद्वादशदळपद्मं सहस्र-सिराधारकं षट्कोणचक्रं प्रतिभाति " इति A कोशे. ' षट्कोणचक्रं प्रतिभाति " इत्येतावन्मात्रं B कोशे अधिकः पाठः.

## पृष्ठोरूदरजङ्घाशिश्नोपस्थदेशाद्यैरभिवर्धते ।। ४१ ।।

लवणोषणजन्यास्थिधात्वाकारभूतषट्कोणचक्रं कुण्डलीप्रदेशादधस्स्थितत्वात् पृष्ठचक्रवत् तदूर्ध्वोदरवत् पृष्ठदेशवत् पाककर्मणि सहस्रसिराभिरभिवर्धते । तेषामपि श्वासोच्छ्वासपवनगतिसंयोगद्वारा अभिवर्धितत्वेन श्वासोच्छ्वासयोरेतत्पोषककर्महेतुकत्वप्रतिपादनात् पृष्ठोदरपद्मवदभिवर्धत इत्यर्थः ॥

अस्थिधात्वन्तर्भावितमज्जाधातोरमृतागमनसंसर्गप्रसंगाभावेन अमृतोपजीव्यत्वं नोपपद्यत इत्यस्वरसादाह नाभेरिति ।

## नाभेरधस्स्थितं कुण्डल्यादिभूतं शतदळ[1]पद्मं पञ्चसहस्रसिरावृतं सरोरुहमजायत ।। ४२ ।।

कुण्डल्यधस्स्थितरसासृङ्मांसमेदोधातूनां श्वासोच्छ्वासपवनयोः स्पर्शयोग्यत्वाभावात् उपजीव्योपजीवकसंबन्धस्यानवकाशात् तत्पोषककर्मणः आवश्यकत्वेन पञ्चसहस्रसिरावृतशतदळपद्मं अजायत तावद्धातुपद्मपोषणार्थम् । एतद्विना पोषकत्वाभावेन तदाधारभूतसरोरुहमजायतेत्यर्थः । मज्जाधात्वन्तर्भूतत्वादुरसोपजीव्यशुक्रधात्वभिवर्धनकार्यं, कथं संगच्छत इत्याह—जठरेति ।

## जठराग्नेरालवालकतया भाति ।। ४३ ।।

जठराग्नेराविर्भूतपाचकपित्तकलापकादिकस्य आधारभूतत्वेन जठराग्निरूपपित्तकलाप्रज्वलनार्थं आलवालाधारभावत्वेन ज्वलनक्रियायोग्यत्वा शुक्रधातोरापादतलमस्तकपर्यन्तं सर्वत्राधारकतया आलवालकतया भासत एवेत्यर्थः ।

---

[1] दशदल—B

सप्तधातूनां षड्रसात्मकत्वं स्वाद्वम्ललवणतिक्तोषणकषायरसानाममृत-पोषकत्वं कथं स्यादित्यत आह—मधुरेति ।

**मधुररसं प्रचालयन् शुक्रधातुस्थाने स्वतेजसा भाति ॥ ४४ ॥**

मधुररसवद्द्रव्यम्, पाचकपित्तेन पच्यमानं सत् तत्पाचकपित्तपाकजन्य-क्रियासंस्कारवशात् शुक्रधातुत्वेन वर्धते । कषायरसद्रव्यादनादजीर्णे जाते सति पवनप्रकोपो भवति । पवनदोषप्रकोपः शुक्रधातुगतस्सन् शुक्रशोषणकार्यं करोति । तद्विरसद्रव्यं पाचकपित्तेन पच्यमानं सत् रसासृग्धातुविकारं करोति । शुक्रधातुस्थानं गगनभूतप्रदेशः । गगनभूतगुणाधिक्यद्रव्यसिद्धं तेजः । पित्तकलापचनजातसंस्कारयुक्ततेजस्त्वात् शुक्लधातुरूपगुणो भातीत्यर्थः । तत्स्वादुरसविरसद्रव्यादनादजीर्णे जाते सति सोऽसृग्धातुविकारं करोति । तदनिवर्तने जलमलातिसाररोगादयस्संभवन्तीत्यर्थः । शुक्रधातु-वृद्धिरूपलवणरसाधिक्यद्रव्यत्वात् तेजसा भाति । रसासृग्धातुविकारवृद्धिश्च एतद्विरसाधिक्यस्वतेजसा भातीत्यर्थः ॥

ननु यावद्रसवदन्नादनं कफप्रदेशहृद्गतमात्रं सत् भुक्तं मधुरीभूतविकारं भजते । ततः पक्वाशयं प्रविश्य आम्लरसविकारं भजन् पाचकपित्तेन पच्यमानं सत् स्वभावाम्लरसवद्द्रव्यमज्जाधातुमेधते ॥

धातुगतामयानवहृत्य कालपाकजातीयजातौपाधिकरसप्रधानगुणान् यच्छति ।

तदाम्लरसद्रव्यं मांसधातुविकारं करोति । तेन कफप्रकोपनकास-क्षोभपाण्डुविसर्पादयस्संभवन्ति । तद्दोषजन्यामयप्रकोपनिवृत्यर्थं कटुरस द्रव्यादनम् । तेन तद्दोषजन्यामयप्रकोपनिवृत्तिं कुर्वत् रसपाचकपित्तेन पच्यमानं सत् शुक्रधातुरूपं गतं पदं नः (?) तेन भ्रमणमूर्छारतिरोगादयः प्राप्नुवन्तीत्यर्थः ॥

ननु यावद्रसवदन्नादनं कफप्रदेशहृद्गतमात्रं सत् तद्भुक्तान्नं मधुरीभूतं भवति । तत्पक्वाशयं प्रविश्य आम्लीभूतं सत् पाचकपित्तेन पच्यमानं सत् तत्तद्रव्यभेदेन पाकं कर्तुं न शक्नोति । मधुररसकार्यमाम्लरसविकारकार्यं च कण्ठमार्गप्रवेशानन्तरं पूर्वान्नानदनजातमधुररसं प्राप्य कफप्रदेशहृद्गतं सत् मधुररसं भजति । तदनन्तरं आम्लरसविकारं कुर्वन् पक्वाशयं प्रविश्य पाकान्तरमधिगम्य तद्रसान्तरं भजति । अतिमधुररसद्रव्यं कथं शुक्रधातु-प्रवर्धकमित्यत्वरसादाह—आम्लेति ।

आम्लरसं विपाचयन् मज्जाधातु[1]स्थाने स्व जसा भाति ॥ ४५ ॥

आम्लरसद्रव्यं पाचयन् यावदन्नस्य भुक्तस्य प्रथमद्रव्यनिष्ठतत्तद्विधि-विहितगुणान्प्रयच्छति । कालपाकजन्योपाधिवशात् तद्रसान्तरं भजन्नपि औपाधिकरसगुणान्न प्रयच्छति । सर्वरससंसर्गयुक्तान्नादनत्वेऽपि तत्पाचकपित्तं तत्तद्रसवद्द्रव्यं एकदा विभज्य पचति । स एव रसः स्वेतररसगुणाधीनफलं प्रयच्छति । तादृशाम्लरसद्रव्यं मज्जाधातुत्वेन प्रवर्धते । तद्धातुगतपवनविकारं

[1] मेदोधातु—B.

हन्ति । तत्रैवाम्लरसद्रव्यं मांसधातुविकारं करोति । तद्विरसद्रव्यादनादजीर्णे जाते सति तत्तद्धातुविविविहितामयाः प्रजायन्ते । अनिलाधिकाम्लरसद्रव्यं मज्जाधातुपोषकम् अनिलभूतादिरूपोपलम्भकाम्लरसद्रव्यत्वात् । अनिलभूतादि-रूपोपलम्भकाम्लरसद्रव्यं मांसधातुविकारकारकमांसधातुशोषणोपकारकद्रव्य-त्वात् । इत्यनुमानप्रमाणेन आम्लरसवदनिलद्रव्यं मज्जाधातुबलकारकं मांसधातुविकारकारकं चेत्युभयफलं प्रयच्छति तत्तज्जातीयधातुपोषकत्वं प्रती-यते । मांसधातुविरुद्धरसद्रव्यस्य मांसशोषकत्वं च प्रतीयते । एवं सकल-भूतोत्पत्तिक्रमः । एवमेव सकलभूतानां संहारक्रमश्च बोद्धव्यः । अन्योन्यं यावद्धातुपोषकत्वं तदन्योन्ययोरेव धातुनाशकत्वं च भ्रमः । रसानां धातु-पोषकत्वं यत्र प्रतीयते स एव सृष्टिक्रम इति ज्ञातव्यः । एतद्रसानामेव धातुशोषणैककार्यं यत्र प्रतीयते, स एव संहारक्रम इति बोद्धव्यः । तद्वद्दोषाश्च मलाश्चाशयाश्च तदन्योन्यकार्यं विशिष्टसृष्टिं सृजन्ति । तदेव सृष्टिनाशं करोति । अत एवात्मानमात्मना सृजति । आत्मकृतनाशत्व-मात्मन्येव । यत उभयोरपि धातवः रसा एव ज्ञातव्या इत्यर्थः ॥

ननु स्वादुरसद्रव्याणि इक्षुकाण्डादीनि बहूनि सन्ति । तद्वदाम्ल-रसवद्भूरुहो बहवस्सन्ति । अथ स्वादुरसस्य शुक्लधातुपोषकत्वं, आम्लरसस्य मज्जाधातुपोषकत्वं वक्तुं शक्यते । तद्वत् लवणरसवद्भूरुहोऽयं भेषजयोग इति अदृष्टत्वात् कथं लवणरसवद्द्रव्यं धातुपोषकमिति व्यवहर्तुं शक्यत इत्यस्वरसादाह—लवणेति ।

लवणरसं विपाचयन् अस्थिधातुस्थाने स्वतेजसा भाति ॥ ४६ ॥

इदं लवणरसवद्द्रव्यं पथ्यवर्गेषु औषधयोगकार्येषु लवणरसवद्भूरुह इति व्यवहाराभावेऽपि सकलरसानां धातुपोषकत्वं लवणरसेन विना पाकं कर्तुं अशक्यमिति लवणरसत्वं लवणद्रव्ये प्रसिद्धमिति भोज्ययोग्यद्रव्यजनकद्रव्यादिषु लवणरसपाकस्य कर्तुं योग्यत्वात् । अत एव अस्थिधातोर्लवणद्रव्यात्मकत्वेन लवणं समुद्रजलविकारवडवानलकार्यान्तःप्रविष्टत्वेन तद्वडवानलात्मकमिति सुप्रसिद्धमिति भावः ।

लवणं मेदोरोगहेतुकम् । मेदोधातुशोषकद्रव्यत्वात् । लवणरसः अस्थिधातुपोषकः अनलसजातीयद्रव्यत्वात्, सर्वरसोपकारकत्वात् । अत एव पाचकपित्तं लवणरसं विपाचयन्, अस्थिधातुस्वरूपं भजत् सकलभारं वहति । लवणरसयोगद्रव्यादनं अस्थिधातुबलप्रदम् । सकलरसयोगवत्त्वेन हि सकलधातुपोषकत्वम् । अत एव लवणरसस्य षड्रसानामपि बलप्रदायकत्वम् । शुद्धरसवद्द्रव्यादनेऽपि लवणरसं विना पाच्या[1]भावात् । शुचिशब्दस्य लवणत्वाभिधाने तु लवणरसो मेदोधातुविकारकारकः, लवणाम्बुजन्यलवणरसद्रव्यत्वात् । तद्विरसद्रव्यं अस्थिधातुशोषकं भवतीत्यर्थः ॥

ननु कषायरसवद्द्रव्यादनादजीर्णे जाते सति शुक्लधातुशोषककार्ये पवनविकारो जायते । तत्पवनप्रकोपनिवृत्त्यर्थं स्वादुरसद्रव्यादनं विधिः । तस्माच्छुक्लधातुविकारे जाते सति स्वादुरसवद्द्रव्यादनं विधीयते । कटुरस-

[1] पाचकाभावात् .

द्रव्यादनादजीर्णे जाते मज्जाधातुविकारकारकपवनप्रकोपो जायते । तादृश-पवनप्रकोपनिवृत्यर्थं आम्लरसद्रव्यादनं विधीयते । (लवणरसद्रव्यादनादजीर्णे जाते सति), तिक्तरसद्रव्यादनादजीर्णे जाते सति च पवनप्रकोपो जायते । तत्प्रकोपनिवृत्त्यर्थं लवणरसद्रव्यादनं विधीयते । कटुरसद्रव्यादनादजीर्णे जाते सति पवनप्रकोपो जायते । पित्तविकारशुक्लधातुपोषणं करोति । तत्र [1] मूर्छाभ्रमतन्द्रारुचिसर्वाङ्गतोदारतयो जायन्ते । एतद्गुणाविर्भावकपवनपित्त-प्रकोपहेतुकरसविरसादनादजीर्णे जाते सति तत्र द्वन्द्वदोषगुणाविर्भावो भवति । तत्र स्वादुरसद्रव्यादनं निवर्तकं भवति । तिक्तरसद्रव्यादनकार्यं अप्रयोजकं स्यादित्यम्वरसादाह—तिक्तेति ।

## तिक्तरसं विपाचयन् [2] मेदोधातुस्थाने स्वतेजसा भाति ।। ४७ ।।

पाचकपित्तं तिक्तरसं विपाचयत् मेदोधातुगतं पित्तविकारं हरत् तत्स्थाने स्वतेजसा पाचकपित्तजन्यतेजसा स्वयमेव भाति । तिक्तरसादनाद-जीर्णे जाते सति तज्जन्यरोगोऽस्थिधातुशोषं करोति । तत्पित्तविरुद्धलवणरसेन पित्तप्रकोपो भवतीत्यर्थः ॥

ननु आम्लरसवद्द्रव्यादनादजीर्णे जाते सति कफप्रकोपो दृश्यते । तत्प्रकोपनिवृत्त्यर्थं कटुरसद्रव्यादनं विधिः । आम्लरसविशिष्टगन्धवद्द्रव्यत्वं पृथिवीत्वावच्छेदकम् । पृथिवी अब्द्रव्यजन्या सार्द्रद्रव्यत्वात् । तज्जन्यत्वेन शीतत्वं गुरुत्वम् । एतल्लक्षणलक्षितकफप्रकोपस्य पृथिवीद्रव्यसंयोगजन्यत्वात् ।

---

[1] मूर्छाभ्रमतन्द्रा सर्वाङ्गकंपवनं तोदश्च अरतिश्च जायते'(क) सर्वाङ्गकम्पन-मिति स्यात् । [2] प्रचालयन् .

तद्विरुद्धद्रव्यादनमपि कफप्रकोपहेतुकम् । कटुरसद्रव्यादनेनैव कफप्रकोपनिवृत्तिरित्याशयं मनसि निधायाह—ऊषणेति ।

**ऊषणरसं विपाचयन् मांसधातुस्थाने स्वतेजसा भाति ॥ ४८ ॥**

सर्वत्र सत्त्वात् पवनप्रकोपकारककफप्रकोपनिवर्तकत्वस्य बहुशो दृष्टत्वात् पवनप्रकोपकारकमिति वक्तुमशक्यत्वाच्च । तथा हि—मरन्ध्रकाभ्यन्तरधरसिरामार्गगतपवनप्रकोपस्य हतः (?) कफप्रकोपो भवति । कटुरसाधिकद्रव्ये पक्वाशयगते सति तत्कफप्रकोपं हरतीति वक्तव्यम् ॥

आचार्यस्सर्वचेष्टासु लोक एव हि धीमताम् ।

एष शिरस्तोदो यत्र प्रकाश्यते तत्र कटुरसवद्द्रव्यविलेपनं शिरस्तोदनिवर्तकं भवति । किंचानलमन्दादजीर्णे जाते सति कुक्षौ वेदना जायते । तत्र कटुरसद्रव्यादनं निवर्तकं भवति । शीतोदकस्नानेन रसाजीर्णे सति सर्वाङ्गेषु पवनप्रकोपो जायते । तत्र अनलसंयोगादिना स्वेदनं आमज्वरादीनां निवर्तकं भवति । तत्र पवनप्रकोपस्य निवृत्तिः यदा भवेत तत्सिरारन्ध्रमार्गगतपवनगतितिरोधानं सर्वत्रापि मांसधातोः कफग्रस्तत्वात् कफप्रकोपे सति पवनगतितिरोधानं कुरुते । तत्र वेदनाऽपि जायते । तत्र पवनप्रकोपकार्यनिवर्तकद्रव्यं वा भेषजं तज्जनककफप्रकोपनिवर्तकद्रव्यं वा भेषजम् । तत्र पवनप्रकोपनिवर्तकरसवद्द्रव्यादनमन्तरेण तत्पवनप्रकोपनिवृत्तिं कर्तुमशक्यत्वात् । तस्मात्कटुरसवद्द्रव्यं पवनप्रकोपकार्यनिवर्तके विधेयमिति चेष्टा स्वाचार्यः

परेषाम् । रोगजनकसमूहाहेतुत्वात् । कटुरसवद्द्रव्यं पवनप्रकोपनिवर्तकमिति व्यपदेशमात्रैरितार्थः । तज्जनकीभूतरसविरसादनादजीर्णजातामपित्तविषक्रिमिनिवर्तनद्वारा कटुरसस्य हेतुत्वमित्यर्थः । कटुरसस्य क्रिमिदोषनिवर्तनमात्रे चरितार्थत्वात् । मांसधातुप्रकोपकारककफोद्रेककार्यं पवनोद्रेककार्यहेतुकं तत्कारणनिवर्तकमन्तरेण तत्कार्यनिवृत्तेरसंभवात् । तत्पवनप्रकोपकार्यनिवर्तकं कफप्रकोपनिवर्तकसामग्रीसंपादनमेव विधेयं भवति । तत्सामग्रीसम्पादनं कटुरसद्रव्यादनमेवेत्यर्थः ।

ननु मधुररसगुणाधिक्यद्रव्यं अभ्यवहृतादृशाधिक्यद्रव्यादनादजीर्णे जाते सति रसासृग्धातुविकारं करोति । तदादाननिदानभूताः रोगाः जलातिसारमहामलातिसारग्रहण्यतिसाररक्तपित्तरोगाश्च रक्तवायुश्च संभवन्ति । तन्निवर्तकं कषायरसवद्द्रव्यादनमिति मनसि निधायाह कषायेति ।

कषायरसं विपाचयन् रसासृग्धातुस्थाने
स्वतेजसा भाति ॥ ४९ ॥

पाचकपित्तेन कषायरसद्रव्यादने पक्वाशयगते सति तत्पित्तकलायाः पाकः क्रियते । तत्पाकजन्यसंस्कारेण रसासृग्धातुविकारं हरति । तन्निवर्तककषायरसद्रव्यादनं तत्र हेतुरिति रसासृग्धातुविकारनिवर्तकसामग्रीरूपज्वलत्तेजसा समर्थोऽस्मीति प्रतिभातीति अत्र स्वतेजसा भातीति प्रतिपादितम् ॥

कषायरसविरसादनादजीर्णे जाते सति तच्छुक्लधातुगतिविकारं कुर्वन् तच्छुक्लगतपवनप्रकोपे सति तद्धातुगतिविहितरोगास्सम्भवन्ति । मूर्छारोगश्च

हिक्कारोगश्च भ्रमविकारः रक्तवायुश्च शोभाश्च अङ्गकम्पश्चापस्मारश्च पादस्फुरणं च सम्भवन्तीत्यर्थः ।

ननु सृष्टिसंहारक्रमद्वयमपि प्रतिपादितम् । पञ्चभूतानामुत्पत्तिक्रमः तत्संहारक्रमश्च ज्ञापितः । तथा सति दृष्टं जगच्छरीरात्मकं जीवच्छरीरात्मकं प्राणादिमत्त्वात् इतीदं जगत्सर्वं शरीरात्मकं प्रपञ्चात्मस्वरूपत्वात् इत्यनुमान-प्रमाणेन स्वाङ्गशरीरोत्पत्तिः वक्तव्या । तत्र शरीरोत्पादकसामग्र्यां सत्यां नित्यं शरीरकार्यं जायते । शरीरोत्पादकसामग्र्यामसत्यां तत्कार्योत्पत्तेरशक्यत्वात् इत्यस्वरसादाह—सकलेति ।

## सकलरसाधारादिभूतमङ्गुष्ठदळं नाभिपद्माधिष्ठितं त्रिकोणं नाम सरोरुहमजायत [1] ॥ ५० ॥

सकलरसाधारादिभूतं नाम अङ्गुष्ठदळं षड्रसात्मकं सप्तधात्वात्मकं अवर्णोपधगकवर्गञ्चवर्गाधारभूतं पञ्चभूतात्मकशरीरोत्पत्तेः आधारभूतत्वेन सकलरसाधारभूतमिति । अङ्गुष्ठदळमात्रविशिष्टनाभ्यधस्स्थितपद्मं त्रिकोण पद्मम्—

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।

इति श्रुत्यनुसारेण प्रकृतिपुरुषयोराधारभूतमिति तावेव प्रजाजननं कुरुतः । तयोरधिष्ठानत्वेन तत्र स्थितः अमृतेव रस इति । अत एव शरीराधारभूतमिति सम्यक्प्रतिपादितम् । "रसो वै सः रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति" । इति श्रुतेर्विद्यमानत्वात् । तत्रैव त्रिकोणपद्मं

[1] 'अङ्गुष्ठदळनाभिपद्मं सर्वार्थानां बीजभूतं त्रिकोणमजायत' इति—A&B.

पुरुषस्याप्यस्ति । बीजेऽधःकोणौ, तदुपरि कोणमेकमाधारभूतं कामगिर्यात्मकं रुद्रात्मकशक्तिविशिष्टं कामेश्वरदेवतात्मकम् । एतादृशगुणविशिष्टमूर्ध्वकोणं अधःकोणद्वयस्य दक्षिणपार्श्वकोणस्य सूर्यचक्रात्मकजालंधरपीठे उड्डियाण देवतात्मकतदितरवामकोणं सोमचक्रात्मकपूर्णगिरिगह्वरपीठं परब्रह्मात्मकशक्ति विशिष्टं त्रिकोणपद्मं प्रकृतिपुरुषयोरैक्यकर्मणा सर्वदा आनन्दानुभवसुखमनु-भूयते । श्री प्रकृतिः । पुरुषस्तु ईश्वरः । तयोरैक्यसुखं सर्वदा अनुभूयते । अत एव सर्वरसाधारभूतमिति । सर्वजन्तूनां त्रिकोणपद्मं सर्वरसाश्रयं प्रजाजननहेतुभूतसुखैकाश्रयत्वात् । यन्नैव तन्नैवं यथा घट इतीदं सर्वं रसाश्रयमिति सर्वप्रमाणसिद्धम् ॥

प्रजाङ्कुराविर्भाववद्भूमिप्रदेशः रसादीनामाम्लरसवानिति व्यपदिश्यते। अत एव सर्वरसात्मकत्वं ब्रूमः । प्रजाजननहेतुभूतप्रदेशत्वात् पुंसामपि मेढ्रप्रदेशः त्रिकोणवद्भासते । बीजद्वयस्थितत्रिकोणद्वयविकारभूतबीजद्वया-धिष्ठितं तदुपरि मेढ्रप्रदेशमेककोणम् । तस्मात्सर्वपुंसां त्रिकोणपद्मं प्रतीतमिति यत्तद्युक्तम् । अण्डजातपुंवच्छरीराणां मेढ्रात्मकबीजद्वयपद्मस्य अभावात् तेषां त्रिकोणपद्मस्याभावादिति नाशङ्कनीयम् । बीजादुत्पन्नत्वस्य उभयोरपि समानत्वात् । ते अण्डजा इति सर्वशास्त्रसिद्धत्वात् । प्रत्यक्षेण त्रिकोण-विकारमेढ्रबीजाभावेऽपि बीजजन्यं पिण्डमित्युभयोरपि समानम् । अत एव अण्डजानां अन्तस्स्थितपेशीति व्यपदिश्यते इति केचित् । अण्डजानां शरीराणां अण्डजत्वं समानमित्यर्थः ।

ननु सर्वशरीरस्थितपद्मानां सर्ववर्णाधारत्वात्, तेषां प्रयोजनमपि वर्णज्ञापकत्वमात्रमेवेति प्रतिभाति । तत्र त्रिकोणपद्मस्य अगणितत्वात्

कथं प्रजाजननहेतुभूतपद्मं न प्रतिभासत इति । तथा सति सर्वकालेऽपि त्रिकोणपद्मस्य यावच्छरीरपर्यन्तं सत्वात् प्रजोत्पत्तिस्यात् । स्त्रीपुरुषसंयोग-व्यतिरेकेण प्रजोत्पत्तेरदृष्टत्वात् इति नाशङ्कनीयम् । सप्तधातुमयशरीरं शरीरान्तरजनकम् । तस्मात्त्रिकोणपद्मान्तरं जायत इत्यर्थः । इन्द्रियं प्रजाजननहेतुभूतं न वर्णोत्पादकं बाह्यकर्मकृत्याधारभूतत्वात् । तस्मात्प्रजा-जन्मप्रतिपादनकथनं सर्वकालेऽपि संभावितमिति यत्तद्युक्तमिति तात्पर्यम् । महाशरीरपिपीलिकाशरीराणां इदं त्रिकोणपद्मं सर्वसुखसाधनमिति निश्चित्य प्रवृत्तेर्दृष्टत्वादित्यर्थः ।

ननु केवलं त्रिकोणपद्मं न प्रजाजननहेतुकं शुक्रधातोरेव प्रजाजनन-कार्यहेतुत्वात् । तस्य आधारभूतमात्रत्वेनैव चरितार्थत्वात् । अङ्कुरोत्पादक-बीजावापं विना प्रजाजननकार्यस्यायोग्यत्वादित्यस्वरसादाह—तस्मादिति ।

**तस्मात्तनुरजायत । तस्माच्छाखाश्शरीरे भान्ति ॥ ५१ ॥**

तस्मात्पूर्वोक्तरीत्या स्त्रीणां पुंयोगे सति प्रजाजननकार्यं शक्यते । अन्यथा तत्सर्वं शाखाशरीरस्य मेढ्रस्य प्रजाजननहेतुभूतत्वेऽपि (न संभवति) तन्मेढ्रस्यापि शाखाशरीरत्वात् । तस्मादित्युपसंहारसूत्रद्वयप्रदेशात् त्रिकोण-स्थानमपि प्रजाजननहेतुभूतम् । तद्वन्मेढ्रस्यापि प्रजाजननहेतुत्वमिति तन्मेढ्र-स्यापि शाखाशरीरत्वात् तस्मादित्युपसंहारसूत्रद्वयप्रदेशात् त्रिकोणस्थानमपि

प्रजाजननहेतुभूतम् । तद्वन्मेढ्रस्यापि प्रजाजननहेतुकत्मिति कृत्वा तस्मादित्युपसंहारपदं सूत्रद्वयेऽपि पठितमिति ॥

इत्यायुर्वेदस्य पञ्चमप्रश्नस्य भाष्यं योगानन्दनाथकृतं
सुप्रसिद्धं महाजनसम्मतं प्रतिसूत्र-
व्याख्यानं लोकोपकारकृतं
समाप्तम्



महादेवस्त्वेनं प्रकटयति तद्वैभवपदं
गदद्विट्साम्राज्यं सततमभवत्तद्विलसितैः ।
स दक्षो वामाक्ष्याऽप्यधिकधनविद्यावितरणे
कटाक्षैः कामाक्षी कलयतु शुभं नः प्रतिदिनम् ॥

जनकश्शंकरस्साक्षात् जननी सर्वमङ्गला ।
रक्षणेऽवहितौ तौ मे को विचारः कुतो भयम् ॥

सर्वेश्वरपदान्तिके समर्पितम्

—o—

| | |
|---|---|
| *तज्जन्यामृतं तत्पोषकम् । | ५२ |
| अचलोऽजो मनोविषयकः । | ५३ |
| तद्ज्ञानं तत्पुरुषार्थकम् । | ५४ |
| सात्त्विकद्रव्यादनं तद्बोधकम् । | ५५ |
| इतरार्थादनात्तन्न भाति । | ५६ |
| रजस्तमोगुणौ आत्मज्ञान[1]प्रतिबन्धकौ । | ५७ |
| सर्वार्थानां हेतुभूतं शरीरम् । | ५८ |
| सोऽजस्समं[2] पश्यति । | ५९ |
| स सर्वान्नमत्ति । | ६० |
| तत्पोषकोचितरसास्तच्छाखाफलकाण्डतत्पोषकाः । | ६१ |
| प्रातःपूर्वाह्लादने रसविकारं निरीक्षयेत् । | ६२ |
| विसृष्टविण्मूत्राद्रिमलाशयः । | ६३ |
| अरोगस्याशयास्सर्वशरीरसाधकाः । | ६४ |
| रसाशयस्साशयस्सर्वाशयो वा शरीरी । | ६५ |
| षट्पञ्चाशद्वसुमतीकला हृद्देशा भान्ति । | ६६ |
| नाभ्यामुद्भूतजाताः पञ्चाशत्प्रभाः प्रविभान्ति । | ६७ |
| तदूर्ध्वानले द्वाषष्टिमयूखाः प्रतिभान्ति । | ६८ |
| चतुःपञ्चाशत्कुक्षौ पवननिष्ठाः प्रभाः प्रपद्यन्ते । | ६९ |
| तदूर्ध्वं वियद्गता द्वाषष्टिप्रभाः प्रकाशन्ते । | ७० |
| श्रोत्रनेत्रनासिकामध्यगतमनस्सु मयूखा विकसन्ति । | ७१ |
| तदूर्ध्वकायान्तस्स्थितसहस्रारे पद्मे शुक्ररूपद्वयं यत्र प्रतिभाति । | ७२ |

* पञ्चमप्रश्ने एकपञ्चाशत्सूत्रपर्यन्तमेवोपलब्धं भाष्यं यथामातृकं मुद्रितम् । अतःपरं षोडशप्रश्नपर्यन्तं भाष्यानुपलम्भात्सूत्राण्येव केवलं मुद्रितानि.

[1] तद्ज्ञान—B [2] स्सर्वं—B

क्षित्यादिमनोऽन्ताः षट्तत्व इति । ७३

षड्साम्समरसास्ताः कलारूपाः कलाख्याः प्रत्यहं प्रदृश्यन्ते । ७४

क्षितिमठभक्तकलाः पुष्णन्ति । ७५

आपोऽनलपोषिताः ७६

अनिलादनलः । ७७

अनलादाकाशः । ७८

[1]अनन्तरं मनः । ७९

मनो युगात्मेत्यभिधीयते । ८०

पभिरावृत्तं शरीरम् । ८१

षट्पदार्थजाताष्षड्सात्मकास्तत्तद्द्रव्यादेशा इत्युपदेशः । ८२

तत्तद्रसानास्वाद्य विरक्तमनोजः अन्योन्यमन्योन्यमनुभूयते । ८३

स्वतस्स्वयमेवंवित् । ८४

तत्तल्लोकात्प्रेत्य एतमानन्दमयमात्मानमुपसङ्क्रामति । ८५

एतं विज्ञानमयमात्मानमुपसङ्क्रामति । ८६

एतं मनोमयमात्मानमुपसङ्क्रामति । ८७

इमान्लोकान्कामरूप्यनुसंचरन्नेतत्साम गायन्नास्ते । ८८

ऊर्ध्वाधस्तिर्यक्व्यूखानलो भवति । ८९

तच्छाखाग्रविराट्पुरुषस्सर्वमश्नुते । ९०

अनामपालनमनामयहेतुकम् । ९१

धातुपोषकमानन्दहेतुकम् । ९२

रसद्रव्यविज्ञानमानन्दहेतुकम् । ९३

---

[1] अनन्तं—A.

तदन्योन्यसंयोगज्ञानपूर्वकमात्मस्वरूपविज्ञानमानन्दहेतुकम् ९४
विज्ञानसामग्री आत्ममनोविषयपूर्वकं तत्तद्विषयविज्ञान-
स्याश्रयवान् भवति । ९५
रोगपापविसर्जनं साश्रयस्थितस्थापकम् । ९६
ताभ्यामधिभूतं अभयदं सर्वशरीरधारकं धातुल[1]क्षणम् । ९७
निवर्त्यनिवर्तकविषयविधिं ज्ञात्वा विषये नप्रमत्तं साध्या-
साध्यविधिनिषेधज्ञानपूर्विका कार्या चिकित्सा । ९८
एकैकशरीरद्रव्यभेदमेकैकभेषजम् । ९९
पृथिव्युद्भवगुणोऽम्लरसवन्निरसद्रव्ययोश्शोषकपोषकः । १००
अम्भूतगुणो गतरसवद्द्रव्ययोश्शोषकपोषकः । १०१
तेजोभूतोद्भवावूषणरसान्तर्हितलवणोषणरसौ अम्बुपव-
नयोश्शोषकपोषकौ । १०२
पवनभूतोद्भवः सकलरसावगतस्पर्शयोग्यद्रव्यरसापहृत-
रसादिकीर्णरक्तरसस्सकलदोषनिवर्तकः । १०३
गगनभूतोद्भवतच्छायात्मभूनिष्ठतिक्तरसाधीनानिलानलोष्मरुज
आकाशाधीनकषायरसा यावत्सर्वदोषस्यामयापहाः । १०४
यावद्धातुपोषकद्रव्यादनात्तत्तद्रोगनिवर्तकाः । १०५
विषयविषयाणामात्माभिघातान्मारुतोद्रेकहेतुकम् । १०६
अदनाभिघातजरुजोऽदनाभिघातहेतोरदनजामनिवर्तकनिवृत्तिः। १०७
दुस्साध्या अभिघातजाः । १०८
सिरानिवर्तकाश्शरीरनाशकाः । १०९

[1] भूतलक्षणम्— B.

अन्त्यकालव्यसनादभिघातज इति । ११०
क्षयार्शोगुल्मनेत्ररुक्प्रवचनहेतुकम् । १११
देहशोषाद्देहपाकाद्देहसारोऽतिसरति । ११२
स्वादुरसश्शुक्रपोषकः । ११३
स्वादुरसविरसश्शुक्रशोषकः । ११४
अम्लरसो मज्जाप्रवर्धकः । ११५
अम्लरसवि सो मज्जाहीनताप्रदः । ११६

इत्यायुर्वेदस्य पञ्चमप्रश्नः समाप्तः

—o—

## अथ षष्ठः प्रश्नः



लवणरसोऽस्थिदृढकरः । १
लवणविरसोऽस्थिमृदुकरः । २
तिक्तरसो मेदःप्रवर्धकः । ३
तिक्तरसविरसो मेदोऽभिघातकः । ४
ऊषणरसो मांसाभिवृद्धिप्रदः । ५
ऊषणविरसो मांसहीनताप्रदः । ६
कषायरसोऽसृग्धात्वाभिवृद्धिप्रदः । ७
विरसकषायो निर्गतरसासृक्प्रवर्धकः । ८
असृगेव रसः । ९
असृगेव रसासृक् । १०
विरुद्धद्रव्ययोगाद्विरसो भवति । ११
विषमोत्पादको भवति । १२

सोऽविपक्वो भवति । १३

तस्माद्विषमानलो भवति । १४

यद्रसाज्जातोऽनलस्तद्रसं पचति । १५

रसानुसरो [1] दोषः । १६

दोषानुसरो रोगः । १७

रोगानुसरो धातुः । १८

धातुप्रचरा दोषाः । १९

आद्यास्त्रयः । २०

पवनप्रकोपं हरन् तद्रसानुसरो धातुपोषकः । २१

आद्यास्त्रयो विरसैकताभावात् तदनुगतरोगाः । २२

पवनप्रकोपजाताश्चासाध्याः । २३

आद्याज्जातरोगस्सद्यो मारकः । २४

द्वितीयाज्जातश्चतुरहः । २५

तृतीयष्षड्रात्रम् । २६

तत्रैकरसो विरसोऽष्टमे प्राणघातकः [2] । २७

आद्यरसाद्विरसो दशमेऽहनि । २८

अन्त्यरसाद्विरसश्चतुर्दशाहनि । २९

अन्त्यद्विरसरस एकरसो विरसोऽष्टादशेऽहनि । ३०

तिक्तास्त्रयो मेदोमांसासृक्प्रचारं प्रवर्धयन्ति । ३१

विरसा रसविषमप्रदा भवन्ति । ३२

तिक्तास्त्रय एकदा रसा विरसा भूत्वैकैकमनेकगुणरसान्प्र[3]दर्शयन् नान्यरसोत्पादकोऽनलो भवेत् त्रिरससाहाय्यान्निवर्तते । ३३

---

[1] रोगः—A. [2] तत्रैकरसो द्विरसो—रसाद्विरसः—A & B.

[3] मनेकरसगुणान्प्रद—B.

तत्तद्रोगास्सुसाध्याः । ३४

तिक्तरसाद्विरसष्षोडशाहस्सुसाध्यः । ३५

तिक्तरसाद्विरसैकरसविरस एकादशाहस्सुसाध्यः । ३६

अधिकरसवद्द्रव्य[1]मामयहेतुकम् । ३७

[2] यद्दोषाहाररसातिमात्रका रसास्तद्दोषजनकाः । ३८

यावदजीर्णं तावद्रोगः । ३९

यावज्जीर्णं समयो निवर्तकः [3] । ४०

मधुररसादि [4] सन्निपातज्वरापहम् । ४१

गोघृतं सर्वरोगहृत् । ४२

आजमाविकं बालरोगविनाशनम् । ४३

क्ष्माल्पानलाम्बुजस्वादुरसं पित्तहरम् । ४४

पाकाम्लरसः पवनानुगमन्दाक्षिरोगहारकः । ४५

सिद्धपाकाद्धि स्वादुरसः पवनहारकः । ४६

[5] अग्निपाकरसवद्द्रव्यमनिलामयनिवर्तकम् । ४७

स्वादुबीजलवणाम्लकद्रव्यं सकलपवनापहरम् । ४८

आम्लबीजलवणकाण्डस्वादुपत्रादिकं पित्तावृतानिलनिवारकम् । ४९

लवणबीजस्वाद्वम्लगात्रद्रव्यं कफावृतानिलगदापहम् । ५०

कषायरसनिभं आम्लगात्रभूरुहं सकलामयापहारकम् । ५१

कषायरसश्शुक्लशरीरनाशहेतुकः । ५२

स्वादुरसाश्श्रमधातुनाशकरसविनाशकाः । ५३

ऊषणरसवत्पोषकमज्जाप्रबोधकपवनहराम्लरसः तदुद्भूतरोग-
घातकः । ५४

---

[1] मामहेतु. [2] यद्दोषहार. [3] B कोशे नास्त्येतत्.

[4] रोगाविसन्निपात—A. [5] अग्निकंपात—A.

तिक्तरसवदस्थिशोषकामयनिवर्तकम् [1] । ५५

लवणरसोऽन्तस्थितामयापहः । ५६

लवणरसगुणकमेदोधातु[2]दूषकनिवर्तकः । ५७

तिक्तबीजं कटुशाखाशरीरं कफरोगजालामयरसाज्जाताजीर्ण-
ज्वरस्य [3] सप्ताहान्निवर्तकम् । ५८

तावदजीर्णरसो रसान्तरं भवति । ५९

तत्तद्रसस्तत्तद्रोगनिवर्तकः । ६०

तद्विषमो भवति । ६१

[4] पित्तहेतुकाम्लरसाजीर्णं षड्रात्रात्तद्रसान्तरं भवति । ६२

तद्रसस्तद्दोषजनकः । ६३

कफहेतुकलवणरसाजीर्णं नवरात्रं तावद्रसान्तरं भवति । ६४

तद्रसस्तद्दोषजनकः । ६५

विरसान्नजाताजीर्णेऽपि ज्वरः । ६६

यद्विरसान्नपाचयः स्वादुरसः, कषायो यद्भवेदनिलहेतुकः,
आम्लविरस[5]स्तिक्तरसः पित्तहेतुकः तद्विरसास्तद्रूपजाः । ६७

अनल [6] एव निवर्तकः । ६८

जीर्णाजीर्णविवेको जिह्वायां विद्यते नृणाम् । ६९

स्वाञ्जल्यां दृश्यते रसः । ७०

यत्रस्था ये रसास्तत्रैव भान्ति । ७१

तस्मात्पाचकपित्तं पचत्याहारम् । ७२

धातून्पचत्यनिलः [7] । ७३

---

[1] विवर्धकम्—A. [2] पोषक—B. [3] ज्वरः—A & B. [4] दीप्ति—A.
[5] विरसः कटु—A. [6] अनिल—A. [7] नलः—B.

स एव ज्वरः । ७४

धातुक्षयो भवति । ७५

पित्तो ह्यूष्मा ज्वरो नास्त्यूष्मणा विना । ७६

कषायतिक्तमधुराः पित्तनिवर्तकाः । ७७

[1]यद्वह्निस्स्वस्थाने ज्वलितो[2] भवति तदाहारो धातुपदो भवति तदानलस्स्वस्थः । ७८

तदाहारविहारौ धातुपोषकौ । ७९

रसासृक्स्वादुमांसाम्लमेदोलवणोऽस्थि तिक्तमज्जोषणशुक्लकषायाः प्रतिपक्षकाः । ८०

शुक्ले स्वादु मज्जाम्लः लवणमेदस्तिक्तमांसोषणकषायरसा रसासृग्धातुप्रवर्धकाः । ८१

दोषप्रकोपहेतुद्रवदोष एव विकारः । ८२

यदा विकारमङ्के पश्यति तदाऽविकारकरणं कुर्यात् । ८३

आप्यं तापहारि । ८४

धातुधारणस्वादुरसवद्द्रव्यं अनिलजातानलामयभेषजम् । ८५

यद्रसाधिक्यभूतोऽस्ति तद्रसाधिक्यरसो गुणदायकः । ८६

प्रातः पीत्वाऽम्बु आमाशयस्थरोगं विशोधयत् सर्वरोगहारकम् । ८७

पयः पित्तकफपवनस्पन्दहरं श्वासखासज्वरविनाशनम् । ८८

गव्यं धातुविवर्धनम् । ८९

आजं श्वासकासजित् । ९०

औष्ट्रकं कफपित्तनुत्[3] । ९१

मानुष्यं सर्वदोषघ्नं सन्निपातज्वरनिवारणम् । ९२

---

[1] यो वह्नि—A. [2] ज्वरो—A [3] नैतत् A कोशेऽस्ति.

कटुकादिः रक्तरोगादिकषायकाण्डदेहकफावृत्तरुजापहः । ९३

सर्वदेशकालदेहगतैकरसस्तत्तद्धातुगतरोगविनाशकः । ९४

इत्यायुर्वेदस्य षष्ठः प्रश्नः समाप्तः

—o—

## अथ सप्तमः प्रश्नः

—o—

एकशरीरवद्द्रव्यमेकैकभेषजम् । १

तिक्तरसवत्तदामयजन्यरोगहारकः ॥ २

ऊषणरसवन्मांसधातुनाशकाम्लरसस्तद्धातुमयान् [1] हन्ति । ३

स्वादुरसैः रसासृग्धातुनाशकामयैः तद्विरुद्धकषायरसै[2]स्तद्विनाशकश्शोणितवायुरुत्पद्यते । ४

यद्द्रव्योचितसारो यद्रसा[3]नुसरितगुणप्रधानकरसः तज्जातीयोऽन्य[4]रसप्रतिबन्धकगुणदायकः । ५

यावद्धातुगतद्रव्योचितसारा[5]स्तज्जातीयान्यद्रव्यस्थास्तद्रसानुगुणकामयोत्पादकाः [6] । ६

व्युत्क्रमैर्विरसैर्धातुरसैर्विषमैर्धातुशोषक[7]जातानिल उत्पद्यते । ७

अप्स्वासृक्स्वादुविरसस्तद्धातुजन्यपवनजनकः । ८

---

[1] न्मांसधातुनाश्याम्लधातुस्थामयान् B. न्मांसधातुनाशकाम्लरसस्थधातुस्थामयान्—A. [2] कषायरसः—B & C. [3] वद्रसानुसरितः—A. [4] तज्जातीयान्य—C. [5] सारः—A. B. C. [6] मयोद्बन्धकाः—C, [7] विरसैर्धातुशोषकजातानिल—A & C,

यावद्योगैक[1]कषायरसनिवर्तक:[2] प्रथमधातुस्थविभूतगुणशुद्ध-
स्वादुरसविरसान्त्यजन्यानिल: तिक्तधातौ चरन्[3] एकैकं
नैकविधो बहु हूयते[4] । ९

प्राकृतवैकृतरूपानिलाम्लरसानुगतस्वादुरसोऽनिलहर: । १०

मन्दमधुरमध्यमाम्लाधिकलवणद्रव्यैकसंसृष्टान्तिक[5] मलरोधा-
र्शस: कायपवनादिरोगा: प्रपद्यन्ते । ११

हीनाम्लरसमध्यलवणधिकाम्लरसवद्द्रव्यै: श्वासखासवमनोद्गा-
रादीनां इन्द्रियाधिगताध्मानाद्यामयाश्च दृश्यन्ते । १२

क्ष्माम्भोरसवद्भूताम्बुरसक्षारगुणानुसर[6] स्वादुरसवद्भूरुहा:
रसासृक्पित्तपवनापहा: । १३

यद्द्रव्यानुसरितं[7] यद्द्रव्यं तत्सारान्यसारवद्बीजं तज्जन्यतैलं
तद्द्रव्यं वर्धयन्[8] यावत्सारफलदं पवनहरं सकलधातु-
पोषकम् । १४

यावद्द्रव्यसारान्यद्रव्ययोगरसान्यसारोषणजातं यावद्द्रव्यान्य-
जन्यधूमहेतुक[9] मनलगुणानुसरितमार्द्रज्वलनज्योतिरात्म-
कभूतोषण[10] रसगुणदं कफानिलहरं पित्तप्रकोपकारकं
मूलाधारोद्बोधकम्[11] । १५

पवनात्मकासवपेय[12] भूरुहास्सतुषैकबीजकाण्डा[13] देहवात-
योग्यसकलदोषहरास्सप्तधातुप्रदा: । १६

---

[1] यावद्द्रव्यैक—C. [2] निवर्तका:—A. B. C. [3] तिक्तधतुचरन्—A. B & C. [4] बहूयते—A. [5] द्रव्यै: कविपृष्टान्तिक—B. [6] म्बुर-सक्ष्मानुगुणानुरस—A & C. [7] नुसृतं—C. [8] दर्शयन्—B. [9] धूमधातुक—A. [10] त्मकमृतोष्णरस—A & C. [11] धारबोध-कम्—C. [12] पवनात्मकमासवपेये—A & C. [13] सतुषेकबीज-काण्डे—A & C.

ह्रस्वं लघु । उत्तरोत्तरं गुरु कालपाकजत्र्यम् । १७

तथाश्वेतकृष्णरक्तधूम्रभेदाह्वया [1] गुरुसमलघुगुणदाः । १८

क्रमाद्वातपित्तकफामयापहाः । १९

प्रथममध्यमान्तिमानामेकैकवर्णा विरसमध्यमोत्तमरूपभूसार-
जात [2] रूपभेदा भवन्ति । २०

वर्णभेदादिकं धान्यम् । २१

नवधान्यानि भवन्ति । २२

सप्तधातूनां दोषत्रयाणां पोषकशोषकसमहीनमध्यमोत्तमगुणदं
धान्यम् । २३

एवमेतावान्प्रियङ्गवः [3] । २४

श्यामाकाश्च मे नीवाराश्च मे । २५

उद्दालकानामेवं विद्यात् । २६

आद्यास्त्रयो धातुपोषकाः । २७

इतरे शोषकाः । २८

उद्दालकस्स्वादुरसः । पवनप्रकोपहारकः । स्थूलादिभेदा-
त्पूर्ववद्गुणदायकः । अस्थिरसदोषनिवर्तकः । २९

आद्यपवनगतिक्रमोद्भूता [4] तिरिक्तगत्यागतामृत [5] सुधाभाव-
भूतास्तत्तद्गुणशोषकाः । ३०

पवनप्रथमप्रयाणाधिगतनिस्सृतामृतपूताम्भःक्ष्मारसगुणाम्लरसो
विरसो भवति । ३१

हीनाधिकश्चायमितरेतरं [7] विभाति । ३२

---

[1] धूम्रभेदाख्रिह्वयो—A. [2] भूतस्मारजात—C. [3] ङ्गतः—B & C.
[4] क्रमायाद्भूताति—A&C. [5] गतमृत—A. C. [6] स्तद्गुण—A C.
[7] धिकच्छायेतरेतरं—B.

| | |
|---|---|
| मध्यानिलगतिकृत[1]कार्यं घ्राणेन्द्रियमविषयीकुरुते[2] । | ३३ |
| दोषगत्या तद्विषयमविषयीकुरुते | ३४ |
| गन्धवती पृथिवी । | ३५ |
| मधुमाधवसमययोचित[3]मधुररसोऽरिष्टरोगहारकः । | ३६ |
| मधुश्च माधवश्च वासन्तिकावृतू । | ३७ |
| द्वितीय[4]भूतोद्भवत्वादुरसक्रमातिक्रमाद्रिरसा भवति । | ३८ |
| तद्रसश्चरमधातुपोषकः । तज्जन्यगुणो विकारकः । | ३९ |
| जलमलं अजलजम्बुलं[5] विभाति । | ४० |
| यावत्साग विकार[6]निवर्त्यनिवर्तका[7] निवर्तन्ते । | ४१ |
| तज्जन्यान्यजन्यश्वयथुजन्यमरिष्टसूचकम् । | ४२ |
| अन्नाद्यनद्य[8]नतिसारसरणं गतायुर्ज्ञापकम् । | ४३ |
| अनामसार[9]विगतिर्यत्रान्तकालमयात्मिका[10] । | ४४ |
| कषायरसनिभं आम्लगात्रभूरुहे[11] । | ४५ |
| अविषयविषयानुभवः[12] तत्कार्यनाशकः । | ४६ |
| साध्यासाध्यज्ञानपूर्विका चिकित्सा[13] । | ४७ |
| सारविषये[14] विधिज्ञं पण्डितमभिमन्येत । | ४८ |
| अप्रमत्तश्चिकित्सायाम् । | ४९ |
| असाध्यास्त्याज्याः । | ५० |

---

[1] गतकृत—A&C. [2] मविषयं कुरुते—B. [3] माधवसंयोजित—AC.
[4] द्वितृतीय—B. [5] अजलजम्बु ग—A&C. [6] विकारा इति सु प र म
[7] निवर्तकेन—A&C. [8] दन्याद्य—A&B&C.
[9] अनायासार A&C. अनायसार—B [10] कालमयापिका A.
[11] नैतत् AC. कोशग्योरास्ति. [12] नुभवात्—B.
[13] कार्या स्वचिकित्सा—AC. [14] साध्यविषये इति सुपाठः

साध्येषु प्रवर्तयेत् । ५१

परोपकारः पुण्याय भवति । ५२

ताश्च वर्तकाः[1] । ५३

एवमनामपालनं कुर्यात् । ५४

पवनामृतपूरितपूतधातुवद्रसाश्च निवर्तकाः । ५५

भूनधातुशोषकहेत्वजन्यान्य[2]हेतुकामयास्संसाध्याः । ५६

यावदजीर्णानुभवकालो य वदामहतानलस्तावत्कालं
ज्वरो निवर्तते । ५७

आममेवानलविकारकारकम् । ५८

आमेनाहतोऽनालो बहिरुज्ज्वलयन् ज्वरयति । ५९

यावत्समये समयो नियामकः । ६०

अजीर्णारिप्रारोचकश्चयश्चतिसाराचीनसर्वेन्द्रियविनाशास्ते
दृश्यन्ते । ६१

यत्रस्था ये रसा रसासृग्विरसनात् द्रव्यं द्रव्यान्तरं विभाति । ६२

शोभा प्रभेषजम् । ६३

ग्रीष्मोत्थितरसा आकाशावकाशपवनगमनात्पञ्चपवनानिरीक्ष-
णात्[3] गगनानिलगुणकषायतिक्तरसावष्टम्भविकारकारकाः । ६४

पवनगतात्प्रयत्नच्युताद्यद्भूतशोषास्तद्रमानपहरन् तद्विर-
सस्तन्निवर्तकः । ६५

आद्याद्विभूतोद्भवशब्दश्शब्दान्तरं श्रूयते । ६६

एकमनेकं भाति । ६७

---

[1] निवर्तका इति सुपाठः.

[2] हेत्वजन्यहेतु—C. [3] त्पञ्चपवनपञ्चानिरीक्षणात्—C.

नीलपीततृणानि सुषुप्तौ दृश्यन्ते । ६८

महिषाहिगर्दभदर्शनम् । ६९

भूतप्रेतपिशाचाश्च । ७०

एतान्यरिष्टसूचनाङ्गानि[1] । ७१

द्विधातुशोकमधुररसः कफदोषहेतुकः । ७२

गगनानिलगुणरसकटुरसास्स्वादुरसजनितकफापहाः । ७३

आद्यद्विधातुशोषकं यादृशं एतादृशं यच्चाक्षुषं सकृद्विषयी-
करोति । ७४

यद्भूताधिकजाता धातवस्तद्भूताधिकगुणाभिवर्धकाः । ७५

यद्धीनगुणो भवेत्तच्छोषकः । ७६

तज्जाताश्च साध्याः[2] । ७७

मन्दं मन्दं पचत्यनलः । ७८

जीर्णानलादजीर्णानलः । ७९

अनलधातुवर्धकमरिष्टनिवर्तकम् । ८०

पवनधारणात्तत्तत्सारादुत्थितरसास्तेजोभूतोद्भवसकलरसा अमृ-
ताहितपथरोधनाद्विरसा[3] भवन्ति । ८१

न[4] प्रकाशार्थे न गोचरति । ८२

चन्द्रानलनक्षत्राश्च तैजसानि भान्ति[5] । ८३

हीनर्क्षे नभोऽर्थे संवत्सरारिष्टहेतुवद्दृश्यते । ८४

तज्जन्यजातरोगाश्चासाध्याः । ८५

सार्द्रस्वादुरसवद्द्रव्यं तत्तत्प्रदिष्टारिष्टहारकम् । ८६

---

[1] रिष्टसूचकानि—B

[2] श्चासाध्याः—A & C.

[3] अमृताहितपथिरुद्रानद्विरसा - A & C.

[4] B कोशे प्रकाशार्थमित्येव पाठः.

[5] तैजसाबिहृन्ति—C.

| | |
|---|---|
| अब्भूतो[1]द्भवस्वादुरसश्शुक्लधातुगतविकारनिवर्तकः । | ८७ |
| स्वस्थेऽन्येवमरिष्टानां कायिकानामेवंविधिः । | ८८ |
| बालानामेकमासम् । | ८९ |
| मासैकस्यार्धं[2] दिनम् । | ९० |
| वातपित्तविकृतिविकारारोचकजातज्वरा न साध्याः । | ९१ |
| पवनश्लेष्मविकृतश्वयथुविकारजातज्वरो मारकः । | ९२ |
| श्लेष्मपित्तविकृतिविकारातिसारजातज्वरः शरीरनाशकः । | ९३ |
| पित्तपवनविकृतिश्लेष्मविकारारतिजातज्वरः प्राणघातकः । | ९४ |
| वातपित्तश्लेष्मविकृतिसर्वेन्द्रियविकारजातज्वरः शरीरनाशकः । | ९५ |
| वेगधारणात्यशनाभिघातजामयानां अन्तरुदीरणानामल्पाशन-मरसवद्द्रव्यं कचिद्दृश्यते । | ९६ |
| अदृष्टार्थं व ञ्छन्ति । | ९७ |

इत्यायुर्वेदस्य सप्तमः प्रश्नः समाप्तः



## अथ अष्टमः प्रश्नः

—o—

| | |
|---|---|
| अहरहम्मरसादनमिच्छन्ति । | १ |
| अरिष्टगामी रोगहारकः । | २ |
| पृथिव्युद्भवरसास्रकषायरसनेन्द्रियप्रवर्तकरसो रसोचितकषाय-निवर्तकः । | ३ |
| अबुद्भवमांसोषणरसः श्वयथुदूषकः । | ४ |

[1] आकाशाभूतो—A & C. [2] मासैकसार्थं दिनम्—C.

वह्निभूतोद्भवमेदस्तिक्तरसः [1] जलमलातिसारनिवर्तकः । ५

वातभूतोद्भवमज्जान्तर्हितलवणाम्लरसो रसासृग्धातुरोगनिवारकः । ६

श्वेतपुष्पं [2] मांसरसधातुस्थामयान् हन्ति । ७

पीतपुष्पं [3] मेदोधातुगतविकारविनाशकः । ८

नीलपुष्पं [4] सन्धिमज्जा[5]धातुरोगविकारघ्नः । ९

अनेकपुष्पवद्द्रव्यं शुक्रहीनबलरोगापहः । १०

रक्तपुष्पाज्जातबीजजन्याः फलसारकाः । ११

श्वेतपुष्पजातबीजजन्याः सारसारकाः । १२

पीतपुष्पजातबीजजन्याः पत्रसारकाः । १३

[6] कन्दाज्जातबीजजन्याः [7] कन्दसारकाः । १४

बीजाज्जातबीजजन्याः बीजसारकाः । १५

पुष्पाज्जातबीजजन्याः पुष्पसारकाः । १६

पीतपुष्पाज्जातश्शुक्लधात्वधोगतविकारप्रकृतिमपहरन् स्वादुरसवच्चरमधातुपोषकः । १७

श्वेतजन्यजातरसास्तत्पुष्पवन्महीरुहः सकलपवनापहाः । १८

श्वेतपुष्पवत्पादपाः पित्तप्रहारकाः । १९

पीतपुष्पवन्महीरुहः कफामयान् घ्नन्ति । २०

नीलपुष्पवत्तरवः द्वन्द्वयोगरोगान् [8] प्रहरन्ति । २१

एकशाखिनोऽनेक[9]पर्णास्तथा । २२

पृथिव्येकैकजातो [10] रक्तरूपे । २३

---

[1] जलमेहाति — A. [2-4] पुष्वी—B. [5] रसास्तिमज्जा—B.
[6] काण्डा — A & C. [7] इव—A & C. [8] प्रदहन्ति—B.
[9] वर्णा—B & C. [10] 'रक्तरूटे'–इत्यादि 'द्रव्याणि' इत्यन्तं न A.C. कोशायोर्दृश्यते ।

अनलोत्पादकजाताः पीतधर्ममध्यभूताः । २४

अनेकावयवी [1] पीतप्रभा । २५

अनिलाधिक्यद्रव्याणि दुर्गुणगुणहीननिर्गुणवन्न भासन्ते । २६

जातरूपानिलरूपे अनेकवर्णेष्वेकाधिको भवेत् । २७

एकैकजातीयानामनेकजन्मनामेवंविधिः । २८

तद्भूतरूपाधिगतवातपित्तकफान्यविकारहेतुज्ञानवानायुष्कामो भवति । २९

[2] दोषप्रभावज्ञानपूर्वकं नाभेरधस्तादूर्ध्वं हृदिस्थवातपित्तकफाः समस्ता असमस्तास्समग्राण्यामयप्रतिपादकाः । ३०

यत्रस्था ये रसास्तत्तद्भूतजातास्ते धातुपोषकाः । ३१

अविकृतास्ते तान्पुष्णन्ति [3] । ३२

शुक्लशोणितसन्निपातकास्तथा । ३३

मातुराहारजातहेतुकाः तावद्द्रव्यजा रुजः योनिप्रकृतयश्चिरावृतास्ताभिरावर्तन्ते । ताभिरभिवर्धन्ते । ३४

तेन च [4] लोकोऽभिभूयते । ३५

शुक्लशोणितसन्निपातकाले वा मातुराहारजातहेतुका योनिप्रकृतयस्ताभिरावृतास्ताभिरभिवर्धन्ते । ३६

शरीरे शोषकपोषकद्रव्यैस्तथा । ३७

कायकामविकारजाताः मानसिकाश्चाभिघातजाः यावन्तोऽभिवर्धन्ते यावद्द्रव्यजातरोगाः अवयवविकारहेतुकास्तावद्द्रव्यजातरुजः प्रपद्यन्ते । ३८

---

[1] पित्रप्रभा इति पाठः.
[2] दोषभाव—A & C.
[3] स्थितान्पुष्णन्ति—A.
[4] तथाकिलोको—C.

भूतपूर्वजातरसजातरोगास्तत्तद्भूतपूर्वरसादनाज्जातरोगाः । ३९

समानजात्यामयहेतुकजातिद्रव्यैः तद्भूतभूतावयवाः प्रवर्धन्ते । ४०

दर्शनस्पर्शनाभिभाषणादि [1] भेदाः प्रदृश्यन्ते । ४१

जाङ्गलानूपसाधारणदेशादिक्रमाद्वातकफपित्तामयाः तद्भूत-
भूतभेषजाः विध्युक्तप्रकारास्स्मृताः । ४२

शोधनशमनरूपं [2] द्विप्रकारं भेषजम् । ४३

[3] दोषास्तत्रेरिताः । ४४

[4] तैर्देहशोधनं भेषजम् । ४५

[5] तैर्देहशोधनमन्नं भेषजम् । ४६

ऊर्ध्वाधोवस्तिकर्मोपकारकम् । ४७

तस्मिन् निवर्तकतैलघृतलेह्यादयः पोषकाः । ४८

शास्त्रविषयद्रव्यभेदज्ञानवान् भिषक् । ४९

सर्वौषधक्षमो रोगी भवेदरोगी । ५०

व्युत्क्रमास्ते दोषविकारकाः । ५१

विषमगतिविकारकारको रोगः । ५२

अरोगी दोषसमगत्या । ५३

अहरहरात्मानमेवाभिमंस्यात् [6] । ५४

प्रातरुत्थायाभिमतदेवताभाजनम् । ५५

तद्रूपलक्षणोपशयाप्तिभिर्निर्धारणम् । ५६

दोषाः कालमनुसरन्ति । ५७

---

[1] भाषणवि—B. [2] रूपप्रकारं —A & C. [3] A. C. कोशायोनैतद्दृश्यते ।
[4]-[5] तैर्दाहः—A. B. C. [6] मिगमनं न्यस्यात्—B. मिगमनं स्वस्यात्—A & C.

| | |
|---|---|
| कालानुकूलभेषजं कुर्यात् । | ५८ |
| तिक्तक्षीरप्रदार्द्रशाखादिभिर्दन्तस्यान्तः प्रक्षालनम् । | ५९ |
| लोचनावलोचनम् | ६० |
| आपादमस्तकं तैलाभिषेचनम् । | ६१ |
| उद्वर्तनं कफघ्नम् । | ६२ |
| यथासुखोष्णाद्भिः प्रक्षालनम् । | ६३ |
| ततः सङ्कल्पपूर्वं स्नानमाचरेत् । | ६४ |
| दशविधस्नानमशक्तेषु । | ६५ |
| अशुद्धे सत्यायुर्विनश्यति । | ६६ |
| शुद्धकर्माधिकारः । | ६७ |
| आयुष्कामयमानं भेषजम् । | ६८ |
| शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति । | ६९ |
| पराशयमालक्ष्यान्तर्हितं कुर्वन् प्रवर्तेत । | ७० |
| यान्यनवद्यानि कर्माणि तानि सेवितव्यानि । | ७१ |
| यान्यनिन्दितानि तानि त्वयोपास्यानि । | ७२ |
| नो इतराणि । | ७३ |
| यान्यस्माकं सुचरितानि । | ७४ |
| ये के चास्मच्छ्रेयांसो ब्राह्मणाः तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । | ७५ |
| श्रद्धया देयम् । | ७६ |
| अश्रद्धयाऽदेयम् । | ७७ |
| श्रिया देयम् । | ७८ |
| ह्रिया देयम् | ७९ |
| भिया देयम् । | ८० |

| | |
|---|---|
| संविदा देयम् । | ८१ |
| वित्तशाठ्यं न कारयेत् । | ८२ |
| तस्माद्विषयप्रवृत्त्या सुखमेकमनुभूयते । | ८३ |
| धर्मार्थकामहेतुपूर्वकम् । | ८४ |
| मध्यमस्सर्वपुरुषार्थः । | ८५ |
| प्रकाशयेत्पण्डितानाम् । | ८६ |
| न पीडयेन्नातिलालयेदिन्द्रियाणि । | ८७ |
| एवं सततम् । | ८८ |
| न हिंस्यात्सर्वभूतानि । | ८९ |
| प्रातरविकारं निरीक्षयेत् । | ९० |
| विसृष्टविण्मूत्राद्विमलाशयः । | ९१ |
| सर्वात्मानं स्वशरीरवत्पश्यति । | ९२ |
| देवब्राह्मणगोऽर्थिनस्सुपूजयेत् । | ९३ |
| विधिनियमिताचारवान् भुङ्क्ते । | ९४ |
| आयुरारोग्यमैश्वर्यं यशोलोकांश्च शाश्वतान् । | ९५ |
| अर्कानिलानलनक्षत्रादयः कालचक्रसिद्धाः प्रचरन्ति । | ९६ |
| विविधसुखं कालचक्रं प्रयच्छति । | ९७ |
| स कालस्सर्वं सृजति । | ९८ |
| स सर्वजगत्पोषकः । | ९९ |
| स एव नाशहेतुकः । | १०० |
| नित्य[1]नियन्ता स एकः । | १०१ |
| स एवंवित् । | १०२ |
| जगदन्नमयं करोति । | १०३ |
| कालकर्मवशात्तत्तत्फलं प्रददाति । | १०४ |

इत्यायुर्वेदस्य अष्टमः प्रश्नः समाप्तः

[1] नित्यो—A.

## अथ नवमः प्रश्नः

—o—

विचित्ररूपा विचित्रावयवाः ।

विचित्रविधिः ।

स्थावरजङ्गमान् कालः प्रवर्धते[1] ।

अणोरणुत्वं वहति ।

महतो महान् भवति ।

षड्रसाः कालचोदिताः ।

गुणावगुणवेदनं[2] कुर्वन्ति विषमकालहेतुकाः ।

विरुद्धफलदं विषमपाकपरिपाकजम् ।

सूच्या यावद्दलद्वयं भिद्यते स कालो लवः ।

त्रिंशल्लवास्तृटिः ।

तृटिद्वयं कालः ।

कालद्वयं मात्रा ।

मात्राष्टादशभिः काष्ठा ।

काष्ठास्त्रिंशत् कला ।

कलास्त्रिंशत् क्षणः ।

षड्भिरेका नाडिका ।

नाडिकाद्वयं मुहूर्तम् ।

तच्चतुर्भिर्यामः ।

यामचतुर्भिर्दिवा ।

तथा निशा ।

अहर्निशं दिनम् ।

---

[1] प्रवर्धयतीति सुपाठः. [2] णविधानं—A & C.

पञ्चदशाहः पक्षः । २२

पक्षद्वयं मासः । २३

मासद्वयं ऋतुः । २४

त्रिऋतु एकायनम । २५

षड्तवो द्वादशमासास्संवत्सरः । २६

स वर्षस्तावद्गल[1]नियामकः । २७

दिनपक्षमासऋतुसंवत्सरायनं कालं करोति । २८

रसभेदाद्विविधफलमन्योन्यं करोति । २९

द्रव्यभेदाद्दुर्धिगता बहुकाले बहुविधा भूता भवन्ति । ३०

मधुमाधवसमये मधुररसः प्रादुरभूत् । ३१

मधुश्च माधवश्च वासन्तिकावृतू । ३२

मधुररसः पवनं हन्ति कफप्रकोपहेतुकः । ३३

ततोऽपिरसः पित्तं हन्ति कफप्रकोपकारकः[2] । ३४

स्वादुस्तिक्ततयां पाके भाति । ३५

शुक्लधातुस्तेनैव वर्धते । ३६

तद्विशुद्धगुणकारकः । ३७

स्वस्थास्सप्तधातवः[3] प्रवर्धन्ते । ३८

तदविकारे सति मधुप्रेरितं शुक्लम् । ३९

तद्वृत्तौ[4] मधुरान्नादनं भेषजम् । ४०

स्त्रीपुरुषयोरङ्गाङ्गलिङ्गनं तदा[5] । ४१

सर्ववर्णपुंसां[6] तत्तत्प्रियतमाः पोषकाः । ४२

तत्तत्काले तत्तद्रसवद्विभाति[7] । ४३

---

[1] यावद्वर्षास्तावद्गाल—B & C. [2] नैतत् B कोशे. [3] स्वस्थानलः सप्तधातवः—A & C. [4] तद्वृद्धौ—सुपाठः. [5] तथा—A & C. [6] सर्वपुंसां—C. [7] द्रसो विभाति—C.

तत्साजात्यरसवद्द्रव्यं पोषकम् । ४४

शुक्रशुचिसमये आम्लरसः प्रादुरभूत् । ४५

शुक्रश्च शुचिश्च ग्रैष्मावृतू । ४६

अम्लरसः अनिलप्रकोपकारकः । ४७

अधिकाम्लद्रव्यं पित्तप्रकोपनाशनम् । ४८

कफप्रकोपहेतुर्भवति । ४९

अघृतं [1] पोषकं कार्यम् । ५०

अन्नपानऽग्रजगाहाराभिभाषणैः कालानुकूलस्रक्चन्दनादिकं
भेषजम् । ५१

एतद्दतुनैव प्रापयेत् । ५२

नभोनभस्यकालयोगाल्लवणरसः [2] प्रपद्यते । ५३

नभश्च नभस्यश्च वार्षिकावृतू । ५४

अस्थिधातुपोषकः तत्तत्कालोचितकार्यकारणः । ५५

अविकारं निरीक्ष्यैतत्प्रयोजयेत् [3] । ५६

विसृष्टविण्मूत्राद्विमलाशयः । ५७

लवणं पवनं हन्ति कफपित्तहेतुकम् । ५८

हीनाधिकलवणरसः कफपवनं हन्ति पित्तं कुरुते । ५९

इषोर्जमासयोगात्तिक्तरसः प्रादुरभूत् । ६०

इषश्चोर्जश्च शारदावृतू । ६१

तिक्तं स्वादु पाके । ६२

हीनाधिकतिक्तरसः पित्तकफं हन्ति मारुतं कुरुते । ६३

दोषहेतुप्रकोपे भवति । ६४

---

[1] मदतं –C, मदशं –B. [2] प्रादुरभूत् –B. [3] स्प्ररोचयेत् –A & C.

सहसहस्यकालयोगात्कटुरसः प्रादुरभूत् । ६५

सहश्च सहस्यश्च हैमन्तिकावृतू । ६६

कटुकातिकटुकः कफानिलं हन्ति पित्तं कुरुते । ६७

मांसधातुप्रदो भवति । ६८

तपस्तपस्यसमययोगात्कषायरसः प्रादुरभूत् । ६९

तपश्च तपस्यश्च शैशिरावृतू । ७०

आमाशयस्थितापानानिलातिरोधनात्तत्प्रवर्तकसिरापूरितगुम्भ-
नादनिलरोधनात्तन्मार्गगानिलप्रकोपनाद्गुल्मादयो भवन्ति । ७१

उदरहृदयकण्ठनासिकाशिरोरुजः । ७२

तस्मादन्नपानानिलपूरितं मोचयेत् । ७३

पक्वाशयगतान्ननिरोधनं नातिपीडनम् । ७४

दोषास्तेनैव वर्धन्ते । ७५

जलाशयपूरितमूत्रनिरोधस्तन्निरोधरोगहेतुकः । ७६

तद्रोधात्सिरापथवेदनाविड्रोधान्त्रवृद्ध्यजीर्णाक्षिकर्णामयप्रदाः । ७७

क्षुत्प्रतिहताक्षिकुक्षिशिरोविन्द्रियदौर्बल्यम् । ७८

क्षारतीक्ष्णरसाञ्जनघ्राणनमनर्कविलोकनहेतुकम् । ७९

क्षुच्छमनाभावजन्या दाहभ्रमबाधिर्यहेतुकुक्षिरुजः प्रजायन्ते । ८०

तृष्णायास्तथा । ८१

दाहतश्चेन्द्रियदौर्बल्यम् । ८२

आलस्यातिजृम्भणानलो भवति । ८३

तैलाभ्यङ्गाङ्गमर्दनम् । ८४

कफनिरोधनाच्छ्वासो भवति । ८५

| | |
|---|---|
| अरुचिश्वासशीधुहिक्काहृद्दामयाः प्रपद्यन्ते । | ८६ |
| जृम्भान्तर्धानात् कण्डूपाण्डुज्वरकुष्ठविसर्पिदुष्टकोष्ठामयाः प्रपद्यन्ते । | ८७ |
| प्रियालापस्वापनं भेषजम् । | ८८ |
| क्षतजासृङ्निरोधनात् शोभपाण्डुज्वरदोषप्रदो भवति । | ८९ |
| छर्दितिरोधनात् मोहभ्रमारुच्यनिलातिमन्दकारकाः । | ९० |
| ऊर्ध्वाधोविरोचनं भेषजम् | ९१ |
| चरमधातुविसर्जनकालज्ञसन्निरोधनात् तेजअयुःक्षमो [1] भवति । | ९२ |
| मेहातिसारशोभहृद्दामयाः प्रपद्यन्ते । | ९३ |

इत्यायुर्वेदस्य नवमः प्रश्नः समाप्तः



## अथ दशमः प्रश्नः

—o—

| | |
|---|---|
| देहानिलपथगतसुखकालविरुद्धकर्मकरणं देहविनाशकं भवति । | १ |
| तत्तत्पोषकद्रव्यजन्यं भेषजम् । | २ |
| तत्कालोचितकार्य[2]करणम् । | ३ |
| यावदृतुजातरसाः पोषकाः । | ४ |
| अहरहरविकारं निरीक्षयेत् । | ५ |
| पथ्योचितान् पोषयेत् । | ६ |
| तदुपकारकद्रव्यावलोचनमार्जनं[3] धातुपोषकम् । | ७ |

[1] क्षयः इति पाठे भिषजः प्रमाणम्. [2] कारणम्—B.
[3] मज्ञवनं—A. मजवनं—C.

(अ) शुचिमलापहारकम् । ८
पार्थिवावयवयोगात्सर्वरसानुगुणदं भवति । ९
स्वादुरसवद्द्रव्ययोगाच्छुक्राभिवृद्धिं करोति । १०
अम्भूताभिवर्धकम् । ११
तत्कालातियोगादम्लरसवज्जलं [1] पचनपित्तप्रकोपहारकम् । १२
[2]तिन्त्रिका तिक्तरसा ज्वरपित्तापहा । १३
[3]शृंगीसतिक्तं ज्वरातिसारनुत् । १४
[4]मूर्वा स्वादुरसा विषमज्वरहृद्रोगनाशिनी । १५
[5]विषा तिक्तरसा विषमज्वरक्षयतृष्णापहा १६
[6]कल्यस्तिक्तरसो रक्तपित्तकुष्ठकण्डूकफरोगघ्नः । १७
[7]नेता तिक्तरसा रक्तपित्तकण्डूव्रणघ्नी । १८
[8]दीपनीरसा भूनिम्बा तिक्तरसा कफज्वरतृष्णाप्रकोपहारिणी । १९
कैडर्यः कटुरसो रुच्यो ग्राही दीपनः कासापहः । २०
रोहिणी तिक्तरसा सर्वज्वरकासजित् । २१
मुस्ता तिक्तरसा कफपित्तज्वरारोचकविनाशिका । २२
तारस्तिक्तरसः मदभ्रमज्वरातिदाहनुत् । २३
वालुकं तिक्तरसं दुष्ट[9]कण्डूविसर्पकविदाहज्वरविनाशकम् । २४
तुरुष्कः कटुरसो देवताप्रियः [10] कुष्ठकण्डूकासतृष्णाप्रदः । २५
मृगमदः कटुरसः कासपवनहरः हृद्यगन्धप्रदः । २६
उशीरः कटुरसः शीतलहृन्नेत्र[11]रुजापहः । २७

---

[1] पवन—B. [2] तन्द्रिका—A & C. [3] संगीस—B. [4] मूला—A & C. [5] वृषा—A & C. [6] कल्यास्तिरमो—A & C. [7] सता—A. [8] दिव-निरसारः—A & C. [9] कुष्ठ—A. [10] कुष्टकामलकफतृष्णा—A & C, [11] शीतलकफहृन्नेत्र—A.

शौण्डं तिक्तरसं कफमुखरोगहरं वृष्यं बल्यं रसायनम् । २८

कोलिकं कटुरसं वातपित्तान्यमुखरोगजित् । २९

गुवाकः[1] कषायरसो मेदिमोहकृत्कफ[2] पित्तहरः । ३०

नीली[3] तिक्तरसः वृष्यादिविषभ्रमोहजित् । ३१

तपस्विनी तिक्तरसा श्लेष्मामयरक्तपित्तविनाशिनी । ३२

धरुषी[4] तिक्तरसो विषकुष्ठविनाशकः । ३३

शैलेयकं तिक्तरसं विषमूर्च्छाभ्रमपवनपित्तविनाशकम् । ३४

वालुकं[5] तिक्तरसं[6] वातपित्तशिरोरुङ्नुत् । ३५

लाक्षा तिक्तरसा कफकुष्ठज्वरभ्रमविनाशिनी । ३६

सुप्रभा तिक्तरसा ज्वरविदाहापहा गर्भस्थामयान् हन्ति । ३७

ताम्रपुष्पी[7] कषायरसः रक्त[8]पित्तातिसारजिद्गर्भसंस्थापनः[9] । ३८

पौण्डरीकं[10] मदभ्रमरक्तपित्तातिसारजित् । ३९

सिंहिका कटुरसा उष्णज्वरारोचकानाहघ्नी । ४०

तिन्त्रिका[11] कटुरसा कफमेहामयापहा वृष्यव्रणघ्नी । ४१

शैलूषः स्वादुरसः सर्वशूलछर्द्यतिसारहरा दीपनपाचनबल्या । ४२

तिन्त्रिका कटुरसा शोफपाण्डुकफानिलघ्नी दोषापहा । ४३

तिन्दुकः[12] कटुरसः कफामयापहः । ४४

---

[1] गुवा—B. [2] मोहहृत्कफ—A C. [3] निरि—A & C. [4] धरुषिः—C.
[5-6] B कोशे पदद्वयमिदं त्यक्तम्. [7] ताम्रपुटपं—A & C.
[8] कफ—A & C. [9] सारद्विड्भवसंस्थापिनी—B. [10] हेण्डलिकं—B.
[11] तन्त्री दन्ती—B & C. A. [12] इन्दुकः—A. डुन्दुकः—C.

स्थौणेयः[1] तिक्तरसः शोभकासहिक्कावम्यरोचकसिध्मा-
विनाशनः । ४५
दीर्घायुस्स्वादुरसः रक्तपितानिलविनाशकः । ४६
जीवकं[2] कटुरसं चक्षुष्यं सर्वरोगजित् । ४७
माषा स्वादुरसा रक्तपित्तहरा कफशुक्लकारिका । ४८
वृष्यवल्ली स्वादुरसा बल्या वृष्या समीरजित् । ४९
यष्टिः स्वादुरसा छर्दिविषमपित्तपवनापहा । ५०
इक्षु[3]:स्वादुरसः श्वासकासपवनासृक्पित्तस्महरा रसायनी । ५१
गोपा स्वादुरसा वातपित्तातिसारघ्नी । ५२
कर्णिका स्वादुरसा लघुज्वरश्वासकासादिदाह[4] जित् । ५३
वाकूची[5] स्वादुरसा कुष्ठवातज्वरविनाशिनी । ५४
मदनस्तिक्तरसः क्षयगुल्मप्रमेहकारकः । ५५
वंशस्तिक्तरसः[6] कफविषहरो वर्ण्यः[7] । ५६
त्रपुसं स्वादुरसं वातासृक्पित्तमूत्रकृच्छ्रविकारनुत् । ५७
कोशातकी स्वादुरसा वातपित्तगुल्मप्रमेहहारिका । ५८
वन्ध्या कषायरसा पाण्डुशोभोदरार्शःकफपित्तातिसारजित्
मरा[8] । ५९
धात्री[9] कषायरसा कफपित्तहरा वृष्या । ६०
विद्रुमः[10] तिक्तरसः नेत्रकण्ठरोगघ्नः केशवृद्धिकरो लघुः । ६१

[1] स्थौणः — A & C. [2] देवकं — A. वनं — C [3] बिक्षुः — A & B. निक्षुः — C. [4] कासविदाह — A & C. [5] दाहाची — B. वारुजिः — C. [6] A. C. कोशयोस्त्यक्तमिदं पदद्वयम् . [7] वृत्यः [8] स्थिरा — B. [9] रात्रिः — A & C. [10] कतिद्रुमः — A & C.

शशि[1] स्तिक्तरसा गुल्मव्रणप्रमेहोष्णोदरक्रिमिशूलहरा । ६२
विशल्या कटुरसा कफवातहरा[2] विरेचनी । ६३
आखुकर्णी[3] स्वादुरसा वातपित्तपाण्डुक्रिमिशोभहरा । ६४
कलला[4] कटुरसा श्वासकासपित्तामयविनाशिनी । ६५
. . . . तिक्तरसः कफवातगुल्मार्शोहरो विरेचकः । ६६
विशल्या तिक्तरसा प्लीहगुल्मोदरकफपित्तापहा । ६७
हैमवती कटुरसा कुष्ठपाण्डुशोभक्षयापहा । ६८
त्रिवृत् स्वादुरसा वातपित्तप्रशमनी विरचनी । ६९
रास्ना कटुरसा शोभवातोदरकफविघातकी । ७०
तुरगी कटुरसा वातश्लेष्मक्षयकासनेत्रामयान् जयेत् । ७१
वर्षाभूस्तिक्तरसा कफपित्तशोभपाण्डुजित्[5] । ७२
बला स्वादुरसा वातपित्तज्वरविनाशिनी । ७३
पिप्पली स्वादुरसा वातपित्तजिद्रम्य[6]रसायनी । ७४
आमण्डा[7] स्वादुरसा पित्तगुल्मोदरार्तिहरा विरेचनी । ७५
मिसी[8] कटुरसा वातपित्तज्वरव्रणविनाशिनी बल्या । ७६
बला पीवरा स्वादुरसा वातपित्तव्रणज्वरनेत्रामयापहा । ७७
शालिनी[9] स्वादुरसा वातपित्तजित् बल्या । ७८
वामनी कटुरसा वातश्लेष्महरा हृत्कण्ठक्रमीन् हन्ति । ७९
क्रिमिघ्नः[10] कटुरसः वातपित्तजित क्रिमिनेत्रामयान्हन्ति । ८०

---

[1] कसि—A & C. [2] कफवातगुल्मार्शोहरा—A & C. [3] आघुपर्णी—A. [4] कला—A. [5] जित्वरा—A. [6] जिद्वृष्या—A. [7] आमन्ता—A & C. [8] मिशि—B निशी—A. [9] शालिः—A & C. [10] क्रिमि मः—B & C.

लवणो लवणरस उच्यते[1] । सकलशूलपवनापहः[2] । ८१
पटुजः कटुरसः रक्तातिसारत्रिदोषघ्नः । ८२
सामकं[3] कटुरसं गुल्मादनावचनम् ? । ८३
गुदाच्च द्व्यङ्गुलादूर्ध्वं मेढ्राच्च द्व्यङ्गुले तथा ।
चतुरङ्गुलिमायामं विस्तारं कुक्कुटाण्डवत् ॥ ८४
ओमात्महितदण्डेऽस्मिन् चक्रमध्ये मतेऽनिशम् ।
अष्टप्रकृतिरूपाऽस्ति कुण्डली सुप्तनागवत् ॥ ८५

इत्यायुर्वेदस्य दशमः प्रश्नः समाप्तः

—o—

## अथ एकादशः प्रश्नः

[क्लेशतनूकरणार्थः] देहानिलगतिकरणार्थश्च । १
अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । २
अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् । ३
अनित्याशुचिदुःखानात्मसुनित्यशुचिसुखात्मख्यातिरविद्या । ४
दृग्दर्शनशक्त्योरेकात्मतेवास्मिता । ५
सुखानुशायी रागः । ६
दुःखानुशायी द्वेषः । ७
स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः । ८
ते प्रतिप्रसवहेयाः सूक्ष्माः । ९
ध्यानहेयाः तद्वृत्तयः । १०
क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः । ११

---

[1] रुच्यते—A [2] नातः परं B कोशे A ग्रन्थो दृश्यते—
[3] नामकं Namak = Salt ?

सतिमूले तद्विपाको जात्यायुर्भोगाः । १२

ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् । १३

परिणामतापसंस्कारदुःखैः गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः । १४

हेयं दुःखमनागतम् । १५

द्रष्टृदृश्ययोः संयोगो हेयहेतुः । १६

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् । १७

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि । १८

द्रष्टा दृशिमात्रः शुद्धोपि प्रत्ययानुपश्यः । १९

तदर्थ एव दृश्यस्यात्मा । २०

कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् । २१

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः । २२

तस्य हेतुरविद्या । २३

तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम् । २४

विवेकख्यातिरविप्लवा हानोपायः । २५

तस्य सप्तधा प्रान्तभूमिः प्रज्ञा । २६

योगाङ्गानुष्ठानात् अशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः । २७

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि। २८

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । २९

एते जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् । ३०

शौचसंतोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः । ३१

वितर्कबाधने प्रतिपक्षभावनम् । ३२

वितर्काहिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् । ३३

अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः । ३४
सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् । ६५
अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् । ३६
ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः । ३७
अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः । ३८
शौचात् स्वाङ्गे जुगुप्सा परैरसंसर्गः । ३९
सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च । ४०
सन्तोषादनुत्तमसुखलाभः । ४१
कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः । ४२
स्वाध्यायदिष्टदेवतासम्प्रयोगः । ४३
समाधिसिद्धिरीश्वरप्रणिधानात् । ४४
स्थिरसुखमासनम् । ४५
प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् । ४६
ततोद्वन्द्वानभिघातः । ४७
तस्मिन् सति श्वासप्रश्वासयोः गतिविच्छेदः प्राणायामः । ४८
स तु बाह्याभ्यन्तरस्तम्भवृत्तिः देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः । ४९
बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः । ५०
ततः क्षीयते प्रकाशावरणम् । ५१
धारणासु च योग्यता मनसः । ५२
स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इव इन्द्रियाणां प्रत्याहारः । ५३
ततः परमा वश्यतेन्द्रियाणाम् । ५४

इत्यायुर्वेदस्य एकादशः प्रश्नस्समाप्तः

## अथ द्वादशः प्रश्नः

—o—

देशबन्धः चित्तस्य धारणा । १

तत्र प्रत्ययैकतानता ध्यानम् । २

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः । ३

त्रयमेकत्र संयमः । ४

तज्जयात्प्रज्ञालोकः । ५

तस्य भूमिषु विनियोगः । ६

त्रयमन्तरङ्गं पूर्वेभ्यः । ७

तदपि बहिरङ्गं निर्बीजस्य । ८

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ
निरोधक्षणचित्तान्वयो निरोधपरिणामः । ९

तस्य प्रशान्तवाहिता संस्कारात् । १०

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः । ११

शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः । १२

एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः । १३

शान्तोदिताव्यपदेशधर्मानुपाती धर्मी । १४

क्रमान्यत्वं परिणामान्यत्वे हेतुः । १५

परिणामत्रयसंयमादतीतानागतज्ञानम् । १६

शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्तत्प्रविभागसंयमात्
सर्वभूतरुतज्ञानम् । १७

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् । १८

प्रत्ययस्य परचित्तज्ञानम् । १९

न तत्सालम्बनं तस्याविषयीभूतत्वात् । २०

कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्धानम् । २१
सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा । २२
मैत्र्यादिषु बलानि । २३
बलेषु हस्तिबलानि । २४
प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् । २५
भुवनज्ञानं सूर्यसंयमात् । २६
चन्द्रे ताराव्यूहज्ञानम् । २७
ध्रुवे तद्गतिज्ञानम् । २८
नाभिचक्रे कायव्यूहज्ञानम् । २९
कण्ठकूपे क्षुत्पिपासानिवृत्तिः । ३०
कूर्मनाड्यां स्थैर्यम् । ३१
मूर्धज्योतिषि सिद्धदर्शनम् । ३२
प्रातिभाद्वा सर्वम् । ३३
हृदये चित्तसंवित् । ३४
सत्त्वपुरुषयोः अत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः पदर्थात् स्वार्थसंयमात् पुरुषज्ञानम् । ३५
ततः प्रातिभश्रावणवेदनादर्शनास्वादवार्ता जायन्ते । ३६
ते समाधावुपसर्गा व्युत्थाने सिद्धयः । ३७
बन्धकारणशैथिल्यात् प्रचारसंवेदनात् चित्तस्य परशरीरवेशः । ३८
उदानजयात् जलपङ्ककण्टकादिषु असङ्ग उत्क्रान्तिश्च । ३९
समानजयात् ज्वलनम् । ४०
श्रोत्राकाशयोः सम्बन्धसंयमात् दिव्यं श्रोत्रम् । ४१

कायाकाशयोः सम्बन्धसंयमात् लघुतूलसमापत्तेश्चाकाशगमनम् । ४२
बहिरकल्पिता वृत्तिः महाविदेहा ततः प्रकाशावरणक्षयः । ४३
स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः । ४४
ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च । ४५
रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् । ४६
ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः । ४७
ततो मनोजवित्वं विकरणभावः प्रधानजयश्च । ४८
सत्वपुरुषान्ताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च । ४९
तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् । ५०
स्थान्युपमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् । ५१
क्षणतत्क्रमयोः संयमात् विवेकजं ज्ञानम् । ५२
जातिलक्षणदेशैः अन्यतानवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः । ५३
तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् । ५४
सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् । ५५
जन्मौषधिमन्त्रतपस्समाधिजाः सिद्धयः । ५६
जात्यन्तरपरिणामः प्रकृत्यापूरात् । ५७
निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् । ५८
निर्माणचित्तान्यस्मितामात्रात् । ५९
प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् । ६०
तत्र ध्यानजमनाशयम् । ६१
कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् । ६२

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् । ६३

तासामनादित्वं चाशिषो नित्यत्वात् । ६४

हेतुफलाश्रयालम्बनैः सङ्गृहीतत्वात् तेषमभावे तदभावः । ६५

अतीतानागतं स्वरूपतोऽस्त्यध्वभेदात् धर्माणाम् ६६

ते व्यक्तसूक्ष्मा गुणात्मानः । ६७

परिणामैकत्वात् वस्तुतत्वम् । ६८

वस्तुसाम्ये चित्तभेदात् तयोर्विविक्तः पन्थाः । ६९

न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् । ७०

तदुपरागापेक्षित्वात् चित्तस्य वस्तु ज्ञाताज्ञातम् । ७१

सदा ज्ञाताश्चित्तवृत्तयः तत्प्रभोः पुरुषस्यापरिणामित्वात् । ७२

न तत्स्वभासं दृश्यत्वात् । ७३

एकसमये चोभयानवधारणम् । ७४

चित्तान्तरदृश्ये बुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च । ७५

चितेरप्रतिसङ्क्रमायाः तदाकारतापत्तौ स्वबुद्धिसंवेदनम् । ७६

इत्यायुर्वेदसूत्रे द्वादशः प्रश्नः.

---

## अथ त्रयोदशः प्रश्नः

—o—

धातुशोषककर्मानेकविषयककार्यजन्यमन्दानलप्रयुक्त सिरापथगतदोषगतप्रतिबन्धकयावद्धातुविकारकारकयावंक्तिमिगतदोषवृद्धिक्षयः क्षयः । १

तन्निवर्तकपोषकद्रव्यं तत्र भेषजम् । २

लक्षणान्यपि तथा । ३

योग्यैस्तच्च निवर्तयेत् । ४

| | |
|---|---|
| अनेकहेतुकद्रव्यमनेककार्यकृत् । | ५ |
| अनामपालनं कुर्यात् | ६ |
| आमं हि सर्वरोगाणाम् | ७ |
| आदिभूतमाह ब्रह्मा । | ८ |
| गन्धवद्गुणभूयिष्ठपार्थिवद्रव्यावयवादिकरसविरसद्रव्यादनजन्यामपित्तविषयक्रिमिग्रस्तसिराविकार-रसासृग्धातुविकारा अत्र दृश्यन्ते । | ९ |
| रसविरसवद्द्रव्यादनाजीर्णजन्यामज्वरे लङ्घनं विशोषकद्रव्यं च तत्र भेषजम् । | १० |
| तच्छोफपाण्डवामयातिसाराशांसि कुष्ठरक्तपित्तमेहविकारा दृश्यन्ते । | ११ |
| अनेकरोगानुगतो बहुरोगपुरोगमः । इतिहेतुकं षड्रसविरसद्रव्यं यथायोगं धातुनाशकृत् । | १२ |
| रसो ह्यसृक् । रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । | १३ |
| शुक्रे स्वादु । मज्जाऽऽम्लम् । अस्थि लवणम् । मेदः तिक्तम् । मांसे ऊषणम् । कषायरसाः रसासृग्धातुपोषकाः । | १४ |
| रसासृक्स्वादु । मांसमाम्लं । मेदो लवणम् । अस्थि तिक्तम् । मज्जोषणम् । शुक्रं कषायरसः विरसः । विरसा रसासृग्धातुनाशकाः । | १५ |
| ये ये रसास्तद्भूतजातास्ते तत्तद्भूतपोषकाः | १६ |
| रसोपरसलोहादिनाधारमहारसात्पञ्चभूतात्मकाः ये ये महारसाः महारोगनिवर्तकास्तत्तत्कृतिविषयकरसा जागरणाभावनात्मकाः । | १७ |

नाजारितं रसं मारयेत् । १८

जारिता रसा आरोग्यभक्तिमुक्तिप्रदायकाः । १९

सोमरसाम्सपित्तास्सविषाः पाकीकृता रसास्सृध्यांसगामपित्तज्वरानुगत पवनपित्तविभ्रमतन्द्रारुग्दाहदोषप्रजागरोपनिवर्तकाः । २०

मृतलोहामृतं सपाकीकृताश्शुद्धरसाः मेदोस्थिगतविकारानुसरितपवनपित्तद्वन्द्वहेतुकरसाजीर्णजन्यामपित्तविषक्रिमिकण्ठकुठजसिताङ्गकर्णिकरक्तजिह्वातले तन्द्रादाहशोषप्रकोपनिवर्तकाः । २१

यावद्गन्धपवनाजीर्णजन्यामविकारकवचनदोषा यावद्बहिर्दृश्यन्ते, यावद्गन्धेतराजीर्णजन्यामविकारपित्तदोषा यावद्देहे प्रभवन्ति, यावद्गन्धपवनाजीर्णजन्यामविकारपित्तजनकदोषाः यावद्बहिः प्रदृश्यन्ते ; ताव[1]द्गन्धविशेषज्ञानं दोषत्रयपूरितहेतुकाजीर्णजन्यामपवनविकारदोषाः । २२

रसविरसवद्द्रव्यादनाजीर्णजन्यामविशेषः पित्तदोषः । २३

न तैजनजन्यः पित्तदोषः । २४

बहिः स्थिता दोषा दन्तविकारकारकाः । २५

पञ्चाशद्वर्णाधिष्ठिता यथायोगं तथा तत्तदङ्गाभिवर्धकाः । २६

बाह्याग्निरग्निस्थाने ज्वलयति । २७

अग्निर्मे वाचि श्रितः, वाग्घृदये, हृदयं मयि, अहममृते अमृतं ब्रह्मणि । २८

वाक्प्रवर्तकः[2] सिराधमनीः प्रज्वलयति । २९

वायुर्मे प्राणे श्रितः । प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ३०

---

[1] 'याव' इत्येव भूये पाठः. [2] वायुः प्रवर्तकः.

अग्निं वा वादित्यः सायं प्रविशति। तस्मादग्निर्दूरान्न ददृशे।
सूर्यश्चक्षुर्गमयतु। सूर्यो मे चक्षुषि [1]श्रितः। चक्षु-
र्हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। ३१

मनोविकाराकारकमन्नमद्यात्। ३२

रसवद्द्रव्यं शिरोनिरामयकारकम्। सर्वेन्द्रियाह्लादकम्। ३३

दुस्संयोगवर्णमनोद्रव्यं पञ्चप्राणाधारकम्। ३४

चन्द्रमा मे मनसि श्रितः। मनो हृदये। हृदयं मयि।
अहममृते। अमृतं ब्रह्मणि। ३५

अब्द्रव्यं सर्वशरीरपोषकम्। ३६

रेतो वा आपः। आपो मे रेतसि श्रिताः। रेतो हृदये।
हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। रेतसो
वा तस्मिन्रेतो दधाति। ३७

विगन्धविगतरसालवालं सर्वशरीरपोषकम्। ३८

पृथीवी मे शरीरे श्रिता। शरीरं हृदये। हृदयं मयि।
अहममृते। अमृतं ब्रह्मणि। ३९

यावत्सरसवद्द्रव्यं निरामयकारकम्। ४०

यावत्तनूरुहस्तावत्तनूंषि बिभ्रति। ४१

ओषधयः सोमे राज्ञि प्रविष्टाः। पृथिवी तनुम्। ओषधि-
वनस्पतयो मे लोमसु श्रिताः। लोमानि हृदये। हृदयं
मयि। अहममृते। अमृतं ब्रह्मणि। ४२

इन्द्रो मे बले श्रितः। बलं हृदये। हृदयं मयि।
अहममृते। अमृतं [2]ब्रह्मणि। ४३

---

[1] तै. ब्रा. III. 10, 8, 17. [2] A कोशे नेदं 'इन्द्रो मे-ब्रह्मणि' इति वाक्यं दृश्यते।

यावत्तनूरुहस्तावत्तनूंषि बिभ्रति । पर्जन्येनोषधिवनस्पतयः
प्रजायन्ते । पर्जन्यो मे मूर्ध्नि श्रितः । मूर्धा हृदये ।
हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ४४
[1]वनस्पतिप्रेरितो मन्युर्भवति । ईशानो मे मन्यौ श्रितः ।
मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं [2] ब्रह्मणि । ४५
आयुर्वेदज्ञानं नक्षत्रज्ञानपूर्वकम् । ४६

इत्यायुर्वेदस्य त्रयोदशः प्रश्नः समाप्तः

## अथ चतुर्दशः प्रश्नः

अश्वनीनक्षत्रात्मकं सप्तत्रिंशत्सिरावृतं अवर्णाधारकपादपद्मं
सर्वशरीराधारकम् । १
भरणि ऋक्षरूपं सप्तत्रिंशत्सिराश्रितं इवर्णजानुपद्मचलन-
क्रियाकारकगतागतकर्मोपकारकम् । २
कृत्तिकाभाधिष्ठितं सप्तत्रिंशत्सिरावृतं उवर्णाश्रितजङ्घापद्मं
जङ्गमशरीराधारकम् । ३
रोहिणी-ऋक्षरूपं सप्तत्रिंशत्सिरावृतं ऋवर्णाश्रितमेढ्रपद्मं
प्रजाजननकारकं । सिरावलम्बक-ऋवर्णबोधकोरुपद्मं
जङ्गमशरीरधारकम् । ४
मृगशिरोनक्षत्ररूपं सप्तत्रिंशत्सिराश्रितं लृवर्णबोधकप्रदेशगत-
कमलं जलमलाशयधारकम् ।
आर्द्रानक्षत्रात्मकं सप्तत्रिंशत्सिराश्रितं एवर्णज्ञापकपृष्ठप्रदेश-
कमलं[3] अतिसुखकारकम् । ६

[1] वनस्पतीत्यादि—ब्रह्मणीत्यन्तं न C कोशे. [2] तै. आ. III. 10, 8.
[3] रतिसुखकारकम्—C.

पुनर्वसूभाप्रतिपादकं सप्तत्रिंशत्सिराधारकं ऐवर्णाधारकमलं
रतिसुखकारकम् । ७

तिष्यतारारूपं सप्तत्रिंशत्सिरावृतं ओवर्णाश्रितनाभिपद्मं
श्वासपवनगतिकारकम् । ८

आश्लेषानक्षत्रात्मकं सप्तत्रिंशत्सिरावृतं औवर्णाधारभूतं
कुण्डलीकृतनाभ्यावृतपद्मं पवनगतिकारकम् । ९

मखानक्षत्रात्मकं सप्तत्रिंशत्सिरावलम्बकं 'अम्' इत्यनु-
स्वारबोधकनाभ्यावृतपद्मं पाचकपित्तप्रतिपादकम् । १०

फल्गुनीनक्षत्ररूपं सप्तत्रिंशत्सिरावलम्बकवर्णज्ञापकवृषणद्वय-
पद्मं सप्तधात्वङ्गुलवालपोषकम् । ११

उत्तरफल्गुनीनक्षत्रात्मकं सप्तत्रिंशत्सिरावलम्बखवर्णज्ञापक-
रोमराजिपद्मं विसर्जनरूपसुखहेतुकम् । १२

फल्गुनीनक्षत्रात्मकं सप्तत्रिंशत्सिरावलम्बकखवर्णज्ञापक-
स्वाधिष्ठानपद्मं सर्वाशयद्योतकम्[1] । १३

हस्तोडुरूपप्रतिपादकं सप्तत्रिंशत्सिराश्रितगवर्णज्ञापिदक्षिण-
पक्षपद्मं गर्भाशयकारकम् । १४

चित्रानक्षत्ररूपं सप्तविंशत्सिरावृतं घवर्णबोधकवामपक्षगतपद्मं
परिपूर्णगर्भाशयकारणम् । १५

स्वातीताराप्रतिपादकं सप्तत्रिंशत्सिराधारकं ङवर्णज्ञापकं[2]
दक्षिणहस्तपद्मं तत्तच्छरीरगतभिन्नस्वर[3]ज्ञापकम् । १६

विशाखानक्षत्ररूपं सप्तत्रिंशत्सिरावलम्बकचवर्णद्योतकवाम-
हस्तपद्मं स्त्रीपुंसस्वरभेदज्ञापकम् । १७

---

[1] तृतीयं फल्गुनीनक्षत्रमिदमधिकमिति भाति । [2] हस्तद्वयपद्मं–A&C. [3] सर्व—A&C.

अनूराधानक्षत्रात्मकं सप्तत्रिंशत्सिरावृतं छवर्णद्योतकं दक्षिण-
भुजपद्मं ऊर्ध्वकायधारकम् । १८
रोहिणी[1]नक्षत्ररूपं सप्तत्रिंशत्सिरावृतं वामभुजपद्मं ऊर्ध्वकाया-
धारकम् । १९
[2]विचितृ ऋक्षरूपं सप्तत्रिंशत्सिराधारकजवर्णद्योतकं दक्षिण-
बाहुपद्मं सर्वकर्मोपकारकम् । २०
आषाढऋक्षरूपं सप्तत्रिंशत्सिरावृतं झवर्णज्ञापकं वामबाहुपद्मं
सर्वकर्मोऽपकारकम् । २१
आषाढनक्षत्रात्मकं सप्तत्रिंशत्सिराधारकं ञवर्णद्योतकं दक्षिण-
प्रकोष्ठपद्मं हस्तकौशल्यद्योतकम् । २२
श्रोणानक्षत्रात्मकं सप्तत्रिंशत्सिरावृतं टवर्णबोधकवामप्रकोष्ठपद्मं
हस्तकौशल्यज्ञापकम् । २३
श्रविष्ठानक्षत्रात्मकं. सप्तत्रिंशत्सिरावृतं ठवर्णबोधकं दक्षिण-
पाणितलपद्मं सर्वार्थाभिनय (ज्ञानज्ञापक) ज्ञापकम् । २४
शतभिषक्-नक्षत्रात्मकं सप्तत्रिंशत्सिराधारकं डवर्णबोधकं
वामपाणितलपद्मं सर्वार्थाभिनयज्ञान (ज्ञापकज्ञान) हेतुकम् । २५
प्रोष्ठपदानक्षत्रात्मकं सप्तत्रिंशत्सिरावृतं ढवर्णद्योतककण्ठपद्मं
तत्तद्वर्णाश्रिततत्तत्स्वरभेदज्ञापकम् । २६
प्रोष्ठपदानक्षत्रात्मकं सप्तत्रिंशत्सिरावृतं णवर्णद्योतकग्रीवापद्मं
पञ्चप्राणाधारकम् । २७
प्रोष्ठपदानक्षत्रात्मकं सप्तत्रिंशत्सिरावृतं तवर्णबोधकहृदयपद्मं
इच्छाप्रयत्नात्मज्ञानहेतुकम्[3] । २८

[1] रोहिणीति ज्येष्ठानक्षत्राय नामानन्तरम् वर्णविन्यासस्तु न कृतः. [2]. विचृतिः इ वेदे. तै. सं. IV. 4, 10. [3] तृतीयमिदं प्रोष्ठपदानक्षत्रमधिकमिति भाति.

रेवतीऋक्षरूपं सप्तत्रिंशत्सिरावृतं थवर्णबोधकं शिरःकमलात्मक-
पद्मं सहस्रसिराश्रितवर्णज्ञानज्ञापकम् । २९

षष्टिर्नाडिकानामहर्निशम् । ३०

पञ्चदशाहः पक्षः । ३१

पक्षद्वयं मासः । ३२

मासद्वयमृतुः । ३३

त्रिऋतु एकायनम् । ३४

षडृतवो द्वादशमासास्संवत्सरः । ३५

अश्विनी ज्वरः । ३६

भरण्यतिसारः । ३७

कृत्तिका ग्रहणी । ३८

रोहिण्यर्शोविकारः । ३९

मृगशीर्षमजीर्णम् । ४०

आर्द्रा मन्दानिलः । ४१

पुनर्वसू विषूची । ४२

तिष्यमरुचिः । ४३

आश्लेषा पाण्डुः । ४४

मघा श्वासः । ४५

फल्गुनी कासः । ४६

फल्गुनी कुष्ठामयः । ४७

हस्तो मेहः । ४८

चित्रा कुक्षिरोगः । ४९

स्वाती नेत्रामयः । ५०

विशाखा कर्णरोगः । ५१

अनूराधा नासिकामयः । ५२

रोहिण्यपस्मारः[1] । ५३

विचृतिः क्षयः[2] । ५४

पूर्वाषाढा कुष्ठा[3]श्मरीरोगः । ५५

उत्तराषाढा कुष्ठ[4]छर्दिविकारकः । ५६

श्रोणा हृदयामयः । ५७

श्रविष्ठा पवनः । ५८

शतभिषक् पित्तरोगः ५९

प्रोष्ठपदं कफामयः । ६०

प्रोष्ठपदं मदात्ययः । ६१

रेवती व्रणम्[5] । ६२

अश्विनीनक्षत्रविरुद्धगतिहेतुग्रहयुक्ततत्तत्कालानुगतरसाजीर्ण-
जन्यामपित्तविषक्रिमिविकारकज्वराः प्रदृश्यन्ते । ६३

अवर्णज्ञापकयावस्तिरानालावृतौषधयः ज्वरप्रकोपनिवर्तकाः । ६४

अजीर्णजन्यामपित्तविषक्रिमिनिवर्तकं यत्तदेव भेषजम् । ६५

औषधिदानजपहोमदेवतार्चनं निवर्तकम् । ६६

"यत्रौषधयस्समग्मत राजानस्समिताविव । विप्रस्स उच्यते
भिषक् रक्षोहा अमीवचातनः[6]" । ६७

कटु[7]रोहिकागणचोविर[8]सविषपाषाणलोहपुटद्रव्यप्रयुक्त-
योगास्तदामयनिवर्तकाः । ६८

---

[1] ज्येष्ठारोहापस्मारः—A. [2] मूलं विद्वषिः क्षयः—A. मूलं विधृतिः क्षयः—C. [3] अत्र रोहिणी विचृतिरिति ज्येष्ठामूलयोर्वैदिके नामधेयऽजानता लेखकेन ज्येष्ठामूले सूत्रयोः प्रक्षिप्य रोहिणीविचृतिशब्दौ रोगबोधकाविति भाति. [4] अष्ट—A & C. [5] श्रवणम्—C. श्रवणम्—A. [6] ऋग्वेद X 97, 6. [7] कड—A & C.
[8] चविरस—Dr. B.S.

| | |
|---|---|
| कचित्कथयोगाः । | ६९ |
| कचिच्चूर्णादयः । | ७० |
| कचित्तैललेहघृतादयश्च । | ७१ |
| अश्विनीदेवतार्चनं तत्र भेषजम् । | ७२ |
| तत्तन्नक्षत्रविगतियोगग्रहयुक्तकालसंयोगवशाज्जातज्वराः कष्टसाध्याः । निवर्त्यनिवर्तकज्ञानं यथायोगं तन्निवर्तकम् । | ७३ |
| भरणिविगतियोगग्रहयुक्तकालसंयोगादतिसारामयाः प्रदृश्यन्ते । | ७४ |
| इवर्णज्ञापकयावत्सिरानालावृततत्तदौषधियोगाः तन्निवर्तकाः । | ७५ |
| यमदेवतार्चनं निवर्तकम् । | ७६ |
| कृत्तिकाभाविरुद्धगतिजातग्रहयुक्तकालसंयोगवशाद्ग्रहणीरोगः प्रपद्यते । | ७७ |
| उवर्णज्ञापकयावत्सिरानालावृतौषधियोगकरणं ग्रहणीरोगनिवर्तकम् । | ७८ |
| अग्निदेवताप्रार्थनविधिः निवर्तकः । | ७९ |
| रोहिणीऋक्ष विगतियोगजातग्रहयुक्तकालसंयोगवशादर्शोरोगप्रवृत्तिः । | ८० |
| ऋवर्णद्योतकयावत्सिरानालावृतनिवर्तकद्रव्यं अर्शोरोगनिवर्तकम् । | ८१ |
| प्रजापतिदेवताप्रार्थनं तत्र भेषजम् । | ८२ |
| मृगशीर्षविरुद्धगतियोगजातग्रहयुक्तकालसंयोगवशादजीर्णामयाः प्रपद्यन्ते । | ८३ |

लृवर्णबोधकयावत्सिरानालावृतौषधियोगकरणं अजीर्णामय-
निवर्तकम् । ८४
सोमदेवताप्रार्थनादिकं निवर्तकम् । ८५
आर्द्रानक्षत्रविगतियोगजातग्रहयुक्तकालसंयोगवशात् मन्दानल-
रोगः प्रवर्तते । ए ऐ वर्णज्ञापकयावत्सिरानालावृतयावन्नि-
वर्तकद्रव्यं मन्दानलभेषजम् । ८६
तत्तद्दुरितनिवर्तकयावत्प्रायश्चित्तरूपरुद्रदेवताप्रार्थनं विधिः । ८७

इत्यायुर्वेदस्य चतुर्दशः प्रश्नः समाप्तः

—o—

## अथ पञ्चदशः प्रश्नः

—o—

पुनर्वसुविगतिजातग्रहयुक्तकालसंयोगवशात् विषूचीरोगः प्रवर्तते । १
ओ औ वर्णज्ञापकयावत्सिरावृतौषधियोगकरणं विषूचीरोग-
निवर्तकम् । २
अदितिदेवताप्रार्थनं भेषजम् । ३
तिष्यनक्षत्रविगतिजातग्रहयुक्तसमयविशेषवशादरुचिरोग-
स्सम्पद्यते । ४
[1] अं वर्णद्योतकयावत्सिरानालावृतयावन्निवर्तकद्रव्यं अरुच्या-
मयनिवर्तकम् । ५
बृहस्पतिदेवताप्रार्थनं भेषजम् । ६

[1] नक्षत्राणां वर्णयोगक्रमोऽत्र पूर्वप्रश्नोक्तक्रमादिक्रियते ।

आश्लेषानक्षत्रविगतियोगग्रहयुक्तसमययोगात् पाण्डुवामयः प्रवर्तते । ७

क ख वर्णद्योतकयावत्सिरानालावृततत्तत्सजातीयद्रव्ययोगकरणं पाण्डुवामयनिवर्तकम्[1] । ८

मघानक्षत्रविगतिजातग्रहयुक्तकालविशेषवशात् श्वासामयः प्रपद्यते । ग घ वर्णद्योतकयावत्सिरानालावृतयावद्दोषयस्तन्निवर्तकाः । ९

पितृदेवताराधनजपहोमा भेषजम् । १०

फल्गुनीनक्षत्रात्मकविषमगतिजातसमयविशेषवशात्कासामयस्सम्पद्यते । ११

ङवर्णज्ञापकयावत्सिरानालावृतौषधियोगकरणं कासामयनिवर्तकम् । १२

अर्यमदेवताप्रार्थनं विधिः । १३

फल्गुनीनक्षत्रविगतिजातग्रहयुक्तकालवशात्कुष्ठामयः प्रपद्यते । च छ वर्णद्योतकयावत्सिरानालावृतौषधियोगकरणं कुष्ठामयनिवर्तकम् । १४

भगदेवताप्रार्थनं विधिः । १५

हस्तोडुविगतिजातग्रहयुक्तकालवशान्मेहामयो भासते । १६

ज झ वर्णद्योतकयावत्सिरानालावृतौषधयोगकरणं मेहामयनिवर्तकम् । १७

सवितृदेवताप्रार्थनं भेषजम् । १८

चित्तानक्षत्रविगतियोगजातग्रहयुक्तसमयविशेषवशान्मूर्छामयः सम्पद्यते । १९

---

[1] देवतार्चनं नोक्तं वा ? लेखकेन त्यक्तं वा ?

ञवर्णद्योतकयावत्सिरानालावृतनिवर्तकद्रव्यं मूर्छामयभेषजम् । २०
इन्द्रदेवताप्रार्थनं विधिः । २१
स्वातीनक्षत्रविगतियोगजातग्रहयुक्तकालसंयोगवशात् नेत्रामयः प्रपद्यते । २२
टठवर्णबोधकयावत्सिरानालावृतद्रव्यं [1]नेत्रामयहारकम् । २३
वायुदेवताप्रार्थनं विधिः । २४
विशाखानक्षत्रविगतिजातग्रहयुक्तकालवशात्कर्णरोगः प्रपद्यते । २५
डढवर्णद्योतकसिरानालावृतौषधियोगकरणं निवर्तकम् । २६
इन्द्राग्निदेवताप्रार्थनं तत्तत्कर्मविपाककरणं भेषजम् । २७
अनूराधानक्षत्रविगतिजातग्रहयुक्तकालवशान्नासिकामयः प्रपद्यते । २८
णवर्णज्ञापकयावत्सिरानालावृतयावद्द्रव्ययोगकरणं नासिकामयहारकम् । २९
मित्रदेवताप्रार्थनं निवर्तकम् । ३०
तथवर्णज्ञापकयावत्सिरानालावृतौषधिकरणं नासिकामयहारकम् । ३१
मित्रदेवताप्रार्थनं निवर्तकम् । ३२
रोहिणीनक्षत्रविगतियोगजातग्रहयुक्तकालवशान्मुखामयस्सम्पद्यते । ३३
दधवर्णबोधकयावत्सिरानालावृततत्तदुपयुक्तयोगकरणं मुखामयनिवर्तकम् [2] । ३४
इन्द्रदेवताप्रार्थनं विधिः । ३५

[1] कर्णामय—A & C.
[2] विवृत्यनन्तरं रोहिणीत्यादिवाक्यं पठितं कोशद्वयेऽपि दृश्यते.

विचृतिविरुद्धगतिसम्भवग्रहयोगकालवशात्क्षयस्सम्पद्यते । ३६

नवर्णबोधकयावत्सिरानालावृतप्रयुक्तद्रव्ययोगकरणं तदामयनिवर्तकम् । ३७

पितृदेवताप्रार्थनं भेषजम् । ३८

अषाढानक्षत्रविगतिसम्भवग्रहयुक्तकालवशात् अश्मरीरोगः प्रतिभासते । ३९

पफवर्णद्योतकयावत्सिरानालावृतयावन्निवर्तकद्रव्यं अश्मरीनिवर्तकम् । ४०

अब्देवताप्रार्थनं निवर्तकम् । ४१

आषाढानक्षत्रविगतिसम्भवग्रहयुक्तकालवशात् छर्दिरोगः प्रपद्यते । ४२

वभवर्णद्योतकयावत्सिरानालावृतओषधियोगकरणं निवर्तकम्[1] । ४३

विश्वेदेवाभिषेचनं निवर्तकम् । ४४

श्रोणानक्षत्रविरुद्धगतिसम्भवग्रहयुक्तकालसंयोगवशादरुचिरोगः[2] प्रपद्यते । ४५

मवर्णबोधकयावत्सिरानालावृततदुपयुक्तद्रव्ययोगकरणं तदामयनिवर्तकम् । ४६

विष्णुदेवताप्रार्थनं तत्र भेषजम् । ४७

श्रविष्ठानक्षत्रविरुद्धगतिसम्भवग्रहसंयुक्तकालसंयोगवशात्पवेनामयः प्रपद्यते । ४८

यरवर्णोच्चारणहेतुकतत्सिरानालावृततत्सजातीयद्रव्यं तदामयनिवर्तकम् । ४९

---

[1] अब्देवतेत्यादि— करणं निवर्तकं इत्यन्तं कोशद्वयेऽप्यदृष्टं सन्दर्भवशादधृतम्.

[2] हृद्यामयः.

वसुदेवताप्रार्थनं भेषजम् । ५०
शतभिषङ्नक्षत्रविगतिजातग्रहकालसंयोगवशात् पित्तरोगः
प्रपद्यते । ५१
लववर्णद्योतकयावस्त्रिरानालावृततन्निवर्तकद्रव्ययोगकरणं पित्त-
प्रकोपनिवर्तकम् । ५२
इन्द्रदेवताप्रार्थनं तत्र भेषजम् । ५३
प्रोष्ठपदाविरुद्धगतिसम्भवग्रहयुक्तकालसमयविशेषात्कफामयः
प्रपद्यते । ५४
शपवर्णबोधकयावस्त्रिरानालावृतयावद्रव्ययोगकरणं कफामय-
हारकम् । ५५
अजैकपाद्देवताप्रार्थनं विधिः । ५६
प्रोष्ठपदानक्षत्रविरुद्धगतिसम्भवग्रहयुक्तकालवशादपस्मारामयाः
प्रपद्यन्ते । ५७
सवर्णद्योतकयावस्त्रिरानालावृतयावद्रव्ययोगकरणं अपस्मारामय-
हारकम् । ५८
अहिर्बुध्न्यदेवताप्रार्थनं निवर्तकम् । ५९
रेवतीनक्षत्रविरुद्धगतिसम्भवग्रहयुक्तकालवशाद्व्रणरोग-
स्समपद्यते । ६०
हवर्णद्योतकयावस्त्रिरानालावृतयावद्रव्ययोगकरणंव्रणामय-
निवर्तकम् । ६१
पूषदेवताप्रार्थनं विधिः । ६२
वह्निभूताधिकद्रव्यादनाजीर्णजन्याम-पित्त विषक्रिमिग्रस्तसिर-
विकारजाता रक्तपित्तविकाराः । ६३
अम्बुभूताधिकगुणोपलम्भकयावत्पदार्थास्तद्विकारहारकाः । ६४

पटोलगोपाघनवृषरोहिणिकेश्यचन्दनतिक्तावर्युत्पलयष्टिद्राक्षे-
क्षुपद्मकरेणुकनिम्बवधूत्रायन्तीमदयन्तीवत्सकमूर्वाप्रियङ्गु-
महतीस्थिरापर्णिबलावटरुहविश्रमोचरसवद्यावत्पदार्थाः
चूर्णकाथतैललेहविकाररूपाद्याः रक्तपित्तामयप्रकोपहारकाः । ६५

अम्बुभूताधिकद्रव्यादनाजीर्णजन्यामपित्तविषक्रिमिग्रस्तसिरा-
विकारहेतुकाश्वासकासविकाराः । ६६

वह्निभूताधिकगुणोपलम्भकयावत्पदार्थास्तद्विकारहारकाः । ६७

वाशानिशाक्षुद्राऽमृतमुण्डिकपोनाः शठीकुण्डलिपुनर्णवा
भार्ङिमसिकोकिलाक्षत्राह्मीझग्ग्येवरुदमण्डूकपर्ण्यर्कालर्कार्त-
वतपस्विनीभृङ्गीसुवर्चलबिल्वकाश्मीरतक्कारिपाटलांशुमती
स्थिरग्रन्थिचव्यचित्रकशुण्ठिपथ्यातकराजमरि[1]शृङ्गिधात्रि-
विभीतकैलालवङ्गपत्रकनागकेसरधन्वयासतुषगन्धवारि-
जीरकादिप्यकाः चूर्णकाथतैललेह्यविकाराः विकारभूत-
श्लेयश्वासकासरक्तप्रकोपहारकाः । ६८

वह्निभूताधिकद्रव्यादनाजीर्णजन्यामपित्तविषक्रिमिगतसिराविकारा
हिध्मामयाः । ६९

निवर्तकाम्बुभूताधिकगुणोपलम्भकयावत्पदार्थाः तद्विकार-
हारकाः । ७०

कपित्थकणा मधुलवणरसोनदशमूलक्षीरसिद्धपुनर्णवानिर्गुण्डि-
बलावर्युत्पलपित्तवराकुष्ठापूरितकटुकचव्याश्वगन्धसुवर्चलैः
सिद्धःक्वाथो हिध्मारोगनिवर्तकः । ७१

यद्धातुविरुद्धान्योन्यद्रव्यादनाजीर्णजन्यामपित्तविषक्रिमिग्रस्त-
सिराविकारकारकद्रव्यविरुद्धान्यद्रव्यादनं यावद्धातुपोष-
कैकभेषजम् । ७२

---

[1] पथ्यातृणराजमरिच—Dr. B. S.

दशमूललवङ्गदारुभार्ङ्गिचाशा[1]वृश्चिकघनधन्वयासबलाकुरु[2]च-
कर्कोलमदमुसलिहरिद्रा[3]नेताश्वगन्धजीरकरास्ना द्राक्षाशृ-
ङ्गिस्थिरापर्णिमिरुजिमति (?) गोक्षुरचन्दनोत्पलयष्टिकशोरु
[4]कपानातिविषोशीरवालुक[5]हेम्मरकाकनासा कुष्ठमञ्जिष्ठा-
लाकाकाकोल्यकावृहस्पतिकुण्डल्यर्कामृतावन्ति तिलङ्ग-
भार्ङ्गिवत्सकखदिरासननिम्बशिग्रुकरञ्ज शतविल्व ।जवृक्ष-
भल्लातकब्रह्मगुलूचीघृष्टिवति(?) विदारि विभीतकशिरीष-
पौष्करदार्वीकरकाकुष्ट[6] . . . . . . बीजक्षारक[7]पिना-
प्यदीप्यकजाजीनागमिशिगुग्गुलुलाक्षाकटुकादिशालापु -
ष्पधान्याककूष्माण्डसौकुमार्याश्वपर्णा: क्वाथघृततैललेह्य
विकाररूपाद्रिभर्जनमसधातुकार्श्यकारकामयघातका: । ७३

पटोलादिपञ्चदशत्रयोदशद्रव्यं यथायोगं चूर्णीकृतं रक्तपित्ता-
मयविनाशकम् । ७४

द्वादशत्रयोदशार्था: यथायोगं क्वाथोपयोग्या रक्तपित्तामय-
हारका: । ७५

तद्वत्तैलघृतलेह्यादि मधुसितायुतद्रव्यं रक्तामयविघातकम् । ७६

वाशादिपञ्चदश त्रयोदशाष्टादशार्था: यथायोगं सूक्ष्मचूर्ण-
भूता: समधु श्वासकासक्षयविकारघातका: । ७७

अष्टनवदशैकादशत्रयोदशद्रव्यं यथायोगं क्वाथोपयोगयोग्यं
श्वासकासक्षयहरम्[8] । ७८

---

[1] यास्या – Dr. B S [2] कुरुरक – Dr. B.S. [3] वहा—A.
[4] कपिता – Dr. B.S [5] हेम्कर— A. [6] करककुष्ट Dr. B.S
[7] दार्वीकनकाह्वयकान्तिकुटजक्षारक—A. [8] अष्टेत्यादि हरमित्यन्तं A.
कोशे न दृश्यते ।

पञ्चदश सप्तदश विंशतिपदार्थाः तैलघृतोपयोग्याः श्वास-
कासक्षयघातकाः । ७९

इत्यायुर्वेदस्य पञ्चदशः प्रश्नः समाप्तः

—o—

## अथ षोडशः प्रश्नः



तद्रसगुडादियुक्तलेह्यादयस्तथा । १

कपित्थादिद्वाविंशतिपदार्थाः हिध्मामयघातकाः । २

तावत्पदार्थास्तैलघृतलेहरूपाः हिध्मामयनिवर्तकाः । ३

तत्तद्भूतविशुद्धद्रव्यादनाजीर्णजन्यामयधातुशोषकारक-
यावद्द्रव्यनिवर्तकद्रव्यं तत्तद्धातुपोषकम् । ४

दशमूलादिपञ्चदशद्रव्यं यथायोगं रसधातुशोषकपोषकम् । ५

घनादिपञ्चदशद्रव्यं रक्तधातुशोषकपोषकम् । ६

रास्नादिपञ्चदशद्रव्यं यथायोगं धातुशोषकमांसधातुगतामय-
हारकम् । ७

वालुकादिचतुर्दशद्रव्यं मेदोधातुविकारनाशकम् । ८

निम्बादि[1] पञ्चदशद्रव्यं अस्थिधातुगतरोगप्रकोपहारकम् । ९

विद्रादिपञ्चदशद्रव्यं मज्जाधातुनिष्ठरोगप्रकोपहारकम्[2] । १०

जात्यादिषड्द्रव्यं यथायोगं चर्मधातुगतरोगप्रकोपहारकम् । ११

पवनभूतगुणाधिकद्रव्यादनाजीर्णजन्यामपित्तविषक्रिमिगत-
सिराग्निकाग्जातं छर्दिरोगहेतुकम् । १२

---

[1] निम्बादीति A कोशे न दृश्यते. [2] नैतत् A कोशे

तन्निवर्तकवह्निमूतगुणोपलम्भकयावद्द्रव्यादनं छर्द्यानयभेषजम् । १३

शठघनिजलजाजाजि[1]मुद्गपाठाकटुकमधुकपित्थशिवायुतामृता-
मरीच्येलाकार्पासचन्दनमाक्षिकजीरकलवङ्गत्वकेसरप्रियङ्गु-
शशियुतार्थाः चूर्णकाथतैललेह्यरूपाः छर्द्यामयनाशकाः । १४

त्वङ्मांसमेदोवर्धकाधिकरसविरसद्रव्यादनाजीर्णजन्यामपित्तविष-
क्रिमिप्रस्तसिराविकारकारकगुदाङ्कुरामयप्रकोपहारकद्रव्या-
दनं तत्तदामयावनाशकम् । १५

स्वर्जिकानिशावन्तीमुसलीशिरीषकणातुत्थजाजि(नि)वेण्वर्क-
स्नुग्भल्लातककरञ्जवकुलधात्रीविमीतकाभयायवानीबिल्व-
पुनर्नवाशिरिषलि[2] सैन्धव (ति) मरिचमूरण[3] चव्यजीरक
वज्रवल्लीमूर्वापामार्गकदशमूललवङ्गकेसर मुरगि[4] मोहा[5]
मीरुब्राह्मीघोषाकुष्ठहिंगुसैन्धवभार्ङ्गिरास्नामधूकवचाशिरी
षधातुमयूरकोशीरपाठा दुस्पृक्सिद्धार्थपलाण्डवः पदार्थाः
भूपरि[6]पक्वगन्धघृततैललेह्यरूपभूना गुदाङ्कुरामयहारकाः । १६

यावद्भूतविहितविरुद्धरसाधिकधातुवद्द्रव्यादनाजीर्णजाताम-
पित्तविषक्रिमिकारकद्रव्यविरुद्धयावद्द्रव्यादनं रसधातु-
सारातिसारनिवर्तकम् । १७

अतो[7] विषघनविरोषण[8] दिव्यपाठाभयाकुटजाजाज्यज-
मोदमोचरसधातुचिरिबिल्वतिन्दुकदाडिमपद्मफाल्गुनीमरि-
चधविकाजाजिकगुणितिनित्रणीयवशूर[9]ककपित्थाम्र चूत

[1] for जलाजा of the text—Dr. B.S. [2] शिरिषशालि—Dr. B.S
[3] पुराण C. [4] मुरङ्गि, or सुरङ्गि—Dr. B.S. [5] मोदा—Dr. B.S.
[6] भूपति—A & C. [7] अथो—Dr. B.S. [8] वरोषण A.
[9] चविकाजाजिकाङ्गुणितिन्त्रिणीयवशूक—Dr. B.S.

जम्बूविजयाबीजफेनुजीरकोलचव्यचित्रकवराम्लघुणप्रिया-
वत्सकबीजयष्टितृटिकैडर्यशरपुङ्खलशुनहिङ्गुधात्रीविभीतक-
ग्रन्थितलपोटक[1]तितीरसवद्द्रव्यवद्यावत्पदार्थाः चूर्णकाथ-
घृततैललेह्यरूपा अतिसारग्रहणीरोगनिवर्तकाः । १८

पृथिव्यादि[2] गुणाधिकत्वसमानाधिकरणस्वादुरसोपलम्भक
द्रव्यादनजात जीर्णामयनिवर्तकरजोगुणाधिकोपलम्भ-
काम्लरसवदम्बुभूतद्रव्यं अजीर्णामयनाशकम् । १९

पथ्याधात्र्यक्षपुनर्नवा हिङ्गुशरपुङ्खव्याघ्रीदुरालभपूगीफलत-
मालक्षाराम्लजम्बीरार्कम्नुहिशिग्रुपर्वकोग्रगन्धकरञ्जत्व-
दिराग्निश्रीपर्णीश्रीभन[3] जयाग्नेयाः चूर्णकाथलेहरूपाः
अजीर्णामयनिवर्तकाः । २०

अग्निभूतद्रव्याधिकत्वसमानाधिकरणाम्लरसोपलम्भकद्रव्यादन-
जाताजीर्णजातामरोगनिवर्तकं पार्थिवगुणाधिकस्वादुरस-
वद्द्रव्यम् । २१

विश्वदेवकुसुमकटुकणाग्निरसोनदीप्यककरञ्जपुनर्नवायवज-
जीरकहिङ्गमुस्तवत्सकवमुकपथ्या[4]शिग्रसुरगीजातिफल-
तलपोटकटकवर्बुरकुष्ठयावत्सरसवद्द्रव्यं चूर्णक्वाथकल्कादि-
विकारं सर्वाजीर्णामरोगनिवर्तकम् । २२

अम्बुपवनभूतत्वसमानाधिकरणरसोपलम्भकद्रव्यादनाजीर्णाम-
पित्तज्वरजन्यमन्दानिलरुङ्निवर्तकपवनभूताधिकसन्धु-
क्षणकर्मकारकतिक्तरसवद्द्रव्य अग्निमान्द्यामनिवर्तकम् । २३

---

[1] तिक्तरस—Dr B. S. [2] पृथिव्यादि. [3] श्रीफल—Dr. B. S.
[4] शिग्र—Dr. B. S.

पाठाकरञ्जानलशरपुङ्ख पुनर्नवानिम्बलशुनयवानीचरबन्धन[1]
दीप्यकजीरकबिल्वातिविषावचासैन्धवविश्वचव्यनैतल -
गन्ना[2]मृतातसी[3]भृङ्गकुबेराक्षलोध्रकवचामांसि-एलावताल-
पत्रिका[4] केमदारुलुक[5]ग्रन्थ्याग्नेयाः चूर्णकाथघृततैलले-
हरूपाः मन्दानलामयनिवर्तकाः । २४

गगनपवनभूतस्वसमानाधिकरणोपणरसोपलम्भकद्रव्यादनजाता-
जीर्णामपित्तविषरूपोपाधिकग्रहणीरोगहारकगगनभूताधिक-
गुणोपलम्भककटुरसवद्द्रव्यम् ग्रहणीरोगनिवर्तकम् । २५

आर्द्रकवत्सकतलपोटकचूतार्जुनवटाश्वत्थबिल्वबदरलशुनविश्व -
गाङ्गेरुकीनागवलचिञ्चाजमोदरसदाडिमकरञ्जवाशाशुक -
लोध्रवृद्धदारुशरपुङ्खमरीचदीप्यकजीरकलवङ्गकरुणाभीरु -
निम्बकुटजाद्याः चूर्णकाथलेहभृता ग्रहणीरुजापहाः । २६

अनलानिलगुणभूयिष्ठस्वसमानाधिकरणकषायरसोपलम्भकयाव-
द्रव्यादनजाताजीर्णपित्तविषक्रिमिगतसिराविकारजातसप्त-
धातुरसकारका गगनभूयिष्ठद्रव्यं विषूच्यामयनिवर्तकम् । २७

कट्वादि दशद्रव्यं चूर्णकाथभेषजं श्वासछर्द्यामयनिवारकम् । २८

चन्दनादिसप्तपदार्थाः चूर्णकाथोपयुक्ताः छर्द्यामयनिवारकाः । २९

स्वर्जिकादिद्वादशपदार्थाः धूपलेपकाथीकृताः गुदाङ्कुरामय-
हारकाः । ३०

---

[1] चर्मवन्धन—A. [2] चव्यानलराना or चवनतऽराना—Dr. B.S.
[3] युतांसि—C. [4] एलातालपत्रिका—Dr. B.S. [5] केशदारुलुक.

करञ्जाद्येकादशार्थाः धूपलेपकाथतैलोपयुक्ताः अर्शोरोग-
निवारकाः । ३१

दशमूलाद्येकविंशद्रव्यं धूपलेपकाथतैललेहरूपं सत् गुदाङ्कुरा-
मयहारकम् । ३२

भाङ्गर्यादि[1]द्वादशभेषजाः चूर्णकाथघृततैललेह्यरूपाः गुदाङ्कुरा-
मयहारकाः । ३३

अतिविषादिपञ्चदशपदार्थाः चूर्णकाथलेहविकारभूता अति-
सारविकारहारकाः । ३४

मरीच्याद्यष्टादशद्रव्यं तद्वदतिसारनिवर्तकम् । ३५

[2]निम्बादि दशद्रव्यं तद्वदतिसारनिवर्तकम् । ३६

पथ्यादित्रयोदशद्रव्यचूर्णकाथाभ्यां अजीर्णामयो निवर्तते । ३७

[3]आकन्दित्रयोदशपदार्थाः चूर्णकाथरूपाः अजीर्णामय-
हारकाः । ३८

विश्वादिदशद्रव्यं चूर्णकाथलेहरूपं सत् अजीर्णामरोग-
निवर्तकम् । ३९

मुस्तादिद्वादशद्रव्यं चूर्णकाथोपयुक्तं अजीर्णामयरोगनिवर्त-
कम् । ४०

[4]वेण्वादि पञ्चदशद्रव्यं चूर्णकाथघृततैलरूपं अग्निमान्द्या-
मयहारकम् । ४१

सैन्धवादिद्वादशद्रव्यं तद्वद्भेषजं मन्दाग्निरोगनिवर्तकम् । ४२

विश्वादि सप्तपदार्थाः काथरूपा [5]मन्दानलहारकाः । ४३

---

[1] भाज्यादि—A & C. [2] निम्बादि—A. [3] आर्द्रादि ?
[4] पाठादि ? [5] मन्दानिल—A & C.

आर्द्रकादिदशद्रव्यं क्वाथलेहरूपं ग्रहणीरोगनिवर्तकम् । ४४

लशुनादिद्वादशद्रव्यं चूर्णक्वाथलेहघृतरूपं मन्दानलरोग-
निवर्तकम् । ४५

एलादिषट्पदार्था चूर्णक्वाथविकारभूताः मन्दानलरोग-
निवर्तकाः । ४६

आयुष्कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥

विचार्य यत्नात्सर्वस्मान्नित्यं देहं निरीक्षयेत् ।
आ दशाहान्निरीक्ष्यैनं पथ्येनैव तु तं हरेत् ॥

न पीडयेदिन्द्रियाणि न च तान्यतिलालयेत् ।
त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ॥

वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः ।
चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ॥

वर्षादिषु च पित्तस्य श्लेष्मणश्शिशिरादिषु ॥

इत्यायुर्वेदस्य षोडशः प्रश्नः समाप्तः

— • —